बौद्ध-संस्कृत-ग्रन्थावली – २३

Buddhist Sanskrit Texts – No. 23

काश्मीरिककवि–क्षेमेन्द्रविरचिता

# अवदान-कल्पलता

## द्वितीयः खण्डः



*Buddhist Sanskrit Texts—No. 23*

# AVADĀNA-KALPALATĀ

OF

KṢEMENDRA

(Volume II)

*Edited by*

Dr. P. L. VAIDYA

PUBLISHED BY

THE MITHILA INSTITUTE

OF

Post-Graduate Studies and Research in Sanskrit Learning

Darbhanga

1959

बौद्ध-संस्कृत-ग्रन्थावली—२३

काश्मीरिककवि-क्षेमेन्द्रविरचिता

# अवदान-कल्पलता ।

द्वितीयः खण्डः ।

वैद्योपाह्वश्रीपरशुरामशर्मणा
संपादिता ।

मिथिलाविद्यापीठप्रधानेन प्रकाशिता ।

शकाब्दः १८८१ संवत् २०१५ ऐशवीयाब्दः १९५९

*Copies of the two Volumes of this work (not sold separately) may be had, postage paid, from your usual Book-seller or from the Director, Mithila Institute, Darbhanga, on pre-payment either in cash, Postal Order or M. O. of Rs. 20.00 for Ordinary edition and Rs. 25.00 for Library edition.*

*The entire cost of preparation and production of this Volume has been met out of a subvention kindly placed at the disposal of the Institute jointly by the Government of India (Ministry of Scientific Research and Cultural Affairs) and the State of Bihar*

**Printed by Laxmibai Narayan Chaudhari, at the Nirnaya Sagar Press, 26–28 Kolbhat Street, Bombay 2, and Published by Dr. P. L. Vaidya, for the Director, Mithila Institute, Darbhanga, Bihar.**

बोधिसत्त्वावदानकल्पलता ।

द्वितीयः खण्डः ।

# अनुक्रमणिका ।


| | | | |
|---|---|---|---|
| ४९ | षड्दन्तावदानम् (नोपलभ्यते) | ... | ३०५ |
| ५० | दशकर्मप्लुत्यवदानम् | ... | ३०५ |
| ५१ | रुक्मवत्यवदानम् | ... | ३१६ |
| ५२ | अदीनपुण्यावदानम् | ... | ३२० |
| ५३ | सुभाषितगवेष्यवदानम् | ... | ३२६ |
| ५४ | सत्त्वौषधावदानम् | ... | ३३२ |
| ५५ | सर्वंददावदानम् | ... | ३३४ |
| ५६ | गोपालनागदमनावदानम् | ... | ३३८ |
| ५७ | स्तूपावदानम् | ... | ३४१ |
| ५८ | पुण्यबलावदानम् | ... | ३४३ |
| ५९ | कुणालावदानम् | ... | ३४६ |
| ६० | नागकुमारावदानम् | ... | ३६८ |
| ६१ | कर्षकावदानम् | ... | ३७१ |
| ६२ | यशोदावदानम् | ... | ३७३ |
| ६३ | महाकाश्यपावदानम् | ... | ३८१ |
| ६४ | सुधनकिन्नर्यवदानम् | ... | ३८६ |
| ६५ | एकशृङ्गावदानम् | ... | ४११ |
| ६६ | कविकुमारावदानम् | ... | ४२१ |
| ६७ | संघरक्षितावदानम् | ... | ४२८ |
| ६८ | पद्मावत्यवदानम् | ... | ४३४ |
| ६९ | धर्मराजिकाप्रतिष्ठावदानम् | ... | ४४३ |
| ७० | माध्यन्तिकावदानम् | ... | ४४६ |
| ७१ | शाणवास्यवदानम् | ... | ४४७ |
| ७२ | उपगुप्तावदानम् | ... | ४४९ |
| ७३ | नागदूतप्रेषणावदानम् | ... | ४५४ |
| ७४ | पृथिवीप्रदानावदानम् | ... | ४५७ |
| ७५ | प्रतीत्यसमुत्पादावदानम् | ... | ४५८ |
| ७६ | विदुरावदानम् | ... | ४५९ |
| ७७ | कैनेयकावदानम् | ... | ४६१ |
| ७८ | शक्रच्यवनावदानम् | ... | ४६३ |
| ७९ | महेन्द्रसेनावदानम् | ... | ४६५ |

| | | | |
|---|---|---|---|
| ८० | सुभद्रावदानम् | ... | ४७० |
| ८१ | हेतूत्तमावदानम् | ... | ४७७ |
| ८२ | मारपूर्विकावदानम् | ... | ४७९ |
| ८३ | राहुलकर्मप्लुत्यवदानम् | ... | ४८२ |
| ८४ | मधुरस्वरावदानम् | ... | ४८५ |
| ८५ | हितैष्यवदानम् | ... | ४८९ |
| ८६ | कपिंजलावदानम् | ... | ४९२ |
| ८७ | पद्मकावदानम् | ... | ४९४ |
| ८८ | चित्तहस्तिशय्यातिपुत्रावदानम् | ... | ४९७ |
| ८९ | धर्मरुच्यवदानम् | ... | ५०३ |
| ९० | धनिकावदानम् | ... | ५१६ |
| ९१ | शिबिसुभाषितावदानम् | ... | ५१८ |
| ९२ | मैत्रकन्यकावदानम् | ... | ५२१ |
| ९३ | सुमागधावदानम् | ... | ५२६ |
| ९४ | यशोमित्रावदानम् | ... | ५३५ |
| ९५ | व्याघ्र्यवदानम् | ... | ५३७ |
| ९६ | हस्त्यवदानम् | ... | ५३९ |
| ९७ | कच्छपावदानम् | ... | ५४० |
| ९८ | तापसावदानम् | ... | ५४३ |
| ९९ | पद्मकावदानम् | ... | ५४४ |
| १०० | पुण्यप्रभासावदानम् | ... | ५४५ |
| १०१ | श्यामाकावदानम् | ... | ५४७ |
| १०२ | सिंहावदानम् | ... | ५५२ |
| १०३ | प्रियपिण्डावदानम् | ... | ५५४ |
| १०४ | शशकावदानम् | ... | ५५६ |
| १०५ | रैवतावदानम् | ... | ५५८ |
| १०६ | कनकवर्मावदानम् | ... | ५६१ |
| १०७ | शुद्धोदनावदानम् | ... | ५६३ |
| १०८ | जीमूतवाहनावदानम् | ... | ५६५ |
| | प्रणिधानम् | .. | ५९० |
| | विशेषनामसूची | ... | ५९१ |

## बौद्धसंस्कृतग्रन्थमालायां प्रकाश्यत्वेन संकल्पिता ग्रन्थाः ।

**१ नव धर्माः**

१ ललितविस्तरः ( प्रकाशितम् ) Rs. 10.00 and 12.50

२ समाधिराजसूत्रम् ( यन्त्रस्थम् )

३ लङ्कावतारसूत्रम्

४ अष्टसाहस्रिका प्रज्ञापारमिता आलोकव्याख्यासहिता ( यन्त्रस्था )

५ गण्डव्यूहसूत्रम्

६ सद्धर्मपुण्डरीकसूत्रम्

७ दशभूमिकसूत्रम्

८ सुवर्णप्रभाससूत्रम्

९ तथागतगुह्यकम्

**२ माध्यमिकमते–**

१० मध्यमकशास्त्रं नागार्जुनीयम्, आचार्यचन्द्रकीर्तिविरचितया प्रसन्नपदाख्य-व्याख्यया संवलितम्

११ शिक्षासमुच्चयः शान्तिदेवविरचितः ( यन्त्रस्थः )

१२ बोधिचर्यावतारः शान्तिदेवविरचितः प्रज्ञाकरमतिविरचितया पञ्जिकाख्य-व्याख्यया संवलितः

**३ योगाचारमते–**

१३ सूत्रालंकारः आचार्यासङ्गविरचितः

**४ विनयाः**

१४-१५ महावस्तु—लोकोत्तरवादिनां विनयः

१६ मूलसर्वास्तिवादिनां विनयः ( Gilgit Mss. )

**५ महायानसूत्रसंग्रहः**

१७ प्रथमः खण्डः—वज्रच्छेदिका, सुखावतीव्यूहः, कारण्डव्यूहः, राष्ट्रपालपरि-पृच्छा, अर्थविनिश्चयसूत्रं च

१८ द्वितीयः खण्डः—शालिस्तम्बसूत्रम्, प्रतीत्यसमुत्पादसूत्रम्, भैषज्यगुरुवैदूर्य-प्रभसूत्रम्, अन्येषां च सूत्राणां संग्रहः

## ६ अवदानसंग्रहः

१९ अवदानशतकम् ( प्रकाशितम् ) Rs. 10.00 and 12.50

२० दिव्यावदानम् ( प्रकाशितम् ) Rs. 16.00 and 20.00

२१ जातकमाला ( बोधिसत्त्वावदानमाला ) सुभाषितरत्नकरण्डककथा च, आर्य-शूरविरचिता ( प्रकाशिता ) Rs. 10.00 and 12.50

२२-२३ अवदानकल्पलता क्षेमेन्द्रविरचिता ( प्रकाशिता ) Rs. 20.00 and 25.00

## ७ प्रकीर्णग्रन्थाः

२४ महायानस्तोत्रसंग्रहः

२५ अश्वघोषग्रन्थाः—बुद्धचरितम्, सौन्दरनन्दम्

---

नमो रत्नत्रयाय ।

## [ ४९ एकोनपञ्चाशत्तमो नोपलभ्यते । ]

## ५० [१]दशकर्मप्लुत्यवदानम् ।

ये हेलोच्छलितप्रभावलहरीजाताद्भुतश्रेणयः D 3
सत्त्वोत्साहभुवः स्वभावविमलज्ञानप्रकाशाशयाः ।
आज्ञालेख्यलिपिं विधातृनृपतेः संसक्तकर्मावलीं
चित्रं तेऽपि न लङ्घयन्ति कुटिलां वेलामिवाम्भोधयः ॥ १ ॥
श्रावस्त्यां प्रेरितास्तद्वद्दुर्वृत्तैस्तीर्थिकाङ्गनाः ।
कीर्तिभङ्गोद्यताः शास्तुः सदेहा नरकेऽपतन् ॥ २ ॥
ततः पुण्यनदीसंघपरिक्षिप्तामलाम्भसि ।
सरस्यनवतप्ताख्ये रत्नसोपानसंचये ॥ ३ ॥
हेमाब्जपुञ्जकिञ्जल्कपिञ्जरीकृतषट्पदे ।
पद्मासनस्थो भगवान् भिक्षुभिः परिवारितः ॥ ४ ॥
सर्वज्ञः कर्मतन्त्रस्य दर्शयन्नविलङ्घ्यताम् । D 5
स्वकर्मप्लुतिवैचित्र्यं वक्तुं समुपचक्रमे ॥ ५ ॥
कर्माख्यानक्षणे तस्मिन् भगवान् भक्तवत्सलः ।
शारिपुत्रसमाह्वाने मौद्गल्यायनमादिशत् ॥ ६ ॥
सूच्या सूत्रेण संघाटीं कुर्वाणं रचनाचिताम् ।
स शारिपुत्रमासाद्य गृध्रकूटाचलाश्रमे ॥ ७ ॥
अङ्गुलीपञ्चकेनैव सूचीकर्म प्रभाववान् ।
विलम्बभीत्या कृत्वास्य तमभाषत सत्वरः ॥ ८ ॥
एह्येहि तूर्णं भगवान् सरस्यनवतप्तके ।
कर्मोपदेशं भिक्षूणां सर्वज्ञः कर्तुमुद्यतः ॥ ९ ॥
कर्मव्यग्रतया क्षिप्रं विलम्बं विदधासि चेत् ।
तन्महर्द्ध्या नयामि त्वां विपुलं पश्य मे बलम् ॥ १० ॥
इति तस्य वचः श्रुत्वा शारिपुत्रस्तमब्रवीत् ।
अचलं नय मे तावत्ततो जानामि ते बलम् ॥ ११ ॥
इत्युक्त्वा गृध्रकूटाद्रिशिखरे स बबन्ध तत् ।
मौद्गल्यायनकृष्टे च तस्मिन् गिरिरकम्पत ॥ १२ ॥
गिरिपातभयान्मेरौ शारिपुत्रो बबन्ध तत् । D 7
तेन कृष्टे ततोऽप्यस्मिन् विचचाल सुरालयः ॥ १३ ॥

१ Volume II of Bibliotheca Indica edition begins here.

शास्तुरासनहेमाब्जनाले मणिमये ततः ।
शारिपुत्रेण बद्धं तत् परस्याशक्यतां ययौ ॥ १४ ॥
ऋद्धिक्रमेण मौद्गल्यः शारिपुत्रेण निर्जितः ।
तस्मिन् पूर्वतरं प्राप्ते ययौ भगवतोऽन्तिकम् ॥ १५ ॥
तयोर्महर्द्धिविक्षोभान्नागौ नन्दोपनन्दकौ ।
पातालादुत्थितौ भीत्या भगवन्तं प्रणेमतुः ॥ १६ ॥
जयिनः शारिपुत्रस्य प्रभावमथ भिक्षुभिः ।
पृष्टो बभाषे भगवान् प्राग्वृत्तं ज्ञानलोचनः ॥ १७ ॥
अभूतां शङ्खलिखितौ वाराणस्यामृषी पुरा ।
वर्षावर्षविवादेन संघर्षोऽभूत्तयोर्मिथः ॥ १८ ॥
कदाचिदथ शङ्खेन पद्भ्यां स्पृष्टजटः क्रुधा ।
लिखितः प्राह तं मूर्धभेदः सूर्योदयेऽस्तु ते ॥ १९ ॥
शङ्खोऽवदन्मद्वचसा नोदेष्यति दिवाकरः ।
इत्युक्ते तेन सुचिरं सान्धकारमभूज्जगत् ॥ २० ॥
D 9 कल्पितं लिखितेनास्य कृपया मृण्मयं शिरः ।
सूर्योदयेऽथ सहसा शतधा वसुधां ययौ ॥ २१ ॥
जन्मान्तरे स शङ्खोऽद्य मौद्गल्यायनतां गतः ।
लिखितः शारिपुत्रोऽपि तद्विजेता तदाप्यभूत् ॥ २२ ॥
सर्वज्ञेनेति कथिते वृत्तान्ते प्राक्तने तयोः ।
तत्कर्मतन्त्रवैचित्र्यं पप्रच्छुर्मुनयः पुनः ॥ २३ ॥
भगवन् कर्मणां केषामद्भुतोऽयं स्फुटोद्गमः ।
तव ज्ञानमयस्यापि येन संस्पृश्यते वपुः ॥ २४ ॥
पादाङ्गुष्ठः क्षतः कस्मात्तव पाषाणधारया ।
विद्धः खदिरसूच्यायं सव्रणश्चरणश्च किम् ॥ २५ ॥
शून्यपात्रः किमप्राप्य भिक्षामद्यागतो भवान् ।
मिथ्याक्षिप्तोऽसि सुन्दर्या किं प्रव्राजिकया तया ॥ २६ ॥
वञ्चा माणविका किं ते सापवादाभवन्मृषा ।
भुक्ताः किं कोद्रवयवा वैरं तेषु त्वया पुरा ॥ २७ ॥
D 11 वर्षाणि षड् भगवतः किमभूद्दुष्करक्रिया ।
प्रस्कन्दिव्याधिना स्पृष्टं कस्माच्च भवतो वपुः ॥ २८ ॥
शिरोर्तिरभवत्किं ते तस्मिन् शाक्यकुलक्षये ।
वायुना स्पृष्टः खेदोऽभूत्कस्माद्दिव्यतनोस्तव ॥ २९ ॥

इति तैर्भगवान् पृष्टस्तानभाषत सस्मितः ।
श्रूयतामनवच्छिन्नं वैचित्र्यं कर्मसंततेः ॥ ३० ॥
गच्छन्ति गच्छतः पश्चात् पुरस्तिष्ठन्ति तिष्ठतः ।
सङ्कृला इव संनद्धाः कर्मबन्धाः शरीरिणाम् ॥ ३१ ॥
गाहन्ते गहनानि दिक्षु विचरन्त्युल्लङ्घयन्त्यम्बुधिम्
आरोहन्ति गिरीश्वरानभिसरन्त्याक्रम्य शक्रालयम् ।
पातालं प्रविशन्त्यलोकविषयं कर्माणि कालोर्मिवत्
नास्त्येषामनिशं जनानुसरणे मार्गावरोधः क्वचित् ॥ ३२ ॥
दीर्घा कर्मलता नवेव सततं व्याप्ता पुराणैः फलैः
साश्चर्या सहचारिणी तनुभृतां तत्राप्यलं निश्चला ।
याकृष्टा परिवेष्टिता विघटिता प्रोत्पाटिता मोटिता
निर्घृष्टा कणशः कृतापि कुशलैर्नैव प्रयाति क्षयम् ॥ ३३ ॥
कान्तः काये वहति मलिनं दोषबिन्दुं यदिन्दुः
क्रूराकारः किरणजटिलं यन्मणिं कृष्णसर्पः । D 13
नानारूपैः शबलचरितं देहिनां दर्शयन्ती
सेयं चित्रक्रमपरिणता कर्मनिर्माणलेखा ॥ ३४ ॥

[१] अभूद्गृहपतिः पूर्वं कर्पटे खर्वटाभिधः ।
अप्रमेयधनोत्पत्तिर्बहुपुत्रकलत्रवान् ॥ ३५ ॥
अविभक्तधनस्तस्य भ्राता वैमातृकः शिशुः ।
मुग्धनामा गृहे तस्थौ वात्सल्यात्तेन पालितः ॥ ३६ ॥
कदाचित्तं गृहपतिं कालिका नाम वल्लभा ।
उवाच कुटिला स्वैरं गृहचिन्ताकथान्तरे ॥ ३७ ॥
आर्यपुत्र त्वया गेहे सरलेन प्रमादिना ।
मोहादसोदरो भ्राता विषवृक्षो विवर्धितः ॥ ३८ ॥
एकोऽपि बहुपुत्रस्य व्ययिनस्तव निर्व्ययः ।
अविभक्तधनादर्धं न्यायेनैष हरिष्यति ॥ ३९ ॥
अस्य व्याधेरिवैतस्य वध एवाद्यमौषधम् ।
बन्धुच्छेदादपि नृणां धनच्छेदो हि दुःसहः ॥ ४० ॥
गम्भीरायव्ययारम्भसंसारोचितजन्मनाम् । D 15
विपन्निपातो महतां द्विपेन्द्रपतनोपमः ॥ ४१ ॥
इति तस्या वचः श्रुत्वा क्रूरमुत्कम्पिताशयः ।
स तामुवाच प्रणयात्स्नेहपाशवशीकृतः ॥ ४२ ॥

हितमुक्तं त्वया तावत्किं त्वेतदतिपातकम् ।
सहजं कश्छिनत्त्यङ्गं बहिरङ्गधनाप्तये ॥ ४३ ॥
न युक्तमर्थशक्तानामर्थार्थं पापचिन्तनम् ।
क्षणेनायान्ति वित्तानि रक्षितान्यपि संक्षयम् ॥ ४४ ॥
मुहुः कर्मोर्मिसंरम्भसंभवक्षोभविभ्रमाः ।
गच्छन्त्यः केन वार्यन्ते शैलकुल्या इव श्रियः ॥ ४५ ॥
तस्मान्न मे मनः सुभ्रु भ्रातृद्रोहे प्रवर्तते ।
वित्तभ्रंशेऽस्ति मे वृत्तिर्वृत्तभ्रंशे तु का गतिः ॥ ४६ ॥
इति तस्य ब्रुवाणस्य नानायुक्तिनिदर्शनैः ।
शनैः सा विदधे पत्युः पातकाभिमुखं मनः ॥ ४७ ॥
वर्धितान् बहुभिः स्नेहैः सहजान् मूर्धजानिव ।
छित्वा हरन्ति सहसा क्षुरधाराखराः स्त्रियः ॥ ४८ ॥

D 17 वक्रा परं क्रूरतरक्रियासु
प्रवर्तनायैव दृढाभियोगा ।
पापा निपाताय भवत्यवश्यं
मोहाहतानां युवतिर्मतिश्च ॥ ४९ ॥

बन्धुमित्रविरक्तानां स्वसुखक्षीबचेतसाम् ।
श्रीयुतानामिव नतिः स्त्रीजितानां मतिः कुतः ॥ ५० ॥
अथ भ्रातरमाहूय नीत्वा पुष्पोच्चयाय सः ।
न्यवधीदश्रुताक्रन्दमश्मना विजने वने ॥ ५१ ॥
अहमेव स तत्पापं भुक्त्वा पूर्वेषु जन्मसु ।
वहाम्यद्यापि शेषांशमङ्गुष्ठक्षतलक्षणम् ॥ ५२ ॥
[ २ ] सार्थवाहोऽर्थदत्ताख्यः पूर्णप्रवहणः पुरा ।
पवनस्यानुकूल्येन रत्नद्वीपात्समाययौ ॥ ५३ ॥
द्वितीयः सार्थवाहोऽथ नष्टार्थस्तं समाश्रितः ।
द्वेषात्प्रवहणे छिद्रं प्रच्छन्नं कर्तुमुद्ययौ ॥ ५४ ॥
अथ दृष्टोऽर्थदत्तेन वार्यमाणः पुनः पुनः ।
प्राप्तप्रयत्नो द्वेषान्धः क्षणं न विरराम सः ॥ ५५ ॥
D 19 ततः सार्थपतिः कोपात्तं मात्सर्यविमोहितम् ।
तीव्रशक्तिप्रहारेण चकार गतजीवितम् ॥ ५६ ॥
अहं स तद्वधात्पापफलं भुक्त्वान्यजन्मसु ।
वहाम्यद्यापि शेषांशं चरणे खदिरव्रणम् ॥ ५७ ॥

[ ३ ] प्रत्येकबुद्धः पिण्डाय पात्रपाणिर्दयार्द्रधीः ।
विवेश कामनगरीमुपारिष्टाभिधः पुरा ॥ ५८ ॥
संपूर्णपात्रमालोक्य तस्य विद्वेषदूषितः ।
युवा चपलको नाम पाणिनापातयद्भुवि ॥ ५९ ॥
अहं स पापं तद्भक्तच्छेदोत्थं बहुजन्मसु ।
भुक्त्वापि फलशेषेण प्रयातः शून्यपात्रताम् ॥ ६० ॥

[ ४ ] वसिष्ठाख्यः पुरार्हत्त्वं प्राप्तश्चित्तप्रसादवान् ।
उवास प्रशमारामे विहारे पौरकल्पिते ॥ ६१ ॥
भ्राता प्रव्रजितस्तस्य भरद्वाजः सदोदितम् ।
विलोक्य जनसत्कारं ययौ द्वेषाग्नितप्तताम् ॥ ६२ ॥
गुणिनां मानमालोक्य प्रयत्नं तद्विनाशने ।
जनः करोति न त्वात्मगुणाधानसमुद्यमे ॥ ६३ ॥
महार्हवस्त्रयुगलं भ्रात्रे भक्तजनार्पितम् । D 21
तस्मै वसिष्ठः प्रददौ प्रीत्या सरलमानसः ॥ ६४ ॥
तदादाय गुणद्वेषी न वैराद्विरराम सः ।
नोपकारैर्न वा प्रीत्या निजतां याति दुर्जनः ॥ ६५ ॥
एकान्ते स समाहूय विहारपरिचारिकाम् ।
दत्वास्यै वस्त्रयुगलं जगाद कृतसत्कृतिः ॥ ६६ ॥
इदं त्वया वस्त्रयुगं परिधाय सुमध्यमे ।
वसिष्ठेनार्पितमिति प्रश्ने वाच्यः शनैर्जनः ॥ ६७ ॥
इति स्वीकृत्य तेनोक्ता तदादिष्टं चकार सा ।
येनाभवद्वसिष्ठस्य जनो विप्लवशङ्कितः ॥ ६८ ॥
शीलवैकल्यवादेन सोऽथ पौरैरपूजितः ।
दूरं ययौ महान्तो हि सत्कारभ्रंशभीरवः ॥ ६९ ॥
सोऽहमार्यापवादेन भरद्वाजोऽन्यजन्मसु ।
भुक्त्वाप्यपुण्यं तच्छेषात्सुन्दर्याद्य मृषार्दितः ॥ ७० ॥
ब्राह्मणेनेर्ष्यया पूर्वं वाराणस्यां मया मुनेः ।
दुर्वादेन हता कीर्तिः पञ्चाभिज्ञस्य धीमतः ॥ ७१ ॥

[ ५ ] वाराणस्यामभूत्पूर्वं भद्रा नाम वरानना । D 23
वेश्या यशःपताकेव कान्ता कुसुमधन्वनः ॥ ७२ ॥
तां कदाचिन्मृणालाख्यो विटः कुटिलचेष्टितः ।
दृष्ट्वा तस्यै ददौ रात्रिभोगायांशुकभूषणम् ॥ ७३ ॥

ततस्तरलरागायाः संध्यायाः संगमोन्मुखे ।
गगनाङ्गणपर्यन्ते लम्बमाने दिवाकरे ॥ ७४ ॥
गत्वा स्वभवनं भद्रा पुष्पांशुकविभूषणैः ।
लावण्याभरणा चक्रे पुनरुक्तं प्रसाधनम् ॥ ७५ ॥

अलक्तके पादतलावसक्ते
कण्ठावलम्बिन्यपि तारहारे ।
कार्यार्थिनी दर्पणसंमुखी सा
चकार वेश्याचरितं यथार्थम् ॥ ७६ ॥
कण्ठेऽन्यदन्यद्वदनेऽन्यदोष्ठे
बभार तन्वी हृदये तथान्यत् ।
सा भूषणं लोभनमेव पुंसां
मूर्तं स्वकर्तव्यमिवातिचित्रम् ॥ ७७ ॥
D 25 कलिततरुणरागा साङ्गरागा बभौ सा
तिमिरशबलसंध्येवोल्लसद्धूपधूमैः ।
मनसिजजयकीर्तिं मूर्तिमाद्यामिवेन्दो-
रलकतिलकलेखां लीलया सूत्रयन्ती ॥ ७८ ॥

ततः प्रविश्य त्वरिता दासी मकरिकाभिधा ।
तामूचे क्षणसंगार्थी बहिरास्ते युवा नवः ॥ ७९ ॥
कार्षापणानां तृणवद्द्वितीयं शतपञ्चकम् ।
प्रविश्येव विनिर्याति सोऽयं ते निधिरागतः ॥ ८० ॥
प्रभूतद्रविणत्यागी व्यग्रत्वादचिरस्थितिः ।
छन्नकामः क्षमी कामी सुभगे लभ्यते कुतः ॥ ८१ ॥
इति तस्या वचः श्रुत्वा भद्रा प्रोवाच सस्मिता ।
क्षणं दोलायमानेव मध्ये दाक्षिण्यलोभयोः ॥ ८२ ॥
कथं रथ्याङ्गनेवाहमन्यस्मादात्तवेतना ।
गच्छामि प्रार्थितान्यस्य तत्क्षणोत्तानपाणिताम् ॥ ८३ ॥
प्रपाणामिव सर्वस्य स्वाधीनानामपि क्षणम् ।
पूर्वसेवा वृता येन स स्वामी वेशयोषिताम् ॥ ८४ ॥
D 27 एकैवेयं मृणालेन क्रीता रात्रिः किमुच्यते ।
परः प्रातः समायातु नवारम्भाः सदा वयम् ॥ ८५ ॥
इत्युक्ता भद्रया क्षुद्रा मधुलुब्धेव सा परम् ।
सक्ता नवनवास्वादे कुपिता तामभाषत ॥ ८६ ॥

न गतः प्रातरागन्ता प्राप्तः संत्यज्यते यदि ।
भाग्यैर्भवति वेश्यानां वणिजां च बहुक्रयः ॥ ८७ ॥
इतः किंचिदितः किंचिच्चिन्वन्तीनां दिवानिशम् ।
वेश्यानां पौरुषो लोभः कुसुमावचयोपमः ॥ ८८ ॥
न धर्माय न कामाय धनायैव प्रसाध्यते ।
वेश्या याचकविद्येव बहुप्रणयिनी सदा ॥ ८९ ॥
नायात्यशुचितां वेश्या व्रतमस्या न लुप्यते ।
भजते बहुसङ्गेन प्रत्युताभ्यर्थनीयताम् ॥ ९० ॥
निर्यान्त्यन्ये विशन्त्यन्ये प्रतीक्षन्ते बहिः परे ।
यस्याः सा शोभते वेश्या सभा भूमिपतेरिव ॥ ९१ ॥
दौर्भाग्यं पण्यकामिन्याः किमन्यन्नास्त्यतोऽधिकम् ।
तुलेव क्षीणा वणिजः शून्याः सीदन्ति यद्गृहे ॥ ९२ ॥
अभाग्यैर्ग्राहकाभावे गणिका शून्यशायिनी । D 29
मिथ्या वर्णयति प्रातः कामुकैर्द्वारभञ्जनम् ॥ ९३ ॥
सद्यःक्रयपरित्यागा दूरवर्तिप्रतीक्षया ।
माला इवाशु शुष्यन्ति वेश्याः पण्यप्रसारके ॥ ९४ ॥
एष कौतुकमात्रार्थी कार्यव्यग्रो बहुप्रदः ।
प्रविश्यैव विनिर्याति का क्षतिर्गृह्यतां धनम् ॥ ९५ ॥
श्रुत्वैतत्स्वहितं भद्रा तथेति प्रत्यपद्यत ।
लोभः स्वभावो वेश्यानामौचित्यं जनरञ्जनम् ॥ ९६ ॥
क्षम्यतां क्षणमत्रैव नाहं सज्जप्रसाधना ।
[ विससर्ज मृणालाय दासीं संदेशवादिनीम् ॥ ९७ ॥
क्षणं सुन्दरकाख्येन बहुदानेन कामिना ।
सा पद्मिनी गजेनेव भुक्ता व्यालोलतां ययौ ॥ ९८ ॥
ततस्तस्मिन् गते दन्तच्छेदोच्छिष्टरदच्छदा ।
निर्दयालिङ्गनैस्तेन नीता निर्माल्यतां क्षणात् ] ॥ ९९ ॥
विससर्ज मृणालाय पुनरात्तप्रसाधना ।
सा सखीं गूढविद्वेषां तूर्णमागम्यतामिति ॥ १०० ॥
ज्ञात्वा मृणालस्तद्वृत्तं पैशुन्यात्कथितं तया । D 31
इहैवायातु भद्रेति गूढकोपः समभ्यधात् ॥ १०१ ॥
ततः सा प्राप्तसंदेशा सौरभाकृष्टषट्पदा ।
मृणालजुष्टमुद्यानं प्रययौ फुल्लपादपम् ॥ १०२ ॥

तां दृष्ट्वैव समायातां रागद्वेषविषोत्कटः।
संसार इव साकारः सविकारो बभूव सः॥ १०३॥
सोऽचिन्तयच्चपलया मदर्थमुपकल्पितम्।
कृतमन्योपभोगेन लोभलुप्तं प्रसाधनम्॥ १०४॥
नखोल्लेखैर्वक्रैः कुटिलचरितं हन्त लिखितं
वहन्ती प्रत्यग्रं निजमिव समग्रं स्तनतटे।
विटोच्छिष्टक्लिष्टाधरदलरुचिः क्षामवदना
भुजंगी सर्वाङ्गं विषमविषमेषा दिशति मे॥ १०५॥
क्षणं विचिन्त्येति पृथुप्रकोपः
कृशानुधूमोद्गमविभ्रमेण।
भ्रुवोर्विकारेण स कालवक्त्रः
प्रोवाच तां साध्वससंनिरुद्धाम्॥ १०६॥
D 33 क्षणेन वेश्या बहुसंगता या
गृह्णाति सा किं परवित्तमादौ।
मदर्थमेवाहित एष वेशः
कृतस्त्वया स्वेदकणावशेषः॥ १०७॥
इति ब्रुवाणः सुतनोः प्रकम्प-
विलोलकाञ्च्यास्तरलस्वनेन।
प्रसीद बालामबलामवध्यां
रक्षेति दैन्यादिव याच्यमानः॥ १०८॥
लताभिरप्याकुलभृङ्गमाला-
विराविणीभिर्दययेव दूरात्।
निवार्यमाणः प्रणताननाभिः
समन्ततः पल्लवपाणिकम्पैः॥ १०९॥
घोराकृतिर्व्याघ्र इवाघृणोऽसौ
त्रासावसन्नाङ्गलतां कुरङ्गीम्।
हत्वा नृशंसस्तरलायताक्षीं
रक्ताक्तशस्त्रः प्रययौ जवेन॥ ११०॥
D 35 तेषामकार्यं किमिवास्ति येषां
क्रोधान्धरुद्धानि विलोचनानि।
दयादरिद्राणि मनांसि नित्यं
नैर्घृण्यघोराणि च चेष्टितानि॥ १११॥

पापेन भद्रा विजने हतेति
कोलाहले तत्र कृतेऽथ दास्या ।
जनाभिसारे सुरुचेर्विवेश
प्रत्येकबुद्धस्य स काननान्तम् ॥ ११२ ॥

धृत्वा तदग्रे रुधिरार्द्रशस्त्रं
तस्मिन् प्रविष्टे जनतान्तरालम् ।
पौरैरपापोऽपि गृहीतचिह्नैः
प्रत्येकबुद्धः सहसा गृहीतः ॥ ११३ ॥

नीतेऽथ तस्मिन् नृपशासनेन
क्रूरापराधोचितवध्यभूमिम् ।
जातानुतापः प्रसभं मृणालः
पापं मयैतत्कृतमित्युवाच ॥ ११४ ॥

मुक्ते ततस्तद्वचसा विचार्य D 37
प्रत्येकबुद्धे प्रणिपत्य राज्ञा ।
रसज्ञतां दुःसहशासनस्य
नीतो मृणालः कुकृतोचितस्य ॥ ११५ ॥

अहं स पापं बहुजन्मलक्षै-
र्भुक्त्वा तदुग्रं नरकान्तरेषु ।
अद्यापि तत्कर्मफलावशेषात्
मिथ्यैव तीर्थाङ्गनयाभियुक्तः ॥ ११६ ॥

[६] बन्धुमत्यां पुरि पुरा विपश्यी भगवान् जिनः ।
भोगैरभ्यर्चितः पौरैस्तस्थौ भिक्षुगणैर्वृतः ॥ ११७ ॥

पूज्यमानं तमालोक्य ब्राह्मणो मठराभिधः ।
उवाच पौरान् विशिखा भोगयोग्या न भिक्षवः ॥ ११८ ॥

पुराणैः कोद्रवयवैर्भोज्यमेषां विधीयताम् ।
न मुण्डकानां विकटं दिव्याहारार्हमाननम् ॥ ११९ ॥

इति वाक्यात्स विप्रोऽहं तत्पापं बहुजन्मसु ।
भुक्त्वाद्य कोद्रवयवाहारः शेषेण कर्मणः ॥ १२० ॥

[७] यदाहमभवं पूर्वमुत्तरो नाम माणवः । D 39
पुंगलस्यापवादेन मयात्तमशुभं तदा ॥ १२१ ॥

षड्वर्षाण्यधुना तेन कर्मणा दुष्करक्रिया।
चरितं न क्षणाद्बोधेर्न प्राप्तं त्वधिकं ततः॥ १२२॥

[८] पुराभवद्गृहपतिर्धनवान्नाम कर्वटे।
श्रीमान्नाम सुतस्तस्य बभूवास्वस्थविग्रहः॥ १२३॥

वैद्यस्तिक्तमुखो नाम तं बहुद्रविणाशया।
स्वास्थ्यं निनाय तत्पित्रा दत्तं चास्मै न किंचन॥ १२४॥

कालेनातुरतां यातः स्वास्थ्यं तेन पुनः पुनः।
स नीतस्तत्पितुः किंचित्प्राप्तं न त्वार्तिभाषितम्॥ १२५॥

अमर्षज्वरसंतप्तस्तृष्णातरलितः श्वसन्।
सोऽचिन्तयद्भिषग्दुःखादातुरेणापि लँङ्घितः॥ १२६॥

अहो बताहं धूर्तेन वाहितः सरलाशयः।
किं करोम्यधुना हस्ताद्गतो मे निधिरातुरः॥ १२७॥

कटुकौषधवद्वैद्यः पूर्वमार्तस्य संमतः।
चिकित्सितातुरः पश्चात्स्मृतोऽपि मुखकूणनम्॥ १२८॥

D 41 सिद्धार्थस्येव धनवान् उत्तीर्णस्येव नाविकः।
निःशेषव्याधिमुक्तस्य वैद्यः कस्योपयुज्यते॥ १२९॥

सपादपतनैर्मानैरार्तैराराध्यते परम्।
पश्चात्स कीर्तिते नाम्नि स्वस्थैः फूत्क्रियते भिषक्॥ १३०॥

बन्धाल्लुब्धस्य हरिणश्चौरो राज्ञश्च निर्गतः।
पुण्यैः स्वस्थश्च वैद्यस्य पुनः पतति गोचरे॥ १३१॥

इति चिन्तयतस्तस्य सततं परिशुष्यतः।
स वैद्यमिव साकोपं पुनर्व्याधिमवाप्तवान्॥ १३२॥

प्रच्छन्नमन्युस्तस्याथ वैद्यः सद्योविनाशनम्।
ददौ विरुद्धसंयोगादन्त्रशातनमौषधम्॥ १३३॥

तस्यान्त्राणि व्यशीर्यन्त तद्दत्तापथ्यपायिनः।
किं न कुर्वन्ति लोभान्धाः पातकश्वभ्रपातिनः॥ १३४॥

वैद्योऽहमेव तत्पापं भुक्त्वा जन्मशतायुतैः।
अद्यापि कर्मशेषेण प्रस्कन्दिव्याधिलेशवान्॥ १३५॥

[९] पुरा मत्स्यौ महाकायावाकृष्टौ मत्स्यजीविभिः।
जहर्ष छिद्यमानाङ्गौ दृष्ट्वा कैवर्तदारकः॥ १३६॥

D 43

सोऽहं तत्परितोषात्तं पापं भुक्त्वान्यजन्मसु ।
तस्मिन् विनाशे शाक्यानां क्षणं स्पृष्टः शिरोरुजा ॥ १३७ ॥

[१०] पुरा जानपदो मल्लः प्रीतिमल्लं बलाभिधम् ।
निपात्य युद्धे व्याजेन पृष्ठमस्य द्विधाकरोत् ॥ १३८

सोऽहं तत्पातकं भुक्त्वा विपुलं बहुजन्मसु ।
अद्यापि वातशूलेन पृष्ठे कृतपदः क्षणम् ॥ १३९ ॥

इति संबुद्धबोधेर्मे निर्दोषस्यापि विग्रहे ।
कर्मपङ्कावशेषाङ्का निपेतुः क्लेशविप्रुषः ॥ १४० ॥

जन्मोत्सवेषु निधनेषु च संनिबद्धा
मालेव कर्मसरणिः शबला शरीरे ।
पुंसामियं प्रणयिनी सुखदुःखसीम्नि
भुक्तोज्झितापि विदधात्यधिवासशेषम् ॥ १४१ ॥

इति श्रुत्वा भगवता कथितं सर्वभिक्षवः ।
मेनिरे कर्मवृत्तानामनतिक्रमणीयताम् ॥ १४२ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
दशकर्मप्लुत्यवदानं नाम पञ्चाशत्तमः पल्लवः ॥



## ५१ रुक्मवत्यवदानम् ।

D 45 आर्तत्राणधियां दयाप्रणयिनां प्राणप्रवाहोत्सवे
शस्त्रैस्तीक्ष्णतरैः क्षतानि पुलकालंकारलीलाजुषाम् ।
लीलाक्षीश्रवणोत्पलाहतितुलां येषां लभन्ते तनौ
तेषां कैर्वचनैरुदारचरितं बाल्योचितैरुच्यते ॥ १ ॥

गुह्यकैवर्तदरदौ विनीय भगवान् पुरा ।
देशादन्तर्हितस्तस्माज्जगामान्यत्तपोवनम् ॥ २ ॥

तत्र सेवासमायातस्तस्य देवः शचीपतिः ।
स्मितचन्द्रोदयं वक्त्रे दृष्ट्वा पप्रच्छ कारणम् ॥ ३ ॥

कौतुकप्रणयात्तेन संपृष्टः स्मितकारणम् ।
तमुवाच वनान्तेऽस्मिन् पूर्ववृत्तं स्मृतं मया ॥ ४ ॥

D 47 स्मरणानुभवादेतत्स्मितं मे न त्वकारणम् ।
इत्युक्त्वा भगवान् पूर्ववृत्तं वक्तुं प्रचक्रमे ॥ ५ ॥

नगर्यामुत्पलावत्यां दानशीलदयान्विता ।
ख्याता रुक्मवती नाम पौरमुख्याङ्गनाभवत् ॥ ६ ॥

सा कदाचित्क्षुधाक्रान्तां प्रसूतां दुर्गताङ्गनाम् ।
यातुधानीमिवापश्यद्बालकं भोक्तुमुत्सुकाम् ॥ ७ ॥

तां दृष्ट्वा करुणाक्रान्ता सा क्षणं समचिन्तयत् ।
अहो स्वदेहस्नेहेन मतिः पापे प्रवर्तते ॥ ८ ॥

अस्या भोजनमाहर्तुं व्रजामि स्वगृहं यदि ।
तदियं क्षुत्परिक्षामा भक्षयत्येव दारकम् ॥ ९ ॥

अथवा शिशुमादाय यदि गच्छामि मन्दिरम् ।
तदेषा कृशतां याता सद्यस्त्यजति जीवितम् ॥ १० ॥

इति संचिन्त्य दयया तस्मिन्नुभयसंशये ।
जगत्संतारणायैव प्रणिधानं विधाय सा ॥ ११ ॥

छित्त्वा तयोपनीतेन शितशस्त्रेण निश्चला ।
निजं स्तनयुगं तस्यै ददौ जीवितधारणम् ॥ १२ ॥

D 49 त्रैलोक्यस्पृशि साश्चर्ये तस्या यशसि विश्रुते ।
विप्ररूपेण शक्रेण ततः पृष्टा समेत्य सा ॥ १३ ॥

अपि ते स्तनदानेन मनो विकृतिमाययौ ।
इति पृष्टा सती सत्यवादिनी तं जगाद सा ॥ १४ ॥

यदि मे नाभवत्कश्चिद्विकारांशः स्तनार्पणे ।
तेन सत्येन सहसा स्त्रीत्वं तावन्निवर्तताम् ॥ १५ ॥
इत्युक्तमात्रे स्त्रीरूपं सा त्यक्त्वा सत्यशालिनी ।
सर्वलक्षणसंपन्नं पुरुषत्वं समाययौ ॥ १६ ॥
नगर्यामुत्पलावत्यामस्मिन्नवसरे नृपः ।
उत्पलाक्षः समाप्तायुर्व्याधियोगाद् व्यपद्यत ॥ १७ ॥
लक्षणज्ञैरथाभ्येत्य प्रवरैर्वृद्धमन्त्रिभिः ।
सद्यः संप्राप्तपुंस्त्वोऽसौ रुक्मवानभ्यषिच्यत ॥ १८ ॥
स राज्यं राजमानश्रीः कृत्वा धर्मधनश्चिरम् ।
तनुं तत्याज कालेन स्थायिनो न हि देहिनः ॥ १९ ॥
तत्रैव श्रेष्ठिनः सूनुः सोऽभूत्सत्त्ववराभिधः ।
निर्व्याजोर्जितदानेषु जन्माभ्यस्तेषु सादरः ॥ २० ॥
सर्वभूतार्तिचिन्तासु स सदा न्यस्तमानसः । D 51
दुःसहं पक्षिणामेव क्षुद्दुःखं समचिन्तयत् ॥ २१ ॥
स श्मशानवनं गत्वा क्षुरेणोल्लिख्य विग्रहम् ।
उत्तानशायी प्रददौ तनुं क्रव्यादपक्षिणाम् ॥ २२ ॥
उच्चैर्गतिर्विहंगोऽस्य दक्षिणं नयनं शनैः ।
उत्पाट्योत्पाट्य तुण्डेन प्रोत्ससर्ज पुनः पुनः ॥ २३ ॥
धैर्यनिश्चलसर्वाङ्गः स दृष्ट्वा विस्मितं खगम् ।
उवाच भुङ्क्ष्व निःशङ्कं नैव त्वां वारयाम्यहम् ॥ २४ ॥
निःसारविरसः कायः सापायोऽयं क्षणक्षयी ।
परोपकारलेशेन याति संसारसारताम् ॥ २५ ॥
क्लेदस्यन्दिनि निन्दिते प्रतिपदं श्वासक्षणस्यन्दिनि
स्नेहः कोऽयमपायधाम्नि मलिने मिथ्याशरीरे नृणाम् ।
एकैव स्पृहणीयतास्य यदिदं पुण्यैः क्वचित्कस्यचित्
किंचिद्वीक्ष्य कदाचिदार्तिसमये त्राणाय संनह्यति ॥ २६ ॥
इति तस्य ब्रुवाणस्य क्षुत्क्षामैः पक्षिभिः क्षणात् । D 53
भक्ष्यमाणस्य विक्षिप्य नीतः कायोऽस्थिशेषताम् ॥ २७ ॥
महाशालकुलस्याथ ब्राह्मणस्य स पुत्रताम् ।
यातः सत्यव्रतो नाम बभूव जनसंमतः ॥ २८ ॥
अवाप्ताखिलविद्यस्य करुणासक्तचेतसः ।
तस्य शान्तिरतस्याभूद्विवाहविमुखं मनः ॥ २९ ॥

कुले जन्म गुणावाप्तिर्विवेकालंकृता मतिः ।
सर्वभूतदया मैत्री लक्षणं पुण्यकर्मणाम् ॥ ३० ॥
वैराग्याभिरतिर्गत्वा स युवैव तपोवनम् ।
दत्तव्रतो महर्षिभ्यां भेजे विश्रान्तिमाश्रमे ॥ ३१ ॥
ततः कालेन संप्राप्तविमलज्ञानलोचनः ।
आसन्नप्रसवां व्याघ्रीं स दृष्ट्वा समचिन्तयत् ॥ ३२ ॥
प्रसवोऽस्याः क्षुधार्तायाः सप्ताहेन भविष्यति ।
स्पृहा चोत्पत्स्यते तीव्रा निजपोतकभक्षणे ॥ ३३ ॥
इति संचिन्त्य तद्दुःखं मुनिभ्यां विनिवेद्य सः ।
चकार तत्प्रतीकारे कारुण्येन मनोरथम् ॥ ३४ ॥
D 55 ततः प्रयाते सप्ताहे व्याघ्री गर्भभरालसा ।
बहूपवाससंतप्ता कृच्छ्रेणासूत पोतकान् ॥ ३५ ॥
निजशोणितगन्धेन जाततीव्रतरस्पृहाम् ।
सत्त्वव्रतस्तामालोक्य दयार्द्रः समचिन्तयत् ॥ ३६ ॥
इयं वराकी क्षुद्दुःखादुद्यता पोतभक्षणे ।
अहो बतास्याः स्वार्थेन पुत्रस्नेहोऽपि विस्मृतः ॥ ३७ ॥
सर्वः स्वदुःखसंतप्तः परसंतापशीतलः ।
विशेषार्तः परस्यार्तौ विरलो जायते जनः ॥ ३८ ॥
दत्त्वा शरीरं रक्षामि व्याघ्रीमेतां सशावकाम् ।
न सहे दुःखमेतेषां पर्याप्तं प्राणसंशये ॥ ३९ ॥
परप्राणत्राणे तृणकलनया त्यक्तवपुषां
यशःकायः स्थायी भवति पृथुपुण्योदयमयः ।
प्रसक्तापायोऽयं प्रसरदनिलालोलनलिनी-
दलोत्सङ्गत्वङ्गज्जललवसुहृज्जीवितकणः ॥ ४० ॥
ध्यात्वेति न्यपतद् व्याघ्र्याः स पुरः करुणानिधिः ।
गलद्रक्तं गले कृत्वा क्षतं वेणुशलाकया ॥ ४१ ॥
D 57 आपन्नत्राणसरसं न हि नाम महात्मनाम् ।
सहते परसंतापं करुणाकोमलं मनः ॥ ४२ ॥
रक्ताभिलाषनिशिता निपपात तस्य
व्याघ्री ततः प्रततवक्षसि निश्चलस्य ।
आश्चर्यमार्यचरितस्य जगत्सु जात-
हर्षस्मितैरिव नखांशुभिरुल्लिखन्ती ॥ ४३ ॥

मैत्रीव स्खलितं क्षमेव कुकृतं प्रज्ञेव चिन्ताचयं
दुःखं दुःसहविप्लवं धृतिरिव क्लेशं तपःश्रीरिव ।
तस्य व्याघ्रवधूनिपातविषमक्रूराभिघातोल्बणं
सेहे मूर्तिरचञ्चलैव दयया सा सत्त्वभूमिर्भरम् ॥ ४४ ॥

व्याघ्रीनखावलिविलासविलुप्यमाना
वक्षःस्थली क्षणमलक्षत विक्षतास्य ।
रोमाञ्चचर्चिततनोस्तुहिनांशुशुभ्र-
सत्त्वप्रकाशकिरणाङ्कुरपूरितेव ॥ ४५ ॥

तस्यामिषाहरणशोणितपानमत्तां D 59
व्याघ्रीं सहर्षमवलोकयतश्चकार ।
दीर्घप्रवाससमयाकुलिता मुहूर्तं
कण्ठावलम्बनधृतिं निजजीववृत्तिः ॥ ४६ ॥

तृप्ता प्रदक्षिणविलासगतागतेन
लज्जावशादिव भृशं विनताननैव ।
तस्याकरोदपि विवाहपराङ्मुखस्य
पाणिग्रहप्रणयिनी हृदयोत्सवं सा ॥ ४७ ॥

मैत्रीपवित्रमविकारमुदारसत्त्वं
सौजन्यपुण्यतटिनी भुवनेषु कीर्तिः ।
भव्यात्मनां भवति भूतहितस्वभावं
स्वाधीनदीनकरुणाभरणं च चेतः ॥ ४८ ॥

तत्तस्य सत्त्वमतुलं चतुरम्बुराशि-
वेलाविलासरसना वसुधापुरंध्री ।
व्याघ्रीनखाग्रदलितस्य विलोक्य सद्यः
प्राणक्षयक्षणभियेव चिरं चकम्पे ॥ ४९ ॥

सत्यव्रतः स करुणानिरतोऽहमेव D 61
स्मृत्वा स्ववृत्तमिह संप्रति जातहासः ।
श्रुत्वेति पूर्वचरितं कथितं जिनेन
शक्रः सविस्मयमनाः स्तिमिताननोऽभूत् ॥ ५० ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
रुक्मवत्यवदानं नाम एकपञ्चाशत्तमः पल्लवः ॥

D 63 
## ५२ अदीनपुण्यावदानम् ।

अर्थिनां वनगतोऽपि वल्कली
यः करोत्यविरतं कृतार्थताम् ।
कैर्न चारुचरितस्य रुच्यते
तस्य चन्दनतरोश्च सत्कृतिः ॥ १ ॥

विहरन्तमथान्यस्मिन् भगवन्तं तपोवने ।
पप्रच्छ सस्मितं शक्रो विस्मितः स्मितकारणम् ॥ २ ॥
पृष्टः प्रणयिना तेन सर्वज्ञस्तमभाषत ।
अस्मिन् देशे सहस्राक्ष पूर्ववृत्तं स्मृतं मया ॥ ३ ॥
मधूदकाख्ये नगरे पुरा सुरपुरोपमे ।
अदीनपुण्यनामाभूद्भूपतिर्भूषणं भुवः ॥ ४ ॥
करुणामुदितोपेक्षामैत्रीसंसक्तचेतसः ।
उवासेर्ष्यावतीव श्रीर्यस्यार्थिजनवेश्मसु ॥ ५ ॥
D 65 कदाचिच्चरितं तस्य श्रुत्वा जगति विश्रुतम् ।
तमाययौ ब्रह्मदत्तः क्ष्मापतिर्विजिगीषया ॥ ६ ॥
ततः करिघटाबन्धैरन्धीकृतदिगन्तरः ।
चकार नगराबन्धमनुबन्धाय तस्य सः ॥ ७ ॥
सत्त्वानुकम्पी नृपतिर्न शत्रुक्षयमिच्छति ।
ध्यात्वेति निर्ययुर्योद्धुमनुक्त्वैवास्य मन्त्रिणः ॥ ८ ॥
वर्तमाने रणे तस्मिन् गजवाजिरथक्षये ।
अदीनपुण्यः कारुण्यविविग्नः समचिन्तयत् ॥ ९ ॥
विषमः क्षत्रधर्मोऽयमधर्मशतसंमितः ।
यस्मिन् प्राणिवधक्रौर्यं धर्म इत्यभिधीयते ॥ १० ॥
धिग्धर्मं रुधिरादिग्धं क्षत्रियाणां मलीमसम् ।
कृते यस्य प्रयत्नोऽयं तज्जीवितमशाश्वतम् ॥ ११ ॥
सापायस्य व्यसनसरणौ शीर्यमाणस्य नित्यं
दुःखोच्छ्वासैः प्रतिहतधृतेः स्मर्यमाणस्य पश्चात् ।
सोऽयं सद्यः सुखलवधिया क्लेशपाकस्य पुंसां
भोगस्यार्थे वत वत परप्राणहिंसाप्रयत्नः ॥ १२ ॥
D 67 तस्मादिदं परित्यज्य हिंसापापनिकेतनम् ।
अधर्मबहुलं राज्यं गच्छाम्येष तपोवनम् ॥ १३ ॥

राज्ञामज्ञानमूढानां वधबन्धशतार्जिताम् ।
कालः कवलयत्येव लक्ष्मीमक्षीणकिल्बिषाम् ॥ १४ ॥

अचिन्त्यः संसारे बहुलतरमोहाहतधियां
स्थिरैराशाबन्धैर्विषयसुखजालं कलयताम् ।
अकाले कल्पान्तं प्रतिपुरुषमेष प्रतिदिशन्
बली कालः पुंसां किल विलसितं संकलयति ॥ १५ ॥

इति संचिन्त्य नृपतिर्हिंसापापपराङ्मुखः ।
दण्डवल्कलमादाय ययौ निशि तपोवनम् ॥ १६ ॥
ततस्तद्गमनं श्रुत्वा लोके प्रच्छाद्य मन्त्रिणः ।
युध्यमानाः शरोदग्रं रिपुं गर्जन्तमूचिरे ॥ १७ ॥
गहने मत्तमातङ्ग मा कृथा गलगर्जितम् ।
घनशब्दकृताक्षान्तिर्निविशत्यत्र केसरी ॥ १८ ॥
इति ब्रुवाणाः समरे धीरा युयुधिरे परम् । D 69
ते घनस्वामिसंमानसंनाहच्छन्नविग्रहाः ॥ १९ ॥
अत्रान्तरे कोसलेषु ब्राह्मणः कपिलाभिधः ।
हिरण्यवर्मणा राज्ञा धनदण्डेन पीडितः ॥ २० ॥
बन्धनागारविन्यस्तसमस्तसुतबान्धवः ।
दत्ताशेषधनो भूरि दारिद्र्याद्दातुमक्षमः ॥ २१ ॥
अचिन्तयत्प्रतीकारं बन्धुबन्धनदुःखितः ।
संसक्तपाशसचिवः सारङ्ग इव निश्चलः ॥ २२ ॥
पिता माता स्वसा भ्राता दुहिता तनयश्च मे ।
रुद्धाः कारागृहे मुक्तिं नायान्ति द्रविणं विना ॥ २३ ॥
लोभः प्रवर्तते यत्र धर्मद्वेषेण भूपतेः ।
तस्यार्द्रक्लेशदेशस्य परित्यागेन जीव्यते ॥ २४ ॥
अथवा कथमुत्स्रष्टुं देशः कृच्छ्रेऽपि शक्यते ।
जन्तुभिः सततावद्धैर्बन्धुबन्धनरज्जुभिः ॥ २५ ॥
द्रविणोपार्जनं तस्मादस्मिन् क्लेशमये हितम् ।
नास्ति तद् व्यसनं लोके तीर्यते न धनेन यत् ॥ २६ ॥
प्रार्थ्यमानाः पलायन्ते स्वयमायान्त्यनर्थिताः । D 71
वेश्या इव विकारिण्यः कुटिला धनसंपदः ॥ २७ ॥
विरसा जीर्णवल्लीव दीर्घशोषानुबन्धिनी ।
क्वचित्कदाचित्कृच्छ्रेण सेवा फलति नैव वा ॥ २८ ॥

लज्जारजःपरिचिता याच्ञा सज्जनवर्जिता ।
अवमानशतोच्छिष्टा सफलाप्यफलायते ॥ २९ ॥

पुरः सत्कारांशः प्रथमसमयोपागमरसात्
ततो मानम्लानिर्द्रविणकणयाच्ञापरिचयात् ।
विमृश्यान्तस्तस्मात्तरलितमतिर्मार्गणगणः
क्षणादाशाबन्धं विपुलयति संकोचयति च ॥ ३० ॥

लोभस्वभावे लोकेऽस्मिन् को गृह्णाति धनैर्गुणान् ।
सर्वोपायविहीनस्य तस्मान्नास्त्येव मे गतिः ॥ ३१ ॥

किं करोमि क्व गच्छामि छायार्थीव मरोः पथि ।
नासादयति विश्रान्तिं निरालम्बो मनोरथः ॥ ३२ ॥

अत्यन्तसंकुलतरे जनकाननेऽस्मिन्
न प्राप्यते विपदि कोऽपि स साधुवृक्षः ।
यः संततार्थिजनसर्वफलार्पणेऽपि
नो कम्पते न च जहाति मतिं कदाचित् ॥ ३३ ॥

D 73 अदीनपुण्यः सर्वार्थिकल्पवृक्षः क्षितीश्वरः ।
श्रूयते सत्त्वदुग्धाब्धिरापन्नार्तिहरः परम् ॥ ३४ ॥

इति संचिन्त्य स नृपं प्रतस्थे द्रष्टुमुत्सुकः ।
आशाबन्धोपदिष्टेन पथा हर्षपुरःसरः ॥ ३५ ॥

ततः स शनकैः प्राप्य पुरोपान्ततपोवनम् ।
ददर्शाध्वपरिश्रान्तः संवीतं वल्कलैर्नृपम् ॥ ३६ ॥

नरनाथोऽपि तं दृष्ट्वा क्षुत्पिपासाश्रमातुरम् ।
पप्रच्छ करुणासिन्धुर्दूरागमनकारणम् ॥ ३७ ॥

स तस्मै निजवृत्तान्तमुष्णनिश्वाससूचितम् ।
निवेद्य बन्धुसंरोधदुःखार्तः पुनरब्रवीत् ॥ ३८ ॥

आयातोऽहं हिरण्यार्थी बन्धुबन्धनमुक्तये ।
अदीनपुण्यं नृपतिं द्रष्टुमर्थिसुरद्रुमम् ॥ ३९ ॥

लोकनाथः स मे श्रीमान् करुणापूर्णमानसः ।
सद्यः संदर्शनेनैव संकल्पं पूरयिष्यति ॥ ४० ॥

अम्लानं क्लेशसंतापैरवमानैरदूषितम् ।
अपर्युषितकालं च फलं सूते महाजनः ॥ ४१ ॥

दारिद्र्यतीव्रतिमिरापहरः प्रजानां D 75
कीर्तिप्रकाशविभवैः परिपूरिताशः।
अभ्युल्लसद्विमलमानसहर्षबन्धु-
स्तापं हरिष्यति स मे वसुधासुधांशुः॥ ४२॥
श्रुत्वेति तेन कथितं व्यथितः पृथिवीपतिः।
संक्रान्तनिष्प्रतीकारसंतापः समचिन्तयत्॥ ४३॥
अहो नु त्यक्तराज्योऽहमकालेऽस्मिन् द्विजन्मना।
चिन्तितः क्षुत्परीतेन शुष्कवृक्ष इवाध्वनि॥ ४४॥
दूराध्वश्रमवैफल्यसंतापप्रदमर्थिनाम्।
संमोहजननं धिङ्मां मृगतृष्णाजलोपमम्॥ ४५॥
मुखाश्मपाततुल्येन मूर्च्छितानामिवार्थिनाम्।
आशाभङ्गेन गुरुतां प्रयात्यध्वपरिश्रमः॥ ४६॥
अहं स राजा संत्यक्तराज्यः काननमाश्रितः।
इति श्रुत्वैव विप्रोऽयं सद्यस्त्यजति जीवितम्॥ ४७॥
जातैव चिन्तामतुलां प्रसूते
निद्रापहारं तरुणी करोति।
कन्येव वृद्धा विदधाति शोकं
नष्टा दहत्याशु शरीरमाशा॥ ४८॥
राजधानीमितो गत्वा मामप्राप्य विचिन्तितम्। D 77
किं करिष्यति संतापादयं भग्नमनोरथः॥ ४९॥
जीवल्लोकः किल स कुशली क्लेशकाले नराणां
श्लाघ्यश्चित्ते स्फुरति सहसा यः परित्राणबन्धुः।
प्रत्याख्यानान्मलिनवदनस्तप्तनिश्वासशुष्य-
त्संकल्पाल्पीकृतनततनुर्याति यस्मान्न चार्थी॥ ५०॥
धिग्जन्म क्षारसिन्धोः पथिकजनपृथूच्छ्वासनिर्दग्धवृद्धे-
स्तापं योऽर्थिप्रजानां हरति न विषमं तीव्रतृष्णासमुत्थम्।
जातास्वादोऽप्यगस्त्योदरकुहरलुठज्जाठराग्निप्रताप-
व्यापारव्याप्यमानक्वथनपरिचितः स्वप्रमाथव्यथानाम्॥ ५१॥
इति संचिन्त्य नृपतिः कृतातिथ्यः फलाम्बुना।
तमुवाचाप्रियाख्यानभीतिभीत इव क्षणम्॥ ५२॥
ब्रह्मन्नदीनपुण्योऽहं राजा शत्रुवधोद्यमे।
हिंसाविरक्तः संत्यज्य राज्यं विजनमाश्रितः॥ ५३॥

D 79 हिंसाफलं महीपाला भोगं भ्रूभङ्गभङ्गुरम् ।
प्रत्यग्ररुधिरादिग्धं क्रव्याद इव भुञ्जते ॥ ५४ ॥
किं करोम्यपदस्थोऽहमकाले त्वमुपागतः ।
यत्तु शक्यं मया किंचित्तदयन्त्रितमुच्यताम् ॥ ५५ ॥
इति राजवचः श्रुत्वा वज्रेणेव समाहतः ।
बन्धुमोक्षणनैराश्यात्स पपात महीतले ॥ ५६ ॥
मूर्च्छितं पतितं भूमौ तं दृष्ट्वा साश्रुलोचनः ।
प्रियाभिर्वाग्भिराश्वास्य राजा पुनरचिन्तयत् ॥ ५७ ॥
अहो नु मन्दपुण्योऽहं यस्मिन्नाशालताङ्कुरः ।
मरुमार्गोपमे जातः सहसा शोषमर्थिनः ॥ ५८ ॥
अर्थार्थी प्रथमं विचिन्त्य सफलामस्थानयाच्ञां क्षणात्
आशातूलिकयाभिलिख्य निखिलं शाखासहस्रैः सुखम् ।
अप्राप्याम्रमिवाथ शुष्कखदिरान्मूढेच्छया वाञ्छितं
सद्यश्छिन्नमनोरथः पृथुतरारम्भक्षयान्मूर्च्छति ॥ ५९ ॥
अस्मै यदि प्रयच्छामि याचितावाप्तमल्पकम् ।
तत्किं तेन करोत्येष भिक्षित्वापि बुभुक्षितः ॥ ६० ॥
D 81 तस्मिन्नेव गृहे जरत्तृणकटच्छन्ने यदि स्थीयते
चुल्लीसुप्तबिडालबालसदयास्ता एव यद्यङ्गनाः ।
पादाभ्यामवगम्यते यदि पुनस्तेनैव सेवाधुना
तत्को नाम गुणः क्षणं क्षितिभुजा दृष्टेन पृष्टेन वा ॥ ६१
इति ध्यात्वा धराधीशः कृपावसुधया धिया ।
तद्याच्ञासिद्धिसंनद्धः प्रतिबोध्य तमभ्यधात् ॥ ६२ ॥
उत्तिष्ठ वत्स संप्राप्तस्त्वत्समीहितसिद्धये ।
अविलम्बिफलावाप्तिरुपायः परमो मया ॥ ६३ ॥
छित्त्वा मम शिरस्तावद्ब्रह्मदत्ताय भूभुजे ।
गत्वा प्रयच्छ तत्प्रीत्या स ते वित्तं प्रदास्यति ॥ ६४ ॥
तस्यार्थिचन्दनतरोः श्रुत्वैतद्वचनं द्विजः ।
उवाच तप्तसूच्येव विद्धः कर्णप्रविष्टया ॥ ६५ ॥
तव त्रैलोक्यसारस्य जगत्पुण्याप्तजन्मनः ।
शस्त्रं कण्ठे शठेनास्मिन् केन पापेन पात्यते ॥ ६६ ॥
लोभलुब्धमतिः को नु चिन्तयेदहितं तव ।
अङ्गारकारणं क्रौर्यं सहकारे करोति कः ॥ ६७ ॥

इति ब्रुवाणं नृपतिर्ब्राह्मणं प्रत्युवाच तम्। D 83
जीवन्तं नय बद्ध्वा वा तस्य मामन्तिकं रिपोः॥ ६८॥

यत्नेनाभ्यर्थितो राज्ञा स तं बद्ध्वा महीपतेः।
निनाय ब्रह्मदत्तस्य समीपं शत्रुशङ्किनः॥ ६९॥

तेनानीतं तमादाय ब्रह्मदत्तः क्षितीश्वरम्।
धनं धनेशतुल्योऽस्मै वाञ्छिताभ्यधिकं ददौ॥ ७०॥

सत्त्वाश्चर्यमदीनपुण्यनृपतेराकर्ण्य विप्रोदितं
त्यक्त्वा वैरविकारदुःसहतरं क्रौर्याभिधानं विषम्।
धृत्वा मौलिमिवोन्नते निजपदे तं ब्रह्मदत्तः स्वयं
चक्रे तच्चरणाम्बुजप्रणयिणीमुष्णीषमालां क्षणात्॥ ७१॥

तस्मिन् गते निजपुरं विनयप्रपन्ने
संप्राप्य राज्यमरिहीनमदीनपुण्यः।
धर्मेण कीर्तिधवलाम्बुधिफेनमाला-
वेल्लद्दुकूलललितां पृथिवीं शशास॥ ७२॥

योऽभूद्विभुर्भुवनसारमदीनपुण्यः
सोऽहं स्मृतं चरितमत्र मयाद्य तस्य।
कालेन यत्र बहुसंघपदाभिरामा
भूमिर्भविष्यति नृणां भवमुक्तिहेतुः॥ ७३॥

सत्त्वोज्ज्वलं भगवतश्चरितं निशम्य D 85
पूर्वावदानकथितोदितविस्मयेन।
हर्षस्पृशः किमपि नाकपतेर्बभूव
रोमाञ्चपत्ररचनारुचिरं शरीरम्॥ ७४॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
अदीनपुण्यावदानं नाम द्विपञ्चाशत्तमः पल्लवः॥



87

## ५३ सुभाषितगवेष्यवदानम् ।

सूक्तिः कण्ठविवर्तिनी गुरुनतिर्मौलौ श्रुतं श्रोत्रयोः
सत्यं नित्यमनामयं च वदने विद्वत्प्रियं भूषणम् ।
रत्नोदारसुतारहाररचनाचित्रेण धत्तेतरां
संतोषं सविशेषवेषवनितावेशेन शेषो जनः ॥ १ ॥

शक्रेणान्यत्र भगवान् सस्मितः स्मितकारणम् ।
पृष्टस्तदाशयज्ञेन सर्वज्ञः पुनरब्रवीत् ॥ २ ॥

सुभाषितगवेषीति वाराणस्यामभून्नृपः ।
यस्य जात्युज्ज्वला कीर्तिर्मालेव विबभौ श्रियः ॥ ३ ॥

सुवृत्ते गुणसंयुक्ते हृदि सक्ते विवेकिनाम् ।
अभूद्भूषण एवार्थी यः सूक्ते न तु मौक्तिके ॥ ४ ॥

नित्यमर्थिषु मुक्तापि कोषश्रीर्यस्य निश्चला ।
कीर्तिर्गुणनिबद्धापि दूराद्दूरतरं गता ॥ ५ ॥

D 89 स राजहंसः सरसैर्वृतः कविवरैः सदा ।
विद्वत्सभाकमलिनीभोगसौभाग्यवानभूत् ॥ ६ ॥

उपदेशप्रवृत्तस्य सगुणास्तस्य सूक्तयः ।
जनस्य मोहतिमिरं जह्रुर्दीपशिखा इव ॥ ७ ॥

स कदाचित्सभासीनः सुभाषितकथान्तरे ।
सुमतिः सुमतिं नाम प्रधानामात्यमब्रवीत् ॥ ८ ॥

साधुशब्दपदारूढैर्गुणालंकारशालिभिः ।
सभा भवद्भिर्भात्येषा भारतीव सुभाषितैः ॥ ९ ॥

अप्यन्विष्टानि सत्पाकरसवन्ति नवानि च ।
सुभाषितानि भवतां कुसुमानीव कानिचित् ॥ १० ॥

सूक्तीनां प्रतिभाणां च मञ्जरीणां च जम्भितम् ।
नवमेव मनोहारि नारीणामिव यौवनम् ॥ ११ ॥

सरसमपि विहाय व्यायतं पुष्पसार्थं
परिचितपरिहारी दूरदूरानुसारी ।
भ्रमति सततसक्तास्वादमन्दादरत्वात्
नवनवमधुलुब्धः षट्पदः काननेषु ॥ १२ ॥

D 91 अस्मिन् सदसि यत्किंचित्सूक्तरत्नं विचार्यते ।
तत्परीक्षासमुत्तीर्णं सर्वत्रायात्यनर्घ्यताम् ॥ १३ ॥

पाण्डित्येन विना विनाशितधियां व्यर्थं नृणां जीवितं
पाण्डित्यं शुकपाठषण्ढमसमोल्लासं कवित्वं विना ।
काव्यं चारुतरं विना सहृदयैस्तत्त्वान्तरालोचना-
शून्यं निर्जनकूपदीपकलनामन्तः समालम्बते ॥ १४ ॥
तस्मादस्मिन्नवसरे नूतनं किंचिदुच्यताम् ।
चैत्रः पिकरुतस्येव सूक्तस्यावसरः सुहृत् ॥ १५ ॥
चमत्कारो वाचां जयति जितजातीपरिमलः
क्षणं चेत्तत्त्वज्ञाः प्रगुणमवधानं विदधति ।
उदग्रा सामग्री तदपि विफलैषा स्फुरितकृत्
न यावत्पाठेन स्वजन इव लब्धो ह्यवसरः ॥ १६ ॥
इत्युक्तं नरनाथेन हृदयस्पर्शि धीमताम् ।
वचः श्रुत्वा महामात्यः प्रत्यभाषत भूपतिम् ॥ १७ ॥
राजन्नभिनवश्लोकस्तवैव भुवनत्रये ।
गीयते विबुधाधीश किमन्यैः सूक्तविस्तरैः ॥ १८ ॥
त्वयि विद्याविनोदेऽस्मिन् वदान्यवर सादरे । D 93
विद्याधरपुरं सर्वं जातमेतन्महीतलम् ॥ १९ ॥
कलाकमलिनीकान्ते मित्रे गुणवतां त्वयि ।
उदिते याति सालोकः सन्मार्गेणाखिलो जनः ॥ २० ॥
सा सा कला स स विलासविशेषलेश-
स्ते ते गुणाः स स जनश्चरितं च तत्तत् ।
लोके प्रियत्वमधिरोहति यत्र यत्र
राजा करोति सरसः क्षणमादरांशम् ॥ २१ ॥
भूपाले विदुषि स्पृशत्यतिशयं विद्याविलासोत्सवं
शूरे सङ्गररङ्गसंगमरुचिर्गृह्णाति वीरव्रतम् ।
मूढे मुह्यति चञ्चले विचलति क्रूरे नृशंसायते
यद्यद्भूमिपतिः करोति कुरुते तत्तत्समस्तो जनः ॥ २२ ॥
सरसः साधुपुष्पाणां वसन्तः कुसुमाकरः ।
प्रजापुण्यैर्भवत्येव स्वयं विद्वान् महीपतिः ॥ २३ ॥
जनः सुवृत्तिर्मतिमानमात्यः
सत्याभिलाषी नृपतिर्मनीषी ।
एतानि कालस्य शुभोदयस्य
प्रत्यक्षलक्ष्याणि सुलक्षणानि ॥ २४ ॥

D 95 यन्नृत्यन्ति पदे पदे मतिमतां काव्यार्थतत्त्वे धियो
यत्कर्णाभरणीभवन्ति विभवे भव्यात्मनां सूक्तयः ।
यत्सारस्वत एष कीर्णमहिमा मुद्रादरिद्रो निधि-
र्विद्यानां नृपतिः स्वयंवरविधौ सोऽयं विवाहोत्सवः ॥ २५ ॥
राजमानेन महता राजमाने गुणे सताम् ।
लुब्धकाः सूक्तिवैचित्र्ये लुब्धकाः काननेष्वपि ॥ २६ ॥
लुब्धकः क्रूरको नाम प्रत्यन्तेऽस्ति वनेचरः ।
सदा नवनवं तस्मात्सूक्तरत्नमवाप्यते ॥ २७ ॥
दृप्यद्द्विपारिनखराघातभिन्नेभमौक्तिकैः ।
सततं कविसार्थेभ्यः स गृह्णाति सुभाषितम् ॥ २८ ॥
श्रुत्वेत्यमात्यस्य वचः क्षितीशः
सभां समुत्सृज्य विसृज्य सभ्यान् ।
अन्तःपुरं गुप्तमुपेत्य रूपं
चकार सामान्यजनानुरूपम् ॥ २९ ॥
D 97 परस्परांशुप्रतिबद्धतारं
विस्फारतारानिकराभिरामम् ।
हारं समादाय सुभाषितार्थी
छायाद्वितीयः स ययौ वनान्तम् ॥ ३० ॥
स तत्र बालानिलकीर्णपुष्पैः
वृक्षैः कृतातिथ्य इवावनम्रैः ।
अन्विष्य यत्नान्मृगयाप्रसक्तं
गिरेस्तटे लुब्धकमाससाद ॥ ३१ ॥
वामेन वामं करिणीसुखानां
वैधव्यदीक्षारसिकं मृगीणाम् ।
चक्रक्रमं क्रूरतरं करेण
चापं स्वचित्तोपममुद्वहन्तम् ॥ ३२ ॥
वधैकदक्षेण च दक्षिणेन
वनौकसां नित्यमदक्षिणेन ।
हस्तेन विन्यस्तसमस्तहस्ति-
वर्गापवर्गं विशिखं दधानम् ॥ ३३ ॥
मायूरपक्षैरनिलावहेला-
तरङ्गिताग्रैर्विहितोत्तरीयम् ।

नेत्रैर्मृगीणां पतिजीवरक्षां
संत्रासलोलैरिव याच्यमानम् ॥ ३४ ॥
स तं गिरा पूज्यमिवाभिपूज्य
गुरुः प्रजानां गुरुवत्प्रणम्य ।
उवाच शोणाधरकान्तिभिन्नां
दन्तद्युतिं पल्लवितां दधानः ॥ ३५ ॥
मया श्रुतः साधुसुभाषितानां
तवानिशं संग्रहणे प्रयत्नः ।
मार्गोपदेशाय जनस्य दीप्तं
प्रयच्छ किंचिन्नवसूक्तरत्नम् ॥ ३६ ॥
अयं च ते तत्प्रतिपण्यरूपो
लावण्यलीलादलितेन्दुदर्पः ।
हारः प्रहारस्तिमिरोत्कराणां
लक्ष्मीविलासे स्मितकेलिकारः ॥ ३७ ॥
उक्त्वेति हारं करपूरिताश-
मदर्शयद्भूमिपुरंदरोऽस्मै । D 101
तं लुब्धकः स्वप्नमनोरथेषु
दुष्प्रापमालोक्य शनैः प्रदध्यौ ॥ ३८ ॥
दत्वाप्यधीमानिममप्रदेयं
पश्चादयं तापमुपैति नूनम् ।
अस्मिन्नतीते परलोकभूमिं
हारः कथं मे निजतामुपैति ॥ ३९ ॥
क्षणं विचिन्त्येति स तं बभाषे
ददामि साधो समयेन सूक्तम् ।
शृङ्गाद्रिरेरस्य यदि स्वदेहं
संप्राप्तसूक्तः क्षिपसि प्रसह्य ॥ ४० ॥
क्रौर्योचितं लुब्धकवाक्यमेत-
दचिन्तयद्भूमिपतिर्निशम्य ।
अहो नु संस्कारवतोऽस्य कामं
निषिद्धकार्याचरणाभियोगः ॥ ४१ ॥
दूरे गुणारोपणविश्रुतानां D 103
प्रत्यक्षसंलक्षितदुष्कृतानाम् ।
भवत्यतुल्यः कुटिलाशयाना-
मन्यः प्रवादश्चरितं तथान्यत् ॥ ४२ ॥

क्व क्षुद्रतैषा क्व वनान्तवासः
क्व सत्त्वहिंसा क्व गुणाभियोगः।
क्व सूक्तचर्चा क्व च निष्कृपत्व-
महो विमोहाहतमस्य वृत्तम्॥ ४३॥

गायत्यसक्तं मधुरं पुरस्तात्
वन्यव्रतैः शान्त इवावभाति।
लुब्धस्य लुब्धस्य किमुच्यते वा
प्राणापहारी गुणसंग्रहैर्यः॥ ४४॥

विद्याविशेषेऽपि कृतप्रयत्नः
खलो भवत्येव खरस्वभावः।
व्यालाः फणारत्नरुचिं दधानाः
क्रूरं तमः क्रोधमयं वहन्ति॥ ४५॥

D 105 शास्त्रोपदेशैः परिमृज्यमानः
प्रसन्नतां याति न नाम जाल्मः।
कर्पूरपूरैः परिपूरितोऽपि
नोद्वात्यसह्यं लशुनः स्वगन्धम्॥ ४६॥

चिरं विचार्येति स सद्गुणार्थी
नवोपदेशश्रवणाभिलाषात्।
प्रयच्छ सूक्तं क्षितिभृत्तटाग्रात्
त्यक्ष्यामि पश्चात्तनुमित्युवाच॥ ४७॥

श्रुत्वा वचः सत्यधनस्य तस्य
हारं समादाय रुचां विहारम्।
प्रगृह्यतामित्यभिधाय सूक्तं
प्रचक्रमे वक्तुमयुक्तसक्तः॥ ४८॥

पापं शापं स्वसुखशरणे न स्पृशेत्तीव्रतापं
शीलोत्तालं कुशलसदनं पुण्यपद्मं भजेत।
चित्तं चैतच्चपलविषयास्वादसंवादलुब्धं
कुर्याद्वीतस्पृहमभिमतानन्तसंतोषतृप्तम्॥ ४९॥

D 107 इदं सुगतशासनं प्रशमराज्यसिंहासनं
नृणां व्यसनवारणं कुशलधाम साधारणम्।
मनोभवविसर्जनं भवविकारसंतर्जनं
मनोमुकुरमार्जनं सुकृतसंचयोपार्जनम्॥ ५०॥

संप्राप्येति सुभाषितं मृगरिपोस्तत्त्वानुसारी नृपः
सूक्तार्थं हृदये निधाय विमलं तं चात्मसंशोधनम् ।
आरुह्याद्रिशिरः समुन्नततरं देहं समुत्सृष्टवा-
निष्टं सत्यमतीव पुण्यमनसां नेदं वपुश्चञ्चलम् ॥ ५१ ॥

संतारणाय जगतां प्रणिधानमन्त-
र्धृत्वा स शैलशिखरान्निपपात यावत् ।
तावद्गिरिस्थितिजुषा विजयाभिधेन
यक्षेण रक्षिततनुः क्षितिमाससाद ॥ ५२ ॥

तद्वीर्यविस्मयवशादिव घूर्णमाने
लोकत्रये कुसुमवर्षिणि चान्तरीक्षे ।
संपूज्यमानचरितस्त्रिदशव्रजेन
राजा जगाम शनकैर्निजराजधानीम् ॥ ५३ ॥

तत्रोपदेशविषयेण सुभाषितेन D 109
तेनानिशं जनमशेषमथ क्षितीशः ।
चक्रे भवाभिभवशर्मणि धर्मनिल्ये
सत्कर्मणि प्रणिहितं हितसंप्रवृत्तः ॥ ५४ ॥

अत्रान्तरे विपणिवर्त्मनि लुब्धकोऽसौ
हारस्य विक्रयधिया परिवर्तमानः ।
चौरोऽयमित्यसमसाहसकम्पमानः
क्ष्माभृत्सभां नगररक्षिजनेन नीतः ॥ ५५ ॥

दूरादेव स्फुटतरकरासक्तविस्फारहारं
प्राणापातैर्विहितसमयं तं परिज्ञाय राजा ।
आचार्योऽयं मम शमगुणव्यक्तसूक्तोपदेष्टा
पूजार्होऽसाविति कृतनतिर्मानयित्वात्यजत्तम् ॥ ५६ ॥

इत्यासीत्स सुभाषिताढ्यनृपतिः सत्यव्रतः सत्यवान्
सम्यग्बोधिनिधानलब्धमहिमा कालेन सोऽहं पुनः ।
श्रुत्वैतत्कथितं निजं भगवता वृत्तं सुराणां पति-
र्भेजे हर्षविबुद्धलोचनवनः पद्माकरस्य श्रियम् ॥ ५७ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
सुभाषितगवेष्यवदानं नाम त्रिपञ्चाशत्तमः पल्लवः ॥

## D 111 ५४ सत्त्वौषधावदानम् ।

श्लाघ्यः शशाङ्करुचिरः पृथुकीर्तिभाजां
शङ्खः शिखामणिरखिन्नपरोपकारः ।
यः साधुशब्दवसतिर्गतजीवितोऽपि
लोकस्य मङ्गलनिधिः कुशलं तनोति ॥ १ ॥

भगवान् पुष्पिलां नाम विनीय क्षणदाचरीम् ।
विजहार हरित्रातनिःशङ्कहरिणे वने ॥ २ ॥

तत्रानुयायिना पृष्टः पुनः शक्रेण सस्मितः ।
स पूर्वचरितं स्मृत्वा स्मितकारणमभ्यधात् ॥ ३ ॥

द्वासप्ततिसहस्राब्ददीर्घायुषि जने पुरा ।
अभून्महेन्द्रवत्याख्या जितस्वर्गोत्सवा पुरी ॥ ४ ॥

महेन्द्रसेन इत्यासीत्तस्यां वसुमतीपतिः ।
यश्चक्रे कीर्तिकर्पूरवर्त्या वितिमिरा दिशः ॥ ५ ॥

D 113 रिपुदर्पज्वरहरः कृच्छ्रद्बद्धुर्दशाजुषाम् ।
व्यधात्तृष्णापहः स्वस्था यः सद्वैद्य इव प्रजाः ॥ ६ ॥

तस्याभूत्पुण्यसंभार इव साकारतां गतः ।
पुत्रः सत्त्वौषधो नाम सर्वसत्त्वहितोद्यतः ॥ ७ ॥

स भाद्रकल्पिको बोधिसत्त्वः सत्त्वविभूषितः ।
करुणामुदितोपेक्षामैत्रीणां वल्लभोऽभवत् ॥ ८ ॥

पुरग्रामवनान्तेभ्यो दिग्द्वीपेभ्यश्च सर्वशः ।
रोगिणोऽभ्येत्य सततं तत्स्पर्शात्स्वास्थ्यमाययुः ॥ ९ ॥

स कोऽप्यस्मिन् जनवने सुजनश्चन्दनायते ।
परोपकारमतनुं तनुर्यस्य तनोत्यलम् ॥ १० ॥

स दीर्घव्याधिदग्धानां विदधे सहसा सुखम् ।
दुर्जनायासतप्तानामिव साधुसमागमः ॥ ११ ॥

रोगे स्पर्शेन शारीरे मानसे द्रविणेन च ।
हते तेनार्थिनां दिक्षु नार्तोऽभून्न च याचकः ॥ १२ ॥

ततः कालविलासेन सर्वाश्चर्यापहारिणा ।
स ययौ निधनं श्रीमान् जनपुण्यपरिक्षयात् ॥ १३ ॥

D 115 सुधांशुर्नेत्राणां कतिपयदिनास्वाद्यमहिमा
क्षणस्थायी वर्गः सुरभिगुणसर्गः सुमनसाम् ।

अकाले कालेच्छा प्रियतरसमुच्छेदचतुरा
विधत्ते कस्यैषा किमपि न मनःशल्यकलनाम् ॥ १४ ॥

यत्पेशलं विपुलपुण्यपणैरवाप्तं
सर्वार्तिभेषजमयत्नसुखं क्षणेन ।
तत्तद्विलोक्य किल कालबलावलीढं
मूढाः स्पृशन्ति न विवेकलवं कदाचित् ॥ १५ ॥

अथ तस्मिन् यशःशेषे त्यक्त्वा तद्विरहोद्भवम् ।
दुःखं स्वदुःखमेवादौ भेजे रोगभयाज्जनः ॥ १६ ॥

लक्षणज्ञैः कुमारस्य शरीरं मन्त्रिभिस्ततः ।
न्यस्तं हिताय लोकानां वनोपान्ते सुरक्षितम् ॥ १७ ॥

तस्मिन् पुष्करिणीरम्ये देशे फुल्ललताकुले ।
अपर्युषितमेवासीत्तस्य पुण्योपमं वपुः ॥ १८ ॥

आशागता दिगन्तेभ्यः सर्वरोगिगणाः पुनः ।
तस्य संस्पर्शमात्रेण सहसा स्वस्थतां ययुः ॥ १९ ॥

तत्स्पृष्टमारुतविघट्टितपद्मखण्ड- D 117
डिण्डीरमण्डनजलासु सरोजिनीषु ।
स्नाता विमुक्तसकलामयनिर्व्यपायाः
पीतामृता इव बभुः सहसैव मर्त्याः ॥ २० ॥

सत्त्वौषधकुमारो यः सोऽहमेव तदाभवम् ।
यस्य संकीर्तनेनैव यास्यन्ति व्याधयः क्षयम् ॥ २१ ॥

स्मरिष्यति स्मृतिसुधां ममैतां यः कथामपि ।
आधिव्याधिमयं दुःखं तस्य शान्तिमुपैष्यति ॥ २२ ॥

अशोको नाम देशेऽस्मिन् कालेनोत्पत्स्यते नृपः ।
चैत्यं हिताय लोकस्य यः प्रतिष्ठापयिष्यति ॥ २३ ॥

इति सुगतोदितमेकधिया श्रुत्वैवामरराजः ।
हर्षविलासविकाशितया वदनरुचा विरराज ॥ २४ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
सत्त्वौषधावदानं नाम चतुःपञ्चाशत्तमः पल्लवः ॥

D 119 ## ५५ सर्वंददावदानम् ।

चिन्तामणिः किल विचिन्तितवस्तुदाता
कल्पद्रुमश्च परिकल्पितमेव सूते ।
तस्य स्तुतौ समुचितानि पदानि कानि
देहप्रदानसमये स्वयमुद्यतो यः ॥ १ ॥
घाटोपघाटकौ शास्ता विनीयोन्मदगुह्यकौ ।
केशिनीकाननादन्यद्वनमन्तर्हितो ययौ ॥ २ ॥
प्राग्वृत्तस्मरणस्मेरवदनः स्मितकारणम् ।
स तत्र पृष्टः शक्रेण प्रणयात्पुनरब्रवीत् ॥ ३ ॥
अभूत्सर्वावती नाम वसतिः सर्वसंपदाम् ।
नगरी गगनालग्नमणिहर्म्यांशुहासिनी ॥ ४ ॥
आसीत्सर्वंददस्तस्यां राजेन्दुरमलद्युतिः ।
यस्य त्रिभुवनज्योत्स्ना बभौ कीर्तिर्दिवानिशम् ॥ ५ ॥
D 121 शोभाजुषः सुकृतसारदशाविशेषै-
र्लब्धस्थितेर्विनयवर्त्मनि भद्रमूर्तेः ।
यस्याययौ विजयमण्डनडिण्डिमत्वं
दानेन कुञ्जरपतेरिव साधुवादः ॥ ६ ॥
स कदाचित्प्रजाकार्यदर्शनानुग्रहोन्मुखः ।
भेजे बाह्याङ्गणास्थानभुवं भूमिशतक्रतुः ॥ ७ ॥
स तत्रानन्तसामन्तमौलिरत्नेषु बिम्बितः ।
शुश्राव पृथिवीकार्यमसंख्यैरिव विग्रहैः ॥ ८ ॥
चन्द्रकान्तमये तस्य संक्रान्ताः प्रणताः पुरः ।
पादपीठे पुनश्चिन्तातापं तत्यजुरर्थिनः ॥ ९ ॥
अत्रान्तरे परिभ्रष्टः प्लुष्टपक्ष इवागतिः ।
पारावतः क्षितिपतेरूरुमूलमशिश्रियत् ॥ १० ॥
तं कातरतरोद्भ्रान्तनेत्रं संकोचिताङ्गकम् ।
दृष्ट्वा दयाविधेयोऽभूत्सहसा पृथिवीपतिः ॥ ११ ॥
स समुत्फुल्लकमलालीलाकमलिनीत्विषा ।
कुतोऽस्य भयमित्याशा दृशा क्षिप्रं व्यलोकयत् ॥ १२ ॥
D 123 तस्मिन्नवसरे सत्त्वं जिज्ञासुः पाकशासनः ।
मायया लुब्धकाकारः समभ्येत्याब्रवीन्नृपम् ॥ १३ ॥
देव मुञ्च चिरावाप्तं भक्ष्यं मम विहंगमम् ।
इयं नः सहजा वृत्तिरनिवृत्तिरयाचिता ॥ १४ ॥

निसर्गसिद्धमेतन्मे भोजनं जगतीपते ।
त्यजतो जीवितं नास्ति प्राणा ह्यशनधारणाः ॥ १५ ॥
क्षणेऽस्मिन्नशनच्छेदान्मयि संत्यक्तजीविते ।
विनंक्ष्यति विलुप्ताशा सपुत्रा मे कुटुम्बिनी ॥ १६ ॥
एकसंरक्षणेनैव यः करोति बहुक्षयम् ।
स धर्मो यत्र धर्मात्मन्नधर्मस्तत्र कीदृशः ॥ १७ ॥
मयि पारावतप्रीत्या न द्वेषं कर्तुमर्हसि ।
न हि कारणरागेण प्रवर्तन्ते भवद्विधाः ॥ १८ ॥
यथैवायं तथैवाहं को विशेषस्तवावयोः ।
सर्वभूतसमाः सन्तः कृपां नैकत्र कुर्वते ॥ १९ ॥
इत्युक्ते तेन नृपतिर्लीनं कङ्कणराविणा ।
न भेतव्यमितीवाह खगं प्रच्छाद्य पाणिना ॥ २० ॥
स ततः स्निग्धजीमूतघोषगम्भीरया गिरा । D 125
उवाच सर्वसत्त्वार्तिपरित्राणकृतक्षणः ॥ २१ ॥
मा कृथाः क्षणतृप्त्यर्थी विषमं प्राणिवैशसम् ।
तुल्यव्यथाविकारोऽयं प्राणस्नेहः शरीरिणाम् ॥ २२ ॥
परप्राणापहारेण या वृत्तिः परिकल्प्यते ।
निवृत्तिः श्रेयसां सा हि पापतापं प्रयच्छति ॥ २३ ॥
अधुनैवापरिच्छिन्ननिजेच्छासंमतादरम् ।
गृह्यतामशनं यद्यन्मदर्थमुपकल्पितम् ॥ २४ ॥
श्रुत्वेति राजवचनं परिम्लानाननः श्वसन् ।
वरोपभोगविमनाः प्रत्यभाषत लुब्धकः ॥ २५ ॥
न वयं राजभोगानां रसज्ञा वनवासिनः ।
न हि शष्पाशनाभ्यासा मोदन्ते मोदकैर्मृगाः ॥ २६ ॥
अलब्ध्वा निष्पत्रां मरुपरिचितां कण्टकलतां
वने स्निग्धश्यामे किमपि करभः शुष्यति शुचा ।
न काकः सत्पाकं कवलयति चूतं विषमिव
स्वभावानां भेदादुचितमिह सर्वस्य सुखदम् ॥ २७ ॥
राजार्हभोगं भुक्त्वाद्य प्रातर्भोक्तास्मि किं पुनः । D 127
तद्भुक्तं सुखमाधत्ते यदन्येद्युर्न दुर्लभम् ॥ २८ ॥
रसोदाराहारैर्न हि परिचितोऽश्नाति विरसं
न तिष्ठत्येकाकी बहुपरिजनारम्भपतितः ।

रथारूढः पद्भ्यां गमनसमये शोचतितरा-
मवाप्तार्थभ्रंशः कषति विषमक्लेशपरुषः ॥ २९ ॥
देव त्वद्दृष्टिदिष्टानां सततं नैव दुर्लभम्।
राजार्हभोजनं किं तु जन्मापूर्वं न मे प्रियम्॥ ३० ॥
मृगयाभिहतं मांसमस्माकं जीवितायते।
तत्स्वदेहसमुत्कृत्तं खगद्विगुणमर्प्यताम्॥ ३१ ॥
चिन्ताविषण्णः श्रुत्वैतद्वचनं सहसा नृपः।
प्रहर्षोत्फुल्लनयनाम्भोरुहस्तमभाषत ॥ ३२ ॥
खगस्य तव च प्राणरक्षायै तुल्यसंशये।
ममोपदिष्टः स्पष्टोऽयमुपायः सुधिया त्वया ॥ ३३ ॥
उभयप्राणसंदेहदोलारोहणविह्वलम्।
त्वयैव धृतिमानीतं वयस्येनेव मे मनः ॥ ३४ ॥
D 129 त्वद्दृष्टिपाशबद्धोऽयं विहगः प्रविमुच्यताम्।
मन्मांसैः क्रियतां तावत्संप्रति प्राणधारणम्॥ ३५ ॥
राज्ञा सत्यप्रतिज्ञेन कारुण्यादित्युदीरिते।
अमात्या मुमुहुर्विद्धा विषदिग्धैः शरैरिव ॥ ३६ ॥
न दानावसरे वाच्यं सचिवैर्मे हिताहितम्।
इत्यभूत्समयस्तस्य शरीरत्यागनिश्चयः ॥ ३७ ॥
अथाब्रवीन्नरपतिस्तस्मै वित्तं प्रयच्छत।
तुलामारोपयति मे मांसमुत्कृत्य यस्तनोः ॥ ३८ ॥
हिरण्यवर्षिणा राज्ञा समाहूतास्ततो जनाः।
कुकर्मकूणितधियः पिधाय श्रवणौ ययुः ॥ ३९ ॥
एकस्तु दारुणमतिर्नाम्ना कपिलपिङ्गलः।
अभूत्कनकमादाय संनद्धः क्रूरकर्मणि ॥ ४० ॥
सरलच्छेददक्षाणां वक्राणां च निसर्गतः।
क्रकचानामिव क्रौर्यात्किमकृत्यं दुरात्मनाम्॥ ४१ ॥
D 131 न शस्त्रैः शक्यं यद्विदलयति तत्केलिवचसा
न शक्यं यद्वक्तुं किमपि कुरुते तच्च सहसा।
न शक्यं कर्तुं यत्तदपि कलयत्येव मनसा
खलः सर्वाश्चर्यं किरति चरितैरप्रतिहतः ॥ ४२ ॥
स पारावतमारोप्य तुलामथ महीपतेः।
दक्षिणोरुसमुत्कृत्तं मांसं तत्तुल्यमादधे ॥ ४३ ॥

प्रथमैरथ भूभर्तुः स्पृष्टा रुधिरबिन्दुभिः।
विघूर्णमाना सुचिरं विह्वलेवाभवन्मही ॥ ४४ ॥
पारावतेऽथ गुरुतां मांसे च लघुतां गते।
दीयतामन्यदुत्कृत्य मांसमित्याह भूपतिः ॥ ४५ ॥
कृत्तोरुभुजमांसेऽपि न प्राप्ते खगतुल्यताम्।
त्रैलोक्यसंशयतुलामारुरोह तुलां नृपः ॥ ४६ ॥
नृपतौ स्वयमारूढे स्वायुशेषतनौ तुलाम्।
तत्त्यागदुर्ग्रहोद्विग्ना ययौ कीर्तिर्दिगन्तरम् ॥ ४७ ॥
तस्मिन् क्षणे क्षितिपतेरपरिक्षतेन
धैर्येण विस्मयमयस्त्रिदशाङ्गनानाम्।
धम्मिल्लमाल्यपरिपूरितपाणिपद्मः
पूजादरः किमपि तच्चरिते बभूव ॥ ४८ ॥
निर्विकारं समालोक्य तुलारूढं महीपतिम्। D 133
क्रूरकारी स पप्रच्छ पुरुषस्तं ससाध्वसः ॥ ४९ ॥
अनेन देहदानेन न जाने किं तवेप्सितम्।
सर्वलाभसमारम्भाः शरीरार्था हि देहिनाम् ॥ ५० ॥
सत्यं ब्रूहि तनुत्यागे चित्तं यदि न खण्डितम्।
इति ब्रुवाणं तं राजा बभाषे सस्मिताननः ॥ ५१ ॥
न प्राप्यमस्ति मे किंचिल्लोकेऽस्मिन् किं त्वनुत्तराम्।
हिताय सर्वजगतां सम्यक्संबोधिमर्थये ॥ ५२ ॥
अखण्डितमिदं चित्तं यदि सत्येन तेन मे।
अस्तु प्रकृतिमापन्नं शरीरमपरिक्षतम् ॥ ५३ ॥
इत्युदीरितमात्रेण सत्यशीलस्य भूपतेः।
अक्लीबचन्द्ररुचिरं रूढव्रणमभूद्वपुः ॥ ५४ ॥
ततः पारावते याते लुब्धके च महोत्सवः।
भूपालो भास्वदुदये प्रकाशविभवोऽभवत् ॥ ५५ ॥
सर्वंददः क्षितिपतिः किल यो बभूव D 135
सोऽहं पिशङ्गपुरुषः स च देवदत्तः।
तद्वृत्तसंस्मरणतः प्रसृतस्मितोऽहं
श्रुत्वेति शास्तुरमराधिपतिर्ननन्द ॥ ५६ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
सर्वंददावदानं नाम पञ्चपञ्चाशत्तमः पल्लवः ॥



# ५६ गोपालनागदमनावदानम् ।

D 137 संदर्शनेन येषां द्वेषविषोष्मा प्रशान्तिमुपयाति ।
अमृतरसशीतलास्ते कस्य न सुजनेन्दवो वन्द्याः ॥ १ ॥
धारामुखस्य यक्षस्य स्थानादन्तर्हितस्ततः ।
क्षणादवाप भगवान्नगरं हिङ्गुमर्दनम् ॥ २ ॥
विनयात्पूजितस्तत्र ब्रह्मदत्तेन भूभुजा ।
तत्संसदि क्षणं चक्रे धन्यानामनुशासनम् ॥ ३ ॥
तत्र पौराः समभ्येत्य भगवन्तं व्यजिज्ञपुः ।
सर्वापद्विनिपातेषु त्रातारं सर्वदेहिनाम् ॥ ४ ॥
भगवन्नस्ति नगरस्यान्ते पाषाणपर्वतः ।
तत्र गोपालको नागः क्रूरो वसति दुःसहः ॥ ५ ॥
स पशूनां जनानां च शस्यानां च महाशनिः ।
संपन्नानामभावाय न विघ्नः केन निर्मितः ॥ ६ ॥
D 139 अदान्तदमनस्यास्मिन्नशान्तशमनस्य ते ।
उपसर्गे कृपास्माकं शरणं शरणैषिणाम् ॥ ७ ॥
इत्युक्त्वा तेषु यातेषु भगवान् करुणानिधिः ।
अन्तर्हितः सभामध्याद्ययौ पाषाणभूधरम् ॥ ८ ॥
तटे विसंकटे तस्य भवनं भीमभोगिनः ।
स ददर्श विषश्वासैरिव श्यामीकृतोदकम् ॥ ९ ॥
वलन्निष्कोशनिस्त्रिंशविषमोर्मिवनाकुले ।
तत्तीरे भगवान् बुद्धः पर्यङ्कं समुपाविशत् ॥ १० ॥
प्रसन्नालोकनसुधाबन्धुना स्निग्धचक्षुषा ।
स निनायाशु सविषं विषं निर्विषतामिव ॥ ११ ॥
नीलाम्बुबिम्बिततनुः स बभौ कनकद्युतिः ।
रविर्मरकतच्छायं गाहमान इवाम्बरम् ॥ १२ ॥
तिमिरं नागभवने तत्प्रकाशविसूचितम् ।
पलायमानव्यालोलव्यालजालतुलां ययौ ॥ १३ ॥
नागराजस्तमालोक्य रुधिरारुणलोचनः ।
सहसाकाशमाविश्य चक्रे मेघमयं जगत् ॥ १४ ॥
D 141 क्रोधाग्निधूमनिवहैरिव तस्य घनोद्गमैः ।
विद्युज्जिह्वैरकम्पन्त दिशः संत्रासिता इव ॥ १५ ॥

गर्जितैर्मत्तमेघानां प्रलयारम्भशंसिभिः ।
गुहागेहान्यभज्यन्त हृदयानीव भूभृताम् ॥ १६ ॥
ततः पिष्टद्रुमा वृष्टिः क्लिष्टाद्रिशकलावली ।
पपात पातितधृतिः स्थूलोपलकुलाकुला ॥ १७ ॥
सा दुष्टभुजगोत्सृष्टा वृष्टिर्दृष्ट्वैव तायिनः ।
ययौ बालानिलोल्लासलसत्कुसुमवर्षताम् ॥ १८ ॥

दृष्ट्वा प्रकाशविशदान्यनुपप्लवानि
भृङ्गोपगीतकुसुमानि वनानि तत्र ।
हर्षस्मितप्रसरनिर्जिततारहाराः
क्रूरं फणीन्द्रमवदन् वनदेवतास्तम् ॥ १९ ॥
भोः कालमेघ विकृतिं परिमुञ्च किं च
निष्कम्प एव कनकाचल एष यस्य ।
युष्मद्विधाः प्रलयमारुतभज्यमाना
लीलानितम्बकुहरं शरणं प्रयान्ति ॥ २० ॥

ततः सद्यः परिक्षीणमदः संत्यक्तविक्रियः । D 143
नागः शास्तारमभ्येत्य प्रणनाम कृताञ्जलिः ॥ २१ ॥
तस्य यातस्य शरणं भगवान् करुणानिधिः ।
शिक्षापदप्रदश्चक्रे कुशलाग्रमनुग्रहम् ॥ २२ ॥
प्रणयादर्थितस्तेन चरणालीनमौलिना ।
सततं तस्य भवने संनिधिं विदधे जिनः ॥ २३ ॥
तस्मिन्नवसरे तत्र प्रसङ्गात्तस्य शान्तये ।
यक्षस्य चक्रे भगवान् वज्रपाणेरनुग्रहम् ॥ २४ ॥

लोकोपतापमसमं विनिवार्य शास्ता
विस्तारितस्तुतिपदत्रिदशार्च्यमानः ।
भेजे वनानि विहरन्नथ पूर्वबुद्ध-
पादाम्बुजप्रणयपूतशिलातलानि ॥ २५ ॥

तत्र संदर्शनात्तेन सुरराजेन सस्मितः ।
स्मितस्य कारणं पृष्टः सर्वज्ञस्तमभाषत ॥ २६ ॥

एतेषु पुण्यसलिलामलनिर्झरेषु
निर्वैरसत्त्वसुभगेषु तपोवनेषु ।
धर्माधिवासमुनिमानसमार्जनेषु
शान्तेः पदेषु नु मयैव कृतो विहारः ॥ २७ ॥

D 145 क्रकुच्छन्दः श्रीमान् कनकमुनिरत्रैव सुगतः
स सम्यक्संबुद्धः शमविमलधीः काश्यपमुनिः।
विविक्तेऽस्मिन् सिंहीस्तनतलवलद्बालहरिणे
वने चक्रुः शक्र स्थितिमखिललोकार्तिभिषजः॥ २८॥

इति ब्रुवाणः समुपागतस्य
स पुण्यपाकादथ लुब्धकस्य।
संदर्शनैरेव शमं दिदेश
शिक्षापदार्हं शरणं गतस्य॥ २९॥

भाग्यवान् भगवतो ह्यनुग्रहा-
ल्लुब्धकः कुशललुब्धमानसः।
तत्प्रदिष्टनखकेशलाञ्छनं
तत्र चैत्यमकरोन्मृगाधिपम्॥ ३०॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
गोपालनागदमनं नाम षट्पञ्चाशत्तमः पल्लवः॥



## ५७ स्तूपावदानम् ।

दिक्कान्ताश्रवणोत्तंसतुलारोपितसद्गुणाः ।
ते जयन्ति जगद्येषां यशःस्तूपैर्विराजते ॥ १ ॥

भगवानथ शक्रेण तत्र प्राणावनार्थितः ।
पूर्वबुद्धकृतस्तूपे निजस्तूपमकारयत् ॥ २ ॥

कृते रत्नमये तस्मिन् देवैः सूर्यशतत्विषि ।
जगाम जगतां क्वापि महामोहोपमं तमः ॥ ३ ॥

तत्र किन्नरगन्धर्वनरनागदिवौकसाम् ।
धर्मोपदेशविनयं समादिश्य ययौ जिनः ॥ ४ ॥

पाषाणपर्वते देवैर्न्यस्ते स्तूपचतुष्टये ।
भगवान् पञ्चमं स्तूपं पञ्चस्तूपैर्न्यवेशयत् ॥ ५ ॥

अथ बालोक्षनामानं देशं प्राप्तस्तथागतः ।
श्रेष्ठिना सुप्रबुद्धेन कुबेरेणेव पूजितः ॥ ६ ॥

दिदेश धर्मविनयं तस्मै येन स सानुगः । D 149
मोहनिद्राक्षये प्राप सुप्रबुद्धः प्रबुद्धताम् ॥ ७ ॥

स शासनाद्भगवतः पुण्यं निजमिवोन्नतम् ।
बालोक्षीयाभिधं स्तूपं रत्नदीप्तं न्यवेशयत् ॥ ८ ॥

डम्बरग्राममासाद्य शनैरथ तथागतः ।
विनीय डम्बरं नाम यक्षं शिक्षापदप्रदः ॥ ९ ॥

चण्डालग्राममभ्येत्य चण्डालीं मल्लिकाभिधाम् ।
सहितां सप्तभिः पुत्रैर्विनयोपनतां व्यधात् ॥ १० ॥

ते कर्मशेषसंप्राप्तमातङ्गकुलदूषिताः ।
पद्माकर इव प्रापुर्वैमल्यं जिनदर्शनात् ॥ ११ ॥

अन्येषु दूषिततरेषु जुगुप्सितेषु
पापोपतापविपुलव्यसनातुरेषु ।
सन्तः प्रवृत्तकरुणाः कुविकल्पहीना
दीनावलम्बनवशादधिकं भवन्ति ॥ १२ ॥

अवाप्य पाटलग्रामं सानुगः सुगतस्ततः ।
धर्म्यां गृहपतेश्चक्रे पोतलाख्यस्य सत्कथाम् ॥ १३ ॥

D 151 शिक्षापदाप्तवैमल्यः सुगतानुग्रहेण सः ।
तत्केशनखलेशाङ्कं रत्नस्तूपमकारयत् ॥ १४ ॥

तत्र संदर्शनायातं भगवानिन्द्रमब्रवीत् ।
मिलिन्द्रो नाम राजास्मिन् देशे स्तूपं करिष्यति ॥ १५ ॥

इति भगवतः स्थाने स्थाने दयार्द्रविलोकना-
दभवदखिलो लोकः शोकप्रमोहभयोज्झितः ।
अभिनवकृतस्तूपोत्सङ्गक्वणन्मणिकिङ्किणी-
कुलकलकलक्रीडालोला बभूव च मेदिनी ॥ १६ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
स्तूपावदानं नाम सप्तपञ्चाशत्तमः पल्लवः ॥

## ५८ पुण्यबलावदानम् । D 153

अनिन्द्या वन्द्यास्ते सकलकुशलोत्पत्तिवसुधां
सुधां सिद्धामन्तर्दधति किल ये पूर्णकरुणाः ।
प्रसन्नैरापन्नव्यसनशमनालोकनरसैः
कृतारोग्याः पुंसां भवपरिभवक्षोभभिषजः ॥ १ ॥

नगर्यां पुष्कलावत्यां सस्मितः स्मितकारणम् ।
सुरराजेन भगवान् पृष्टः पुनरभाषत ॥ २ ॥

श्रीमान् पुण्यबलो नाम पुराभूत्पृथिवीपतिः ।
यस्याशीतिसहस्राणि नगरीणां परिग्रहः ॥ ३ ॥

तस्य पुण्यवती नाम राजधानी व्यराजत ।
स्फटिकागाररुचिरा ज्योत्स्नेव रजनीपतेः ॥ ४ ॥

स कदाचिन्नवोद्यानयात्रायां रथमास्थितः ।
ददर्श पथ्यविरहात्पथि सीदन्तमातुरम् ॥ ५ ॥

स तं दृष्ट्वा परिम्लानं दीर्घरोगेण दुर्गतम् । D 155
विव्यथे करुणाक्रान्तः क्रान्ताखिलदिगन्तरः ॥ ६ ॥

संतप्तं परमालोक्य सद्यः संक्रान्तिदर्पणाः ।
सन्तः संतापमायान्ति सूर्यकान्तमया इव ॥ ७ ॥

समस्तद्वाररथ्यासु सर्वेषु नगरेषु सः ।
रोगिणां भक्तभैषज्यशालाशय्याद्यकारयत् ॥ ८ ॥

आदिदेश ततस्तेभ्यः कुशलान् परिचारकान् ।
प्रथमं हि चिकित्साङ्गं व्याधेः सत्परिचारकः ॥ ९ ॥

करुणार्द्रः क्षमः क्षान्तश्चिकित्सकमते स्थितः ।
स्नेहादविचिकित्सश्च दुर्लभः परिचारकः ॥ १० ॥

राजा ततः समाहूय नियतान् परिचारकान् ।
अवदत्क्रियतां रोगिपरिचर्या दिवानिशम् ॥ ११ ॥

राजार्हशालासु कृता वरशय्यादिकल्पना ।
रोगिणां रत्नसोपानाः पद्मिन्यश्चामलोदकाः ॥ १२ ॥

भिषग्भैषज्यसंपत्तिर्विहिता च महीयसी ।
अधुना युष्मदायत्तं तत्स्वास्थ्यमिति मे मतिः ॥ १३ ॥

संतापं शमयत्यतीव शिशिरैः शीतं सुखेनोष्मणा D 157
तृष्णां शीतजलैर्मुहुर्मितहिताहारोपचारैः क्लमम् ।

स्वस्थोऽसील्यधृतिं प्रियेण वचसा केलिक्रमेणारतिं
लोकेऽस्मिन् परिचारकः स्थिरभिषग्धर्मः परस्मिन्नृणाम् ॥ १४ ॥

तस्माद्भवद्भिस्तप्तानां रोगयोगेन सीदताम्।
कार्या मुहुर्मुहुर्वाक्यैरियमाश्वासनस्मृतिः ॥ १५ ॥

वैद्योऽनवद्यः सुगतः प्रसादी
धर्मोपदेशः परमौषधं च।
संसारदीर्घज्वरशोषितानां
परायणं शान्तिरसायनं तत् ॥ १६ ॥

इत्यादिष्टा नृपतिना ते तेन वसुवर्षिणा।
गत्वा यथोचितं चक्रुः स्वास्थ्याय किल रोगिणाम् ॥ १७ ॥

ततः कुशलवादेन तेन तद्गतमानसान्।
व्याधिमुक्तान्नरपतिः स्वयं द्रष्टुं विनिर्ययौ ॥ १८ ॥

D 159 शक्रस्त्वपरशक्रस्य तस्य पुण्यसमुज्ज्वलम्।
रथं विनिर्ममे युक्तं षड्दन्तैः पाण्डुरैर्द्विपैः ॥ १९ ॥

सुखस्पर्शानिलालोलहेमरत्नसरोरुहाः।
भृङ्गाङ्गनोपगीताश्च दिव्याः कमलिनीः पथि ॥ २० ॥

तेषु रत्नसरोजेषु स्थिता नृत्यकलाकुलाः।
दूरान्नृपतिमायान्तं सुरनार्यः सिषेविरे ॥ २१ ॥

तस्य सत्त्वसुधासिन्धोः सत्त्वं ज्ञातुं मरुत्पतिः।
कृत्वान्धरूपमात्मानमभ्येत्य तमभाषत ॥ २२ ॥

राजन्नयनहीनोऽहं जन्मालोकविवर्जितः।
सर्वसत्त्वपरित्राणसंनद्धं त्वामुपागतः ॥ २३ ॥

एते तव प्रभावेण रोगिणः स्वास्थ्यमागताः।
त्वत्कीर्तिवादमुखराश्चरन्ति रुचिरत्विषः ॥ २४ ॥

त्रातुमर्हसि मां देव दुःखदीनान्धबान्धव।
दक्षिणं नयनं मह्यं दीयतां यदि शक्यते ॥ २५ ॥

इत्युक्तस्तेन नृपतिः प्रसन्नवदनद्युतिः।
संतारणाय जगतां सम्यक्संबोधिसिद्धये ॥ २६ ॥

D 161 प्रणिधानं समाधाय शस्त्रेणोत्पाट्य लोचनम्।
ददौ धैर्यनिधिस्तस्मै पुष्पैरापूरितः सुरैः ॥ २७ ॥

तस्यात्यद्भुतदानेन विस्मयादिव साचला ।
विचचालाखिला पृथ्वी विलोलार्णवमेखला ॥ २८ ॥

जातालोकं तमालोक्य नेत्रेणैकेन भूपतिः ।
अतिदानरसप्रीत्या द्वितीयं दातुमुद्ययौ ॥ २९ ॥

ततः सुरपतिस्तस्य समास्थाय निजं वपुः ।
स्वस्थं विधाय नयनं प्रशशंसातिसत्त्वताम् ॥ ३० ॥

दानक्षणे स्वावयवेऽपि यस्य
न जायते स्नेहलवः कदाचित् ।
का नाम तस्योर्जितसत्त्वसिन्धो-
र्धनाभिधाने रजसि स्वबुद्धिः ॥ ३१ ॥

स भूपतिः पुण्यबलोऽहमेव
तदाभवं दानरमाप्तबोधिः ।
आश्चर्यवृत्तस्मरणेन तस्य
जातस्मितस्तन्मयतामवाप्तः ॥ ३२ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
पुण्यबलावदानं नामाष्टपञ्चाशत्तमः पल्लवः ॥



D 163

## ५९ कुणालावदानम् ।

एकः स एव सुकृतोचितचक्रवर्ती
सुव्यक्तकीर्तितिलका गुणरत्नभूषा ।
अम्लानदानकुसुमा कृतसत्यचर्चा
यस्यावभाति शुचिशीलदुकूलिनी श्रीः ॥ १ ॥

पुरोत्तमे पाटलिपुत्रनाम्नि
महीयुवत्यास्तिलकायमाने ।
यशोनिधिः सौर्यकुलावतंसः
श्रीमानशोकः क्षितिपो बभूव ॥ २ ॥

पूर्वं स कामोपपदेन कामी
चण्डोपचारेण ततश्च तीक्ष्णः ।
धर्मप्रदानेन जगाम पश्चा-
द्विवेकपाके वयसि प्रसिद्धिम् ॥ ३ ॥

D 165 प्रसन्नपुण्योपवनस्थलीना-
मुद्भिन्नशोभाभरणायमाने ।
तस्मिन्नशोके कुशलप्ररोहै-
रशोकतामेव बभार लोकः ॥ ४ ॥

मूर्ध्नि स्थितान्तःपुरसुन्दरीणां
पद्मावती तस्य सुखाय देवी ।
सत्त्वोत्सवं पुत्रमसूत पुण्यै-
स्त्यागानुगा श्रीरिव साधुवादम् ॥ ५ ॥

नरेन्द्रसूनुः कनकावदातः
श्रीपद्मिनीपद्मपलाशनेत्रः ।
हिमाद्रिहंसस्य कुणालनाम्न-
स्तुल्येक्षणोऽभूत्स कुणालनामा ॥ ६ ॥

D 167 विद्यावधूनां विमलात्मदर्श-
श्चैत्रोत्सवः सर्वकलालतानाम् ।
स सर्वलोकाभिमतो बभूव
चन्द्रोदयः कीर्तिकुमुद्वतीनाम् ॥ ७ ॥

ताराधिपोत्सङ्गमृगोपमस्य
तस्यायतं नेत्रसरोजयुग्मम् ।
सविभ्रमं भ्रूभ्रमराभिरामं
पश्यन्नरेन्द्रः प्रययौ न तृप्तिम् ॥ ८ ॥

नानागुणालंकरणाय तस्मै
कन्दर्पमुक्तालतिकायमानाः ।
समस्तदिग्द्वीपधराधिनाथा
धन्याभिमानेन ददुः स्वकन्याः ॥ ९ ॥

तस्यायताक्षी दयिता बभूव
चन्द्रानना काञ्चनमालिकाख्या ।
जनानुरागोद्भवभव्यमूर्ते-
र्जन्मान्तरस्येव रतिः स्मरस्य ॥ १० ॥

ततः कदाचित्पितुरन्तिकस्थं
तं वीक्ष्य संघस्थविरः कुमारम् ।
स तेन राज्ञः सुयशोविहारे
विविक्तदेशं शनकैर्निनाय ॥ ११ ॥

स तस्य कालेन विनाशमक्ष्णो- D 169
र्ज्ञात्वा मनीषी षडभिज्ञचर्यः ।
आगामिदुःखोद्धरणाय योगी
कारुण्ययोगी तमुवाच वृद्धः ॥ १२ ॥

इदं तवापातनिमित्तभूतं
पश्यामि चित्तं विभवाभिभूतम् ।
वयः सहायं कुसुमायुधस्य
वपुश्च लीलादलितेन्दुदर्पम् ॥ १३ ॥

जात्यैव चक्षुश्चपलं किमन्य-
दस्मिन्ननास्थैव सुखोपपत्तिः ।
एतेन कृष्टाः स्वपथप्रनष्टाः
स्पृहाभिधाने कुहरे पतन्ति ॥ १४ ॥

इदं हि नीलोत्पलपल्लवाभं
विलोचनं नाम नृणां विशालम् ।
रागोरगच्छिद्रसमुद्रमेव
येनेन्द्रियाण्याशु परिस्रवन्ति ॥ १५ ॥

D 171 धन्यास्त एवासमसत्त्वधीराः
शीलप्रभावान्न भवन्ति येषाम् ।
लावण्यपानेन विशेषतृष्णा-
विघूर्णमानानि विलोचनानि ॥ १६ ॥

इत्यादि तस्य प्रशमोपपन्न-
माकर्ण्य वाक्यं नरनाथसूनुः ।
तथेति कृत्वा मनसि प्रपन्ने
कृतप्रणामः स्वपदं जगाम ॥ १७ ॥

अथाययौ भृङ्गगणोपगीतः
सिन्दूरपूरायितकिंशुकश्रीः ।
मनस्विनीमानवधानुबन्धी
मधुः शरत्सौरभमत्तनागः ॥ १८ ॥

उद्यानवल्लीनवपल्लवानां
वियोगिनीतापविपल्लवानाम् ।
बभूव वृद्धिः सहसा सहैव
प्रत्यग्ररागोद्गमदुःसहैव ॥ १९ ॥

D 173 वातेरितैश्चम्पकपत्रलेखैः
मैत्रीं समासूत्रयतः स्मरेण ।
स पप्रथे दिक्षु धृतिप्रमाथी
चैत्रस्य जैत्रः प्रथमाभियोगः ॥ २० ॥

लसत्सु पुष्पेष्वपि तेषु तेषु
बभूव भूम्ना मधुबान्धवस्य ।
भृङ्गस्वनैर्गीतयशःप्रकारः
कृतोपकारः सहकार एव ॥ २१ ॥

तस्मिन् वसन्तोत्सवविभ्रमेऽपि
विचिन्तयन्तं स्थविरोपदेशम् ।
नरेन्द्रसूनुं विजने ददर्श
तं तिष्यरक्षा क्षितिपालपत्नी ॥ २२ ॥

अक्लीबचन्द्रद्युतिमायताक्षं
पीनांसमाजानुविलम्बबाहुम् ।
अभ्येत्य तं स्नेहरसार्द्रचित्ता
यवीयसी सा जननी जगाद ॥ २३ ॥

कुमार पुष्पेषुनवावतारा D 175
संसारसारस्तव लोचनश्रीः ।
धृतिं हरत्येव न कस्य लोके
विशेषतः पेशल एष वेशः ॥ २४ ॥

उक्त्वेति तं सा सहसा भुजाभ्या-
मुत्सृज्य लज्जां दृढमालिलिङ्ग ।
प्रकम्पसिञ्जामुखरैरसक्तं
निवार्यमाणाभरणैरिव स्वैः ॥ २५ ॥

पराप्यसौ मे जननी निजेव
वात्सल्यमाविष्कुरुते सदैव ।
ध्यात्वेति निःशङ्कमतिः स तस्याः
पादप्रणामानतशेखरोऽभूत् ॥ २६ ॥

मदोद्धतानां घनमोहकाले
प्रक्षोभितानां मकराङ्कपातैः ।
तरङ्गिणीनामिव नाङ्गनानां
श्वभ्रावपातेऽस्ति मनाङ् निरोधः ॥ २७ ॥

सा तं बभाषे मदनाभिभूता D 177
प्रगल्भसंरम्भविशृङ्खलेन ।
पापावपाते शुचिना कलङ्क-
भीत्येव शीलेन विमुच्यमाना ॥ २८ ॥

प्रियोऽसि मे तुल्यवयाः कुमार
मातुः सपत्नी तव नास्मि माता ।
इदं त्वदालिङ्गनसङ्गयोग्या
सौभाग्यभोग्यं भजतां तनुर्मे ॥ २९ ॥

निर्लज्जतैषा परमर्थनीया
यदर्थयन्ते स्वयमेव नार्यः ।
प्रसीद किं वा क्रियते त्वदङ्ग-
सङ्गश्चिरं मे हृदयेऽवसन्नः ॥ ३० ॥

स्तनस्थलं हारलताभिरामं
नितम्बबिम्बं रशनासनाथम् ।
स्त्रीणां नखोल्लेखदरिद्रमेति
नोन्निद्रशोभासुभगाभिमानम् ॥ ३१ ॥

D 179 नवाभिलाषातिशयोन्मुखानि
चित्तानि वातूलकुतूहलानि ।
स्त्रीणां स्वभावेन भवन्ति लोके
लावण्यलुब्धानि च लोचनानि ॥ ३२ ॥

उक्त्वेति सा कम्पतरङ्गिताङ्गी
श्वासाभिभूताधरपल्लवश्रीः ।
स्वेदाम्बुनश्यत्तिलकाधिकारं
स्मरोपदिष्टं प्रकटं बभार ॥ ३३ ॥

वाणीं विरुद्धां स निशम्य तस्या-
स्तां तप्तसूचीमिव दीर्णकर्णाम् ।
निरीक्षमाणः क्षितिमक्षिलग्नं
मुमोच तत्पापमिवावनम्रः ॥ ३४ ॥

तस्याः शशाङ्कोपममाननं तत्
समुन्मिषत्पापमलं कुमारः ।
द्रष्टुं न सेहे सहसा विषाद-
लज्जानिमीलद्वदनारविन्दः ॥ ३५ ॥

D 181 अनल्पपापश्रवणप्रकम्पा-
द्विलोलरत्नोज्ज्वलकुण्डलोत्थम् ।
तस्य क्षणं कर्णयुगं विशुद्ध्यै
प्रभावनं वह्निमिवाविवेश ॥ ३६ ॥

स पाणिना श्रोत्रयुगं पिधाय
ससर्ज वाचं दशनांशुशुभ्राम् ।
प्रक्षालयंस्तां क्षणमङ्गसङ्गां
गङ्गामिवालिङ्गनदोषशान्त्यै ॥ ३७ ॥

मातर्न युक्तं तव वक्तुमेतत्
सद्वर्त्मना गच्छ नियच्छ वाचम् ।
सद्यः परित्यागदशाविलोलं
शीलं समाश्वासय शीर्यमाणम् ॥ ३८ ॥

दर्पः प्रमादः परवित्तवाञ्छा
पापानुबन्धी विषयाभिलाषः ।
एतानि जन्तोर्विनिपातकाले
द्वाराण्यपायस्य निरर्गलानि ॥ ३९ ॥

धनेन किं दानपराङ्मुखाणां D 183
श्रुतेन किं द्वेषवशीकृतानाम्।
रूपेण किं सद्गुणवर्जितानां
कुलेन किं शीलविनाशकानाम्॥ ४० ॥

मातश्चञ्चलतां विमुञ्च रुचिरं रक्षाक्षयेन्दुं यशः
शीलं पालय पश्य वंशममलं पापे मतिं मा कृथाः।
स्फूर्जन्नारकवह्निपाकविकलप्रेतप्रलापोत्कटाः
पापानां परलोकवर्त्मनि किल क्लेशाकुला भूमयः॥ ४१ ॥

श्रुत्वेति वाक्यं क्षितिपात्मजस्य
रागग्रहं सा न मुमोच तीव्रम्।
मोहान्धकूपस्य जनस्य नान्त-
र्धर्मोपदेशार्ककरा विशन्ति॥ ४२ ॥

चोरीव सा मन्मथपार्थिवेन
प्रमाथिना प्रव्यथिता प्रसह्य।
श्वासप्रयासस्खलिताभिधान-
मसंगतार्थं प्रललाप तत्तत्॥ ४३ ॥

स्वस्थोपदेशः क्रियते त्वयायं D 185
स्मरार्दिताहं न शृणोमि किंचित्।
नायाति वाग्भिः प्रशमं विशाल-
ज्वालाकलापः प्रबलः स्मराग्निः॥ ४४ ॥

देशे स्खलन्निर्झरशीतलेऽपि
भवन्ति तप्तानि मरुस्थलानि।
रागातुराणामुदयेऽपि भानो-
र्घोरान्धकाराणि दिगन्तराणि॥ ४५ ॥

नास्त्येव तप्तामबलां दयालोः
संरक्षतस्ते यदि कोऽपि धर्मः।
तत्साधुभिर्दर्शितगौरवस्य
तस्याप्यभावे कथमस्त्यधर्मः॥ ४६ ॥

ये शीतलाः स्वस्थधियः सुखाय
तेषां प्रमाणं स्थिर एष धर्मः।
संतापितानां व्यसनातुराणां
निषिद्धकार्येष्वपि, को विचारः॥ ४७ ॥

D 187 मयैव पापं प्रथमं गृहीतं
धर्मोऽस्ति ते मत्परिरक्षणेन।
स्पर्शेन निर्वापय संततां मे
संतापजार्तिं शशिशीतलेन ॥ ४८ ॥

संतापं हरतो विधोः क्षपयतस्तीव्रं तमो भास्वतः
शीतक्लेशमहर्निशं शमयतः पापं किमग्नेः फलम्।
ब्रूहि ज्ञातसमस्तशास्त्र यदि वा सत्यं त्वमेव स्फुटं
दृष्टः किं व्यसनार्तरक्षणसमः सत्कर्मधर्मः क्वचित् ॥ ४९ ॥

रहस्यभेदोऽत्र न कश्चिदस्ति
जनोज्झितः संवृत एष देशः।
स्वेच्छाप्रवृत्तप्रणयोपनम्राः
प्रौढाङ्गना भाग्यवतां भवन्ति ॥ ५० ॥

क्लिष्टाधरं क्लान्तकपोलपत्रं
स्रस्तालकं खेदलवार्द्ररागम्।
नितम्बिनीनां रतितोषितानां
पश्यन्ति धन्या वदनारविन्दम् ॥ ५१ ॥

D 189 विशन्ति केचित्करवालवल्ली-
विलोलजिह्वं रणकालवक्त्रम्।
योषित्कृते क्रोधननक्रचक्र-
करालमन्ये मकराकरौघम् ॥ ५२ ॥

तीव्रैश्चिरक्लेशविशेषशोषै-
रर्थेषु पुंसां परमः प्रयत्नः।
धर्मार्थ एवार्थपरिग्रहोऽयं
धर्मस्य कामं फलमग्र्यमाहुः ॥ ५३ ॥

इति ब्रुवाणां बहुभिः प्रकारै-
स्तामब्रवीदाकुलितां कुमारः।
मातस्त्रिवर्गस्य फलं समूलं
धर्मः प्रधानं कुशलस्य नाभिः ॥ ५४ ॥

न निर्जने पापमुपैति गुप्ति-
मन्तर्हितः स्वर्गिगणोऽत्र साक्षी।
छाया प्रयाता हि सहायभावं
जायेव जानाति जनस्य सर्वम् ॥ ५५ ॥

रहः कृतं कर्म फलत्यवश्यं D 191
न कर्मणामस्ति फलप्रणाशः ।
विषं निपीतं विजनान्धकारे
प्राणेषु किं न प्रहरत्यसह्यम् ॥ ५६ ॥
जात्या स्त्रियः पापनिमित्तभूता-
स्तत्रापि घोरः परदारसङ्गः ।
मातेति मोहात्कलहेऽभियुक्तां
नान्तेऽपि जन्तुः स्पृशति स्वकान्ताम् ॥ ५७ ॥
इत्यर्थनाभङ्गपराङ्मुखी सा
तिरस्कृता तेन नितान्ततप्ता ।
हराम्यवश्यं तव नेत्रदर्प-
मुक्त्वेति पापा स्वपदं जगाम ॥ ५८ ॥
ततः पुरीं तक्षशिलाभिधानां
महीपतेः कुञ्जरकर्णनाम्नः ।
सेनारजःपुञ्जविनिर्जितार्कं
जेतुं कुमारं विससर्ज राजा ॥ ५९ ॥
स तां पुरीं प्राप्य गजान्धकार- D 193
ग्रस्ताखिलाशः परिवार्य तस्थौ ।
क्षुब्धाब्धिधीरैर्भटकुञ्जराणां
द्विधेव कुर्वन् भुवनं निनादैः ॥ ६० ॥
ततः प्रसाद्य प्रणिपत्य मूर्ध्ना
नृपात्मजं तक्षशिलाधिनाथः ।
गजाश्वरत्नैरभिपूज्य धीमान्
स्वराजधानीं स्वयमानिनाय ॥ ६१ ॥
प्रियोपचारैरभिपूज्यमान-
स्तेनादरात्तत्र स राजपुत्रः ।
दिनेषु तस्थौ धनयौवनार्द्र-
समुल्लसन्मेघमलीमसेषु ॥ ६२ ॥
अत्रान्तरे पुत्रमुखारविन्द-
संदर्शनोत्कण्ठितमानसस्य ।
चिन्तानुबन्धादिव भूमिभर्तु-
र्व्याधिर्बभूवोदरबद्धमूत्रः ॥ ६३ ॥

D 195 वैद्यैर्वृतोऽन्तःपुरधाम्नि नाना-
भैषज्यचिन्ताविहितावधानैः।
असाध्यरोगावगमाभियोग-
संदेहसंदर्शितखेदवक्त्रैः ॥ ६४ ॥

उद्वेगभीत्येव निषद्यमान-
काञ्चीकलापेन वधूगणेन।
चित्रार्पिताकारतुलाश्रितेन
निष्पन्दनेत्रेण विलोक्यमानः ॥ ६५ ॥

आसन्नकान्ताकरमन्दमन्द-
विस्पन्दिना चामरपल्लवेन।
उच्छ्वासभाजा परिपाण्डुरेण
शोकाकुलेनेव स वीज्यमानः ॥ ६६ ॥

शीताम्बुभृङ्गारनिविष्टदृष्टिः
कषायपाने विहितावमानः।
निद्रानिषेधप्रतिपन्नकोपः
पथ्योपदेशप्रविशद्विषादः ॥ ६७ ॥

D 197 निन्द्यामयोद्वेगजुगुप्समानः
कायेऽपि स द्वेषदशामवाप्तः।
पत्नीस्तनोत्सङ्गनिषण्णमूर्धा
क्षामस्वरः क्ष्मापतिराचचक्षे ॥ ६८ ॥

वैद्यैः किमद्यापि निवृत्तविद्यै-
र्व्यथानिमित्तैः किमतथ्यपथ्यैः।
अशर्मकर्मोपनिपीडितानां
धर्मोपदेशप्रणयश्चिकित्सा ॥ ६९ ॥

कायः प्रयातोऽयमपायभूमिं
शल्यायते भोगगणोऽप्यभोग्यः।
अन्धस्य लावण्यवतीव कान्ता
भोगोज्झिता श्रीर्धन एव शापः ॥ ७० ॥

अत्यन्तमन्दाग्निरपि प्रसक्त-
प्रदीप्तशोकानलदह्यमानः।
प्रवृद्धतृष्णोऽप्यनपेतजाड्यः
सुखी गतासुर्न तु दीर्घरोगी ॥ ७१ ॥

प्रच्छन्नमन्तःपरिवर्तिपापं D 199
नीचावमानः कलहानुबन्धी ।
व्याधिः स्थिरारम्भजुगुप्सितश्च
दीप्ताग्नितापेन शमं प्रयाति ॥ ७२ ॥
कुकर्मणामेष विचित्ररूप-
विपर्ययायासमयो विलासः ।
दारिद्र्यकष्टं यदरोगभाजां
लक्ष्मीवतां यच्च सदैव रोगः ॥ ७३ ॥
वन्ध्यं जन्म शरीरिणां विरहितं बुद्ध्या विचारेच्छया
धिग्बुद्धिर्न कृतः प्रसाधनविधिर्यस्याः श्रुतेनोज्ज्वलः ।
किं तेन श्रुतविस्तरेण न गतो निर्दैन्यतां यः श्रिया
किं श्रीविभ्रमजृम्भितेन नितरामारोग्यभोग्यं न यत् ॥ ७४ ॥
आनीयतां मे त्वरया कुमारः
प्रजाप्रियस्तक्षशिलानियुक्तः ।
पश्यामि तस्मिन् विमले सुवृत्ते
संक्रान्तमद्यैव कृतं स्वराज्यम् ॥ ७५ ॥
समर्पितोदग्रसितातपत्रं D 201
निबद्धमौलिं प्रणयान्मयैव ।
पश्यन्तु तं पुण्यरसायनेन
मामेव पौरास्तरुणत्वमाप्तम् ॥ ७६ ॥
इत्युक्तमाकर्ण्य नरेश्वरेण
तं तिष्यरक्षा निजगाद जाया ।
तुल्यप्रवृत्तैर्भयशोकदैन्य-
मात्सर्यमोहैः परिपूर्यमाणा ॥ ७७ ॥
अहं महीपाल निरामयं त्वां
करोमि ते पश्य विशेषयुक्तिम् ।
यान्तु स्वशिक्षार्थकदर्थितार्था
जनक्षयावद्यजुषः कुवैद्याः ॥ ७८ ॥
मिथोविवादैः श्रुतगर्ववादै-
स्तज्ज्ञापवादैरबुधानुवादैः ।
निर्विद्यवैद्याः क्षपयन्ति नित्यं
क्षयोद्यता वासरमातुरं च ॥ ७९ ॥

D 203 त्याज्यं न राज्यं खसुतेऽपि राजन्
स्पृहां परस्थं विदधाति सर्वम्।
त्यक्ता च लक्ष्मीः कुरुते क्षणेन
विपत्सहस्रज्वलनानुतापम्॥ ८०॥
सद्यः सुतारोपितशेखराणां
तत्कालमीलत्प्रभुगौरवाणाम्।
राज्ञामनम्रैरवधीरितानि
तृणीभवन्त्येव हि शासनानि॥ ८१॥
इति क्षितीशस्य धृतिं विधाय
निर्गत्य तस्माद्भवनान्तरात्मा।
अन्विष्य तत्तुल्यगदाभिभूत-
माभीरमेकान्तमथानिनाय॥ ८२॥
क्रूराशया क्रूरधियैव दास्या
हत्वा तमुत्पाटितनाभिकोषम्।
तस्यान्त्रलग्नं पुरुषं ददर्श
घृणाविहीना विकृतं कृमिं सा॥ ८३॥
D 205 ऊर्ध्वं प्रचारेण जवादधश्च
शकृत्सृजन्तं तमवेक्ष्य हन्त।
सा पिप्पलीहिङ्गुविडङ्गयुक्तं
चिक्षेप तस्मै परिवादिवर्गम्॥ ८४॥
तैस्तैः स कीटः सविषैश्च कैश्चित्
क्षारैरसह्यैर्न मुमोच जीवम्।
पलाण्डुना खण्डितकण्डलेन
संस्पृष्टमात्रः प्रलयं जगाम॥ ८५॥
उपायमासाद्य परप्रहृष्टा
गता ततः सा नृपतेः समीपम्।
पलाण्डुना छन्नतरार्पितेन
क्षणेन तं खस्थतनुं चकार॥ ८६॥
विषस्य यत्रास्ति न जातु शक्ति-
र्यत्राशु शस्त्राण्यपि कुंठितानि।
यत्रालसोत्साहहतो हुताश-
स्तत्राप्यभग्नप्रणया युवत्यः॥ ८७॥

ततः कृतज्ञः क्षितिवल्लभोऽस्यै D 207
प्रेमानुबन्धप्रतिबद्धबुद्धिः ।
वरं ददौ जीवितलाभहर्षात्
तयार्थितं सप्त दिनानि राज्यम् ॥ ८८ ॥

संप्राप्तराज्या स्ववशैव सर्वं
कर्तुं प्रवृत्ता क्षितिपालकार्यम् ।
सा प्राहिणोत्तक्षशिलेश्वराय
लेखं समुद्रं सह चारुरत्नैः ॥ ८९ ॥

लेखं ततस्तं नृपशासनाङ्क-
मादाय मान्यं विनयावनम्रः ।
स्वयं विभक्ताक्षरलक्षितार्थ-
मवाचयत्तक्षशिलाधिनाथः ॥ ९० ॥

स्वस्ति श्रीपाटलिपुत्रादसमसमरसाहससमासादितसमस्तसिन्धुसीमासमुच्छलदविरलविमलयशःकलापकलितधवलदुकूलवसुधावधूदत्तभोगसौभाग्यगर्वखर्वीकृतविपुलरिपुप्रतापः शाप इवारातिरमणीविलासानां प्रणतिप्रतिबिम्बितानन्तसामन्तवक्त्रशतपत्रैकपात्रीकृतविमलमणिपादपीठः सुहृत्कुलकमलविकासवासरेश्वरः स्फीतसौर्यमौर्यमहावंशवनपञ्चाननः श्रीमदशोकदेवस्तक्षशिलाधिपं श्रीकुञ्जरकर्णं संबोधयति । यथा—एष मे निरपत्रपः कुचरितमैत्रीपरित्रस्तचारित्रः पुत्रमुखशत्रुरपवित्रः शास्त्रविद्वेषी पितृकलत्राभिलाषविषपात्रीकृतनेत्रशतपत्रः पापानुरूपरूपयौवनोत्साहसाहसः समुत्पाटितलोचनमणिर्निर्वसनो निर्वास्यतां जननीजनभुजङ्ग इत्यस्मदभ्यर्थनाप्रणयः ॥ D 209

लेखार्थमित्युग्रतरं विचार्य
निवार्यमाणः कृपया कृपालुः ।
प्रीत्या कुमारस्य नृपस्य भीत्या
दोलायमानो नृपतिर्बभूव ॥ ९१ ॥

तत्र स्थितस्तं क्षितिमीक्षमाणं
निरीक्ष्य बाष्पाकुलितं कुमारः ।
किमेतदित्यागतसंशयार्तिः
स्वयं समादाय ददर्श लेखम् ॥ ९२ ॥

आज्ञां गुरोर्दुःसहदुर्ग्रहां तां
निश्चित्य मिथ्योत्थिततीव्रमन्योः ।
तस्मिन्नसह्यव्यसनोदयेऽपि D 211
सोऽचिन्तयन्निश्चलधैर्यवृत्तिः ॥ ९३ ॥

इच्छा पितुस्तावदियं न लङ्घ्या
रक्ष्यश्च तत्कोपभयान्नृपोऽयम्।
मिथ्यापराधात्कुपितोऽपि राजा
प्रसादमायाति न शुद्धवादैः ॥ ९४ ॥

नेत्रे परित्यज्य पितुः करोमि
कोपाग्नितापप्रशमं सुखाय।
अस्यापि तच्छासनभङ्गजन्मा
महीपतेर्मा व्यसनोदयो भूत् ॥ ९५ ॥

विनश्वरे क्लेदमये शरीरे
चक्षुर्जलस्तोकविकाररूपम्।
का नाम तस्मिन् क्षणिकप्रकाशे
तृणप्रदीपप्रतिमे गुणास्था ॥ ९६ ॥

लोके यदालोकनलाभलोभात्
D 213 संरक्ष्यते चक्षुरिति प्रयत्नात्।
रूपं तदेतत्तरलेन्द्रजाल-
स्वप्नावलीमित्रमभित्तिचित्रम् ॥ ९७ ॥

चिरं विचार्येति नरेन्द्रसूनु-
स्तस्मिन्ननिच्छाविमुखेऽपि राज्ञि।
निवार्यमाणोऽपि जनैः सबाष्पै-
रकारयत्तत्र विघातमक्ष्णोः ॥ ९८ ॥

हेमप्रदः क्रूरतरेण पुंसा
स वित्तलुब्धेन समुद्धृताक्षः।
दुर्वारमातङ्गहृताब्जपुञ्ज-
पद्माकराकारतुलामवाप ॥ ९९ ॥

जयोद्यमे तत्र सहोपयाता
प्रेमोचिता काञ्चनमालिकास्य।
तं देशमभ्येत्य विनष्टनेत्रं
दृष्ट्वैव तं मोहहता पपात ॥ १०० ॥

D 215 अवाप्तसंज्ञां विपुलप्रलापां
तां नेत्रलावण्यविलासलुब्धाम्।

अनित्यताचिन्तनदृष्टसत्यः
स्रोतःफलाप्त्या स जगाद धीरः ॥ १०१ ॥
मुग्धे धृतिं संश्रय विक्लवत्वा-
न्मा मोहदैन्योदयकातरा भूः।
अवश्यभोग्यानि भवन्ति भीरु
स्वकर्मणामेव फलानि जन्तोः ॥ १०२ ॥
अन्धोऽधुनाहं विजनं व्रजामि
क्लेशासहा त्वं श्रय बन्धुगेहम्।
कार्यो न शोकः सुभगोपभोग-
वियोगसारो हि भवस्वभावः ॥ १०३ ॥
इति ब्रुवाणं तमुवाच जाया
वियोगभीता परिकम्पिताङ्गी।
लीनाञ्जनास्रैः कुचयोर्लिखन्ती
दुःखस्य विक्रीतमिव स्वचित्तम् ॥ १०४ ॥
त्यजामि न त्वामहमार्यपुत्र D 217
नैतत्कुलार्हं व्रतमङ्गनानाम्।
यदापदि स्वं पतिमन्यरूपं
विभूषणं शीलमिव त्यजन्ति ॥ १०५ ॥
सतीव्रतं वित्तवतां प्रियाय
यत्नेन वेश्या अपि दर्शयन्ति।
पतिः सतीनामधिकं प्रियस्तु
विपद्गतोऽर्थीव महाजनानाम् ॥ १०६ ॥
यष्टिः प्रकृष्टा नयनान्धकारे
छाया विपत्तापपरिश्रमेषु।
पदच्युतानां विषमेषु पुंसां
नास्त्येव जायासदृशः सहायः ॥ १०७ ॥
इत्यर्थितः पादयुगे निपत्य
पत्न्या प्रयत्नादथ राजपुत्रः।
सहैव जीर्णांशुकमात्रशेष-
स्तया च धृत्या च शनैर्जगाम ॥ १०८ ॥
वीणाप्रवीणः स सुगीतगीतः D 219
पूर्वं तदा वर्त्मसु वृत्तिमाप।

विपत्सु पण्यं विभवे विलासः
कलासमं नास्ति धनं नराणाम् ॥ १०९ ॥
मत्तालिमालाक्वणितोपमेन
वीणास्वनेन श्रवणामृतेन ।
सिक्तः स भिक्षाप्रणयी प्रविश्य
गेहेष्वगायद्दयितासहायः ॥ ११० ॥
गुरुजनकोपसमुद्गमराहुनिगीर्णप्रभावसूर्याणाम् ।
वितथपरिवादविक्लवकृष्णदिनक्षपितचरितचन्द्राणाम् ॥ १११ ॥
गुणिगणदूषणनिपतितगुणवररत्नप्रभादरिद्राणाम् ।
बहुतरदुष्कृतपरिणतिपवनाहतिविगलितनेत्रदीपानाम् ॥ ११२ ॥
भवविपुलजलदविद्युत्तरलतरश्रीप्रकाशरहितानाम् ।
पुण्यैः प्रसरति पुनरपि धर्मस्मरणनवालोकः ॥ ११३ ॥
D 221 कालं कलावानतिवाह्य गायन्
पैण्डिन्यवृत्तिः स विवेकचक्षुः ।
ययौ प्रियां यष्टिमिवावलम्ब्य
पितुः पुरं पाटलिपुत्रमेव ॥ ११४ ॥
तं दीर्घदुःखाध्वदरिद्रदेहं
शीतातपापीतमुखाब्जवर्णम् ।
कान्तासखं वीक्ष्य जनः कुमारं
शापक्षतं मन्मथमेव मेने ॥ ११५ ॥
शनैः स राजोपवनावलीनां
समीपमाप्तः क्षणविश्रमार्थी ।
उद्यानपालैः परुषप्रलापै-
रमङ्गलत्वात्प्रतिषिध्यमानः ॥ ११६ ॥
निःसंश्रयः संश्रयमीहमानः
स हस्तिशालां नृपतेर्विवेश ।
वीणाविनोदादरकौतुकेन
दत्तावकाशः परिपालकेन ॥ ११७ ॥
D 223 तत्रान्धमालोक्य निबद्धसंज्ञ-
स्तं कुञ्जरेन्द्रः परिवृत्तवक्त्रः ।
तत्स्वागतायेव घनं जगर्ज
क्रीडाशिखण्डिव्रजदत्तनृत्यः ॥ ११८ ॥

तं निश्चलं कुञ्जरगर्जितेन
निःसंभ्रमं हस्तिपका विलोक्य ।
अहो नु सत्त्वोदधिरप्रकम्प्यः
सुक्षत्रियः कोऽप्ययमित्यवोचन् ॥ ११९ ॥
गजोन्मुखी काञ्चनमालिकापि
निःश्वस्य दीर्घं सहसोदितास्रा ।
ऊचे स्मृतश्रीविभवाभिमाना
संवाहयन्ती चरणौ प्रियस्य ॥ १२० ॥
नृत्यन्ति ये तव पुरः शिखिनो धनाशा-
लोलाः परं करिपतिव्रजगर्जितेन ।
कौमारबर्हिकुलसंभव एष बर्ही
गर्जत्क्षणे गणपतेरपि निर्विकारः ॥ १२१ ॥
ततः सरागा चपलाभिपत्य D 225
दोषोन्मुखी द्वेषवतीव संध्या ।
हत्वा रविं लोचनजीवभूतं
विबद्धमान्ध्यं विदधे जनस्य ॥ १२२ ॥
लक्ष्मीवियोगग्लपितं विलोक्य
पद्माकरं संकुचिताननाब्जम् ।
शोकाभिभूता भवितव्यताया
जगौ स्वभावं भ्रमरावलीव ॥ १२३ ॥
विश्वप्रकाशैकमणिप्रदीपे
याते रवौ दीपसहस्रलक्षैः ।
नाभूद्दिनालोकलवानुकारः
सर्वातिरिक्तं महतां हि तेजः ॥ १२४ ॥
सा राजधानी मणिहेमहर्म्या
प्रकाशमाना तिमिरे रराज ।
भक्त्येव भर्तुर्विहितोपकारा
कृच्छ्रे च शीलाभरणा सतीव ॥ १२५ ॥
लब्धाधिकारा तिमिरोद्धतिः सा D 227
कृत्वा निरालोकमशेषलोकम् ।
इन्दूदयारम्भभयाभिभूता
निलीयमानेव शनैर्बभूव ॥ १२६ ॥

अथाययौ श्यामललक्ष्मलेखा-
संदेशलीलालिपिसंनिवेशः।
कुमुद्वतीहर्षसुहृत्सितांशुः
पद्माकरश्रीपरिहारलेखः॥ १२७॥
अपूरयत्कान्तिसितांशुकेन
शुचिः सुधांशुर्यशसेव विश्वम्।
दुग्धत्विषा मुग्धमृणालवल्ली-
नवाङ्कुराकारमयूखलेखः॥ १२८॥
ततः क्षपायां श्लथयौवनायां
शनैः शशाङ्के दिवि लम्बमाने।
क्लैव्यक्षयान्नागभृतो विनिद्रा
निद्रायमानं जगदुः कुमारम्॥ १२९॥
D 229 उत्तिष्ठ गान्धर्विक किं न वीणा-
मङ्कं समारोप्य कलं क्वणन्तीम्।
कान्तामिवैतां नखघातलोलां
गीतिं नवीनां वितनोषि कांचित्॥ १३०॥
इति प्रलापैः श्रमनिद्रयार्तः
स तैर्मदोद्धैरनुबध्यमानः।
आदाय वीणां विमलां मुहूर्त-
मचिन्तयन्नीचवचःप्रतप्तः॥ १३१॥
जीवत्यहो व्याघ्रगणैर्निषक्तै-
राघ्रातरक्तैरघृणैर्गृहीतः।
क्लीबैरधिक्षेपकटुप्रलापै-
रावद्धपेटैर्न तु राजचेटैः॥ १३२॥
निहन्ति मानं विदधाति लज्जां
छिनत्ति शर्माणि तनोति तापम्।
असह्यनिर्वेदविपद्विधायी
न नीचसेवासदृशोऽस्ति शोकः॥ १३३॥
D 231 मुहुर्विचिन्त्येति स नीचवाक्यं
लीनावमानव्यसनाग्नितप्तः।
निःश्वस्य कालक्षपणाभिकाङ्क्षी
शनैरगायत्कलयन् विपञ्चीम्॥ १३४॥

मानोन्माथैः प्रथितविभवभ्रंशहेलोपहासै-
निर्मर्यादैरुचितचरितोत्पाटनैः सापवादैः ।
मर्मस्पर्शव्यसनविषयक्लेशशल्यायमानै-
र्हा संसारः खलकलनया नर्मलीलाः करोति ॥ १३५ ॥
विचलदनिलोद्वेल्लद्वल्लीदलाञ्चलचञ्चलः
स्थिरतरमहामोहं पुंसां करोति भवभ्रमः ।
अधिकतरलास्तत्राप्येता जलाविलसंमिल-
ज्जनघनवनप्रोद्यद्विद्युद्विलासरसाः श्रियः ॥ १३६ ॥
विभवविरलक्लेशक्लान्तः सुखान्तमहावटे
नयनविकलः पङ्गुर्मूकश्च्युतोऽपि विराजते ।
सकलविपदां रक्षारत्नं प्रकाशसुधामयं
यदि न विमलं शीलं पुंसां मनागपि खण्डितम् ॥ १३७ ॥
यष्ट्या वेद्मि जलं स्थलं सशकलं स्पर्शेन गन्धेन वा D 233
बुद्ध्या सर्वमवैमि दुर्गमपथं श्रुत्वा व्रजाम्यन्यतः ।
निःश्वासान्तरसक्तघोरनरकक्लेशं न जानात्यसा-
वन्धेनेति विडम्ब्यते बहुतरं मोहान्धमुग्धो जनः ॥ १३८ ॥
इत्यात्मवृत्तानुकृतिप्रवृत्तं
गायत्युदारं स रसेन तस्मिन् ।
हर्म्यप्रसुप्तः सहसा प्रबुद्धः
क्षपावसाने क्षितिपः प्रदध्यौ ॥ १३९ ॥
सदैव दुःस्वप्ननिरीक्षणेन
शङ्काकलङ्कैर्भृशमाकुलोऽहम् ।
अद्यापि मे तक्षशिलानिवासी
न किं कुमारः प्रहिणोति लेखम् ॥ १४० ॥
किं विस्मृतो नित्यमविस्मृतस्य
तस्याहमासन्नसुखोन्मुखस्य ।
चिरप्रवासेन जनस्य नूनं
स्नेहानुबन्धाः शिथिलीभवन्ति ॥ १४१ ॥
शृणोमि चेमं गमकानुबन्धं D 235
मूर्च्छद्विपञ्च्या मधुरस्वराङ्कम् ।
तत्तुल्यमेव श्रवणानुकूलं
गन्धर्वलोकादिव गीतशब्दम् ॥ १४२ ॥

तस्यैव तावन्मृदुगीतमेत-
द्गूढः स कस्मात्किमिदं न जाने ।
क्षणं विचिन्त्येति विसृज्य राजा
महत्तरं पुत्रमथानिनाय ॥ १४३ ॥
दूरात्तमायान्तमुदस्तनेत्र-
सरोरुहं श्रीरहितं विलोक्य ।
पुत्रं परिज्ञाय वधूसहायं
महीपतिर्मोहहतः पपात ॥ १४४ ॥
स लब्धसंज्ञः शनकैर्जलेन
हिमच्छटाशीकरदन्तुरेण ।
समीपमाप्तं नृपतिः कुमार-
मुत्सङ्गमारोप्य चिरं शुशोच ॥ १४५ ॥
D 237 हा पुत्र नेत्रोत्सव जीवलोके
कस्मादिमां दुःखदशां श्रितोऽसि ।
विलोभनं तत्सुरसुन्दरीणां
क्व लोचनाम्भोजयुगं गतं ते ॥ १४६ ॥
गाम्भीर्यभूमे गुणरत्नकोष
सरस्वतीवल्लभ सत्त्वराशे ।
त्वत्तः क्व सा विभ्रमभूः प्रयाता
हिमाहताम्भोजवनादिव श्रीः ॥ १४७ ॥
रूपं क्व तत्क्वेदमसह्यमान्ध्यं
क्व सा विभूतिः क्व च दुर्दशेयम् ।
न दीर्यते मे हृदयं न जाने
केनास्य दत्तः कुलिशोपदेशः ॥ १४८ ॥
क्वासौ जनस्त्वद्विभवानुसारी
कुलानुरूपा तव निश्चलयम् ।
एकैव पत्नी परिवारशेषः
कृच्छ्रेऽपि साधोरिव धैर्यवृत्तिः ॥ १४९ ॥
D 239 इत्यश्रुसंवेगविशीर्णवर्णं
प्रलापिनस्तस्य वचो निशम्य ।
नत्वा कुमारस्तमुवाच धीर-
स्तूर्णं तदङ्कादवतीर्य भूमिम् ॥ १५० ॥

विमुञ्च पृथ्वीपुरुहूत शोकं
शुचाभिभूता न भवन्ति धीराः ।
क्षयाय जागर्ति नतोन्नताना-
मेष स्वभावो भवितव्यतायाः ॥ १५१ ॥

ऐश्वर्यमाश्चर्यसुखावतंसं
लावण्यलक्ष्मीतिलकं वपुश्च ।
क्षणेन यात्येव कृतान्तनर्म
कर्मोर्मिनिर्माणहृतं नराणाम् ॥ १५२ ॥

भवेदभावानुभवे भवेऽस्मिन्
सत्यस्वभावो यदि भाववर्गः ।
ध्रुवं न कुर्युर्मुनयस्तदैते
संत्यक्तभोगा विजने निवासम् ॥ १५३ ॥

इति ब्रुवाणः स विपन्निमित्तं D 241
पृष्टः पुनः शोकमयेन राज्ञा ।
न्यवेदयल्लेखनिबद्धमस्मै
निजं शनैर्नेत्रविनाशवृत्तम् ॥ १५४ ॥

श्रुत्वैव तत्तीव्रनृशंसवृत्तं
निवृत्तवृत्तेष्वपि न प्रवृत्तम् ।
कुठारधारापरिभूतमूलः
पपात शाखीव धरावमूलः ॥ १५५ ॥

स लब्धसंज्ञः कुटिलं विचिन्त्य
तं तिष्यरक्षाचरितप्रयोगम् ।
समुद्यया स्त्रीवधपातकेऽपि
धर्मादरेणैव विनिग्रहेऽस्याः ॥ १५६ ॥

क्रौर्यप्रकारे विपुलापकारे
तस्मिन् प्रतीकारसमुद्यतं तम् ।
अवारयद्दुःसहदुःखयोगं
स्वकर्मपाकेन वदन् कुमारः ॥ १५७ ॥

D 243
तमब्रवीद्भूमिपतिर्व्यथार्तः
शोकेन कोपेन च दह्यमानः ।
मोहात्किमेतां निशितामनार्यां
क्रौर्यप्रसक्तां परिरक्षसि त्वम् ॥ १५८ ॥

द्वेषोद्यते स्नेहनिबन्धने वा
तुल्यं मनो यस्य स किं मनुष्यः ।
यस्यापकारेऽस्ति न रोषलेशः
तस्योपकारेऽपि कथं प्रसादः ॥ १५९ ॥

इति श्वसन्तं प्रलपन्तमार्तं
धीरः कुमारः पितरं जगाद ।
राजन्न मे दुःखलवोऽस्ति कश्चित्
तीव्रापकारेऽपि न मन्युतापः ॥ १६० ॥

मनः प्रसन्नं यदि मे जनन्यां
येनोद्धृते च स्वकरेण नेत्रे ।
तत्तेन सत्येन ममास्तु ताव-
न्नेत्रद्वयं प्राक्तनमेव सद्यः ॥ १६१ ॥

D 245 इत्युक्तमात्रे नृपनन्दनस्य
प्रादुर्बभूवाक्षिसरोजयुग्मम् ।
सत्यव्रतप्रत्ययकारि लोके
विलोभनं तत्क्षणमेव लक्ष्म्याः ॥ १६२ ॥

नृपः सुखोत्साहकरं प्रजानां
विराजमानं नयनद्वयेन ।
तं यौवराज्ये विमुखं विदित्वा
तमात्मजं तत्प्रतिमं न्ययुङ्क्त ॥ १६३ ॥

घोरापचारे सदृशं विधाय
पत्न्याः प्रतीकारमथ क्षितीशः ।
क्रोधानलं तक्षशिलाधिपेऽपि
तन्मर्षणाद्दुःसहमुत्ससर्ज ॥ १६४ ॥

तत्कौतुकाद्भिक्षुगणेन पृष्टः
प्रोवाच संघस्थविरः स विद्वान् ।
जन्मान्तरे लुब्धक एष काशी-
पुरे बभूव क्षितिपालपुत्रः ॥ १६५ ॥

D 247 गुहाप्रविष्टं हिमवत्तटान्ते
लब्ध्वा मृगाणां शतपञ्चकं सः ।
अन्धं विधायाक्षिविपाटनेन
यथोपयुक्तं न्यवधीत्क्रमेण ॥ १६६ ॥

अथान्यजन्मन्यपि बालकोऽसौ
मुग्धाभिधः श्रेष्ठिसुतः प्रमोहात् ।
चकार चैत्यप्रतिमाजिनस्य
शस्त्रेण निर्लोचनमाननाब्जम् ॥ १६७ ॥

संजातसंज्ञश्च नवेन्द्रनील-
मयं व्यधादक्षियुगं स तस्य ।
ततोऽन्यजन्मन्यपि शीर्णचैत्य-
संस्कारपूजां स पुनश्चकार ॥ १६८ ॥

नेत्रापहारेण वने मृगाणां
बाल्ये च चैत्यप्रतिमाक्षिलोपात् ।
अवाप्तवानेष विनाशमक्ष्णो-
र्जन्मान्तरेष्वद्य च राजपुत्रः ॥ १६९ ॥

स रत्ननेत्रां प्रतिमां च कृत्वा D 249
दृष्टिं विनष्टां पुनराससाद ।
विशीर्णचैत्यप्रतिपूरणेन
प्रासादिकः कान्तिमयश्च जातः ॥ १७० ॥

स्रोतःप्राप्तिफलप्रवृत्तविमलालोकक्रमेणामुना
वैराग्योज्ज्वलसत्यदर्शनविधौ लब्धाधिकारस्थितिः ।
सम्यक्पुण्यवशादुपैष्यति शनैः कालेन संबुद्धता-
मित्युक्तः स्थविरेण भिक्षुनिवहः श्रुत्वाभवद्विस्मितः ॥ १७१ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
कुणालावदानं नाम एकोनषष्टितमः पल्लवः ॥



D 251

## ६० नागकुमारावदानम् ।

इह कषति शरीरं क्लेशराशिर्नराणां
दहति च परलोके नारकः क्रूरवह्निः ।
शरणगमनपुण्यप्राप्तशिक्षापदानां
प्रभवति न तु देहे दुःखदाहः कदाचित् ॥ १ ॥

धननामा समुद्रान्ते नागोऽभूद्बहुबान्धवः ।
फणारत्नोज्ज्वलालोककलितापूर्ववासरः ॥ २ ॥

पपाताहर्निशं तस्य भवने तप्तवालुका ।
ययाङ्गेषु भुजंगानां तीव्रतापव्यथाभवत् ॥ ३ ॥

कदाचित्सुधनो नाम पुत्रः पप्रच्छ तं प्रियः ।
सुकुमारः प्रकृत्यैव वालुकापरिपीडितः ॥ ४ ॥

कस्मादस्मानियं तात बाधते तप्तवालुका ।
मन्त्रमूलप्रयोगेण केनेयमुपशाम्यति ॥ ५ ॥

D 253 अस्मदभ्यधिकाः केचिदस्मत्प्रत्यवराः परे ।
नागाः सन्ति समुद्रेऽस्मिन् दुःखार्ता वयमेव किम् ॥ ६ ॥

इति पृष्टः स पुत्रेण तमुवाच महामतिः ।
यथान्ये फणिनः पुत्र धर्मज्ञा न तथा वयम् ॥ ७ ॥

धर्मोपदेशशुद्धानां शान्तानां सत्यवादिनाम् ।
उपतापो भवत्येव न शारीरो न मानसः ॥ ८ ॥

न तान् स्पृशति संतापः पुण्यं रत्नत्रयं बुधाः ।
ये बुद्धधर्मसंघाख्यं शरण्यं शरणं गताः ॥ ९ ॥

शिक्षापदान्यवाप्तानि क्लेशप्रशमनानि यैः ।
तेषाममृतसिक्तानां पापतापभयं कुतः ॥ १० ॥

श्रावस्त्यामस्ति भगवान् जिनो जेतवनाश्रयः ।
लोके शाक्यमुनिः सर्वक्लेशप्रशमबान्धवः ॥ ११ ॥

उपदेशांशुनिवहैः सत्त्वशुभ्रैर्जगत्त्रये ।
करुणाकौमुदीसूतिरमृतं सोऽभिवर्षति ॥ १२ ॥

दुर्विनीता न रक्षन्ति प्राप्य शिक्षापदानि ये ।
तीव्रतापमयस्तेषां नरकेष्वक्षयः क्षयः ॥ १३ ॥

इति श्रुत्वा पितुर्वाक्यं जनन्याश्च भुजंगमः । D 255
आदाय दिव्यपुष्पाणि पुण्यं जेतवनं ययौ ॥ १४ ॥

सुगताश्रममासाद्य धर्मश्रवणसंगताम् ।
ददर्श पर्षदं तत्र स संतोषसुखोन्मुखीम् ॥ १५ ॥

तत्रापश्यज्जिनं कान्तवदनं दीर्घलोचनम् ।
पूर्णेन्दुपद्मवनयोरिव मैत्रीसुखप्रदम् ॥ १६ ॥

उपदेशकृता व्यक्तमधरेणाधरीकृताम् ।
तर्जयन्तमिवोत्सिक्तां रागिवर्गस्य रक्तताम् ॥ १७ ॥

निराभरणलावण्यकर्णपाशविभूषितम् ।
दर्शयन्तमिवासक्तां निरावरणशून्यताम् ॥ १८ ॥

धर्मद्विपकरौ बाहू बिभ्राणं दानशोभितौ ।
प्रभावभवनस्तम्भौ शातकुम्भमयाविव ॥ १९ ॥

दिशन्तं चरणच्छायां चीरैरावरणं भुवः ।
लब्धप्रबोधैर्विहितामिव राजीवजीवितैः ॥ २० ॥

देहकान्तिवितानेन नयनामृतवर्षिणा ।
संसारमरुसंतापं वारयन्तं सतामिव ॥ २१ ॥

तं विलोक्यैव तत्याज संतापं नागनन्दनः । D 257
सर्वार्तिदोषशमनं दर्शनं हि महात्मनाम् ॥ २२ ॥

प्रणनाम स तं कीर्णसंपूर्णकुसुमाञ्जलिः ।
तत्पादपद्मस्पर्शेन सद्यः शीतलतां गतः ॥ २३ ॥

कृती भगवतः प्राप्य ततः शिक्षापदानि सः ।
चक्रे कृताञ्जलिस्तस्य यावज्जीवाधिवासनाम् ॥ २४ ॥

तमाबभाषे भगवानेकस्यैवाधिवासना ।
अनुग्राह्येषु सर्वेषु यावज्जीवं न युज्यते ॥ २५ ॥

इत्युक्त्वा प्रणयिप्रीत्यै भगवान् सततोद्यतः ।
शनैः प्रतस्थे संकल्पं भोगिनः परिपूरयन् ॥ २६ ॥

क्रमेणागच्छतस्तस्य भिक्षुसंघाग्रयायिनः ।
प्रभावाद्विदधे नागः स्वर्गशोभां पदे पदे ॥ २७ ॥

हेमरत्नांशुशबलान् दिव्योद्यानमनोहरान् ।
भोगोपसंग्रहव्यग्रदासदासीगणावृतान् ॥ २८ ॥

कर्पूरचन्दनोदारहारप्रालम्बभूषितान् ।
स्थाने स्थाने भगवतः स विहारानकारयत् ॥ २९ ॥

D 259 कलन्दकनिवासाख्यं प्राप्य वेणुवनं ततः ।
स सर्वभोगसंभारैर्भगवन्तमपूजयत् ॥ ३० ॥

तेन मासत्रयीं तत्र ससंघः सुगतोऽर्चितः ।
ऊचे विस्मितमानन्दं हाररत्नांशुकैर्वृतः ॥ ३१ ॥

एष कल्पशतमच्युतः फणी
सर्वभोगसुखभाग्भविष्यति ।
बोधिमप्यपरजन्मनि स्फुटां
किं च सुप्रणिहितः करिष्यति ॥ ३२ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
नागकुमारावदानं नाम षष्टितमः पल्लवः ॥

——००※००——

## ६१ कर्षकावदानम् । D 261

मूढस्य हस्तपतितोऽपि निधिः प्रयाति
लक्ष्मीः स्वयं भवनमेति विशुद्धबुद्धेः ।
दारिद्र्यतीव्रतिमिरापहरः प्रकामं
पुंसां विभूषणमणिर्मनसः प्रसादः ॥ १ ॥

श्रावस्त्यां स्वस्तिको नाम ब्राह्मणो निर्धनः पुरा ।
अशिश्रियत्क्लेशफलामगत्या कृषिजीविकाम् ॥ २ ॥

स क्षेत्रकर्मनिरतः शीतवातातपक्षतः ।
चकार हलकुद्दालभारवाहो गतागतम् ॥ ३ ॥

स कदाचित्समायान्तं श्रावकैः सहितं पथि ।
जिनं जायासखो दृष्ट्वा प्रसादं सहसा ययौ ॥ ४ ॥

प्रसन्नवदनां पत्नीं स जगाद विचिन्तयन् ।
दारिद्र्यदुःखमसमं दानपुण्यपरिक्षयात् ॥ ५ ॥

आवाभ्यामेष भगवान् पिण्डकेनापि नार्चितः । D 263
कुतः पुण्यपणप्राप्त्या धनसंपत्तिरावयोः ॥ ६ ॥

जीवत्यवमतो लोके नष्टकीर्तिर्विपद्यते ।
न स जीवो न निर्जीवः शोभते निर्धनो जनः ॥ ७ ॥

धनं जातिर्धनं विद्या धनं धर्मो धनं यशः ।
किं धनेन विहीनानां याच्ञानिर्जीवितैर्गुणैः ॥ ८ ॥

परोपकरणीभूतैः किं दरिद्रस्य सद्गुणैः ।
क्लेशार्थैर्भारिकस्येव मणिकाञ्चनभूषणैः ॥ ९ ॥

दरिद्रो दारिद्र्यं प्रविशति पुनर्दानविरहा-
द्दरिद्रः पापात्मा भवति धनलिप्सापरवशः ।
दरिद्रः सोच्छ्वासो मृत इति न चात्रास्ति विमति-
र्दरिद्रस्यैवैता निजजनविहीना दश दिशः ॥ १० ॥

अभ्यर्चयावः सुगतं तस्मात्कृपणवत्सलम् ।
अनाराधितबुद्धानां मुग्धानां कुशलं कुतः ॥ ११ ॥

एष पद्मपलाशाक्षः क्षिपत्यापन्नबान्धवः ।
यत्र यत्र दृशं जाने तत्र तत्राशयः श्रियः ॥ १२ ॥

D 265 इति पत्युर्वचः श्रुत्वा ब्राह्मणी सादरा गृहे ।
शुचि प्रणीतं विदधे भोज्यं भगवतः कृते ॥ १३ ॥

भगवानपि सर्वज्ञस्तयोर्ज्ञात्वा समीहितम् ।
प्रणयार्थनया चक्रे तस्य पूजाप्रतिग्रहम् ॥ १४ ॥

व्यक्तदारिद्र्यदुःखस्य भूयान्मे विभवोद्भवः ।
चकार जिनपूजान्ते प्रणिधानमिति द्विजः ॥ १५ ॥

अथ गत्वा निजं क्षेत्रं विप्रः शस्ययवाङ्कुरान् ।
सर्वानपश्यत्सौवर्णान् सहसा त्यक्तदुर्गतिः ॥ १६ ॥

तस्य पुण्यसमुद्भूतं दृष्ट्वा हेम महीपतिः ।
तत्याज विस्मितः प्रीत्या राजभागं प्रसेनजित् ॥ १७ ॥

तेन हेम्ना सुमहता लब्धैश्वर्यनिधिर्द्विजः ।
स बुद्धप्रमुखं संघं सर्वभोगैरपूजयत् ॥ १८ ॥

धर्मदेशनया शास्तुः स्रोतःप्राप्तिफलोदयात् ।
दृष्टसत्यः स कालेन प्रव्रज्यां समुपाददे ॥ १९ ॥

सर्वक्लेशप्रहाणेन तस्मिन्नर्हत्त्वमागते ।
D 267 तत्कर्म भिक्षुभिः पृष्टो भगवानभ्यभाषत ॥ २० ॥

अन्यजन्मनि विप्रोऽयं काश्यपस्य महात्मनः ।
ब्रह्मचर्यं भगवतः शासनेन पुराचरत् ॥ २१ ॥

समादिष्टास्य तेनैव जन्मन्यस्मिन् महीयसी ।
मत्सकाशादियं सिद्धिः सेन्द्रोपेन्द्रसुरार्चिता ॥ २२ ॥

श्रुत्वेति तस्य सुकृतं कथितं जिनेन
सर्वे सविस्मयधियः कुशलादरेण ।
हर्षाकुलाः सुचरितं प्रशशंसुरन्तः-
संक्रान्ततद्गुणमया इव भिक्षवस्ते ॥ २३ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
कर्षकावदानं नाम एकषष्टितमः पल्लवः ॥

## ६२ यशोदावदानम् । D 269

ऊर्णायुपूर्णजनकाननसंनिवेशे
जातश्रमत्क्कृतिमयः पुरुषः स एकः ।
यस्यार्थयौवनसुखोचितचारुवेशे
वैराग्यमादिशति शान्तिसितं विवेकः ॥ १ ॥

न्यग्रोधरुचिरारामविहारिणि जिने पुरा ।
वाराणस्यां गृहपतिः सुप्रबुद्धाभिधोऽभवत् ॥ २ ॥

त्यागोपभोगसंभारविभूषितधनोदयः ।
ऐश्वर्यं यः कुबेरस्य कोशलीनं न्यवेदयत् ॥ ३ ॥

स सर्वसुखसंपत्तौ निष्पुत्रः पुत्रचिन्तया ।
परं संतापमापेदे निःशल्याः कस्य संपदः ॥ ४ ॥

तं शोकशिखिसंतप्तं बान्धवा बन्धुवत्सलम् ।
ऊचिरे चिरसंक्रान्ततच्चिन्ताक्रान्तमानसाः ॥ ५ ॥

क्लीबोचितां गृहपते न चिन्तां कर्तुमर्हसि । D 271
धीराणां पृथुसत्त्वानां नास्ति लोकेषु दुर्लभम् ॥ ६ ॥

य एष विश्रुतो दिक्षु देशेऽस्मिन् पौरपूजितः ।
न्यग्रोधपादपस्तस्य पूजया सर्वमाप्यते ॥ ७ ॥

अपुत्राः पुत्रिणः केचित् निर्धना धनिनः परे ।
रोगिणोऽप्यरुजश्चान्ये दृष्टास्तदुपयाचितैः ॥ ८ ॥

सत्ययाचनचैत्याख्यः सोऽयं न्यग्रोधपादपः ।
फलं पुत्राभिधं तुभ्यं दास्यत्युचितमर्थितः ॥ ९ ॥

इति तेषां वचः श्रुत्वा तानुवाच स सस्मितः ।
अहो नु मोहात्स्नेहाद्वा यूयं मूर्खत्वमागताः ॥ १० ॥

स्वकर्मपरतन्त्रेऽस्मिन् लोके नियतिनिश्चले ।
स्थितिं करोति पुष्णाति हरते हन्ति कस्य कः ॥ ११ ॥

स्वकर्मोपनतं प्राप्य तुष्यत्यन्यस्य मुग्धधीः ।
स्वलालालवमास्वाद्य श्वेव शुष्कस्य चर्मणः ॥ १२ ॥

वृक्षः पुत्रार्थदः पुंसामित्येतन्मूर्खभाषितम् ।
दातुं शक्तः स नाकाले पत्रमात्रमपि स्वयम् ॥ १३ ॥

D 273 तदधिष्ठातृदेवश्चेत्पूजालुब्धः करोति तत् ।
पूर्णोपहारपूजां किं स्वयं सृजति नात्मनः ॥ १४ ॥

प्राप्तव्यं प्राप्य यदि वा घुणाक्षरपदोपमम् ।
काकतालीयसंवादात्तद्दत्तं मन्यते जनः ॥ १५ ॥

प्राप्तव्यं यत्फलपरिणतौ कर्मणां प्राप्यते तत्
नानायत्नप्रणयपतनैर्लभ्यते न त्वलभ्यम् ।
यद्येनैव स्वयमुपचितं भोगभागी स तस्मिन्
एतेनैतत्कृतमिति मुधा मन्यते मुग्धबुद्धिः ॥ १६ ॥

इति ब्रुवाणः सस्नेहैरनुबन्धेन बान्धवैः ।
प्रेरितः स ययौ मूढ एकाकी पादपान्तिकम् ॥ १७ ॥

स कुठारं समादाय न्यग्रोधतरुमभ्यधात् ।
पूजायां मूलघाते वा सज्जोऽहं त्वामुपागतः ॥ १८ ॥

पुत्रप्रदातुः पूजां ते करिष्याम्यकृतां परैः ।
नद्यां त्वामन्यथा छित्त्वा दग्ध्वा पिष्ट्वा क्षिपाम्यहम् ॥ १९ ॥

इति तद्वचनं श्रुत्वा देवता वृक्षवासिनी ।
सहसैव भयोद्विग्ना कम्पमाना व्यचिन्तयत् ॥ २० ॥

D 275 न मया कस्यचित्सूनुर्वित्तं वा दत्तमिच्छया ।
जनः स्वकर्मसंप्राप्तं मद्दत्तमिति मन्यते ॥ २१ ॥

इदं त्वपूर्वमायातं पुत्रार्थी यदयं बलात् ।
कर्मयोगादसंप्राप्तौ दैवतं छेत्तुमागतः ॥ २२ ॥

स्थितिमात्रमिदं पूज्यः पूज्यते यत्फलार्थिभिः ।
कर्मबद्धफलालाभे क्व देवः केन दापितः ॥ २३ ॥

चिकित्सायामसिद्धायां व्याधौ पुंसः स्वकर्मणा ।
गृह्यन्ते नैव गणका न वैद्या न च मन्त्रिणः ॥ २४ ॥

वृक्षच्छेदविकल्पोऽस्ति न चास्या कार्यकारिणः ।
अन्यायाभिनिविष्टानां किमकार्यं प्रमादिनाम् ॥ २५ ॥

वृक्षच्छेदे न शक्नोमि स्थातुमन्यत्र निःसुखा ।
सङ्गादाभ्यासिकी प्रीतिर्मुनीनामपि दुस्त्यजा ॥ २६ ॥

इति संचिन्त्य तूर्णं सा गत्वा शक्रस्य मन्दिरम्
तमर्थं विनिवेद्यास्मै परित्रस्तावदत्पुरः ॥ २७ ॥

जनेन पूज्यमानापि वृक्षे तस्मिन्नहं सदा।
नानार्थार्थिभिरत्यर्थं सोपवासैः कदर्थिता ॥ २८ ॥

लभन्ते सुकृतात्केचित्केचिद्गच्छन्त्यधोमुखाः। D 277
तत्रैवान्ये प्रलीयन्ते हठमूर्खाः खलव्रतैः ॥ २९ ॥

गतानुगतिकत्वेन प्रसिद्धिशरणो जनः।
सर्वार्तिपरिहाराय मौर्ख्यान्मामेव धावति ॥ ३० ॥

उद्वेजिताप्यहं तीव्रं जनेनाकृतबुद्धिना।
तरुं त्यक्तुं न शक्नोति तद्गुणावर्जिताशया ॥ ३१ ॥

बन्धक्लेशं विशति मधुपः पङ्कजं गन्धलुब्धः
पङ्कातङ्कं गणयति बिसास्वादने नैव हंसः।
शीतार्तश्च त्यजति न जनः पावकं धूमधूम्रः
तस्मिन् दोषं स किल सहते यस्य येनोपयोगः ॥ ३२ ॥

तस्माद्वृक्षवियोगार्तां त्रातुमर्हसि मां विभो।
शरीरत्यागसदृशः स्थानत्यागो हि देहिनाम् ॥ ३३ ॥

अर्थितः प्रणयेनेति पौलोमीरमणस्तया।
पुत्रलाभं गृहपतेः कर्मायत्तमचिन्तयत् ॥ ३४ ॥

अत्रान्तरे वृत्रशत्रुर्देवपुत्रं त्रिविष्टपे।
सुमतिं नाम संप्राप्तच्युतिकालं व्यलोकयत् ॥ ३५ ॥

माला म्लानिमुपाययौ खलनतिक्लिष्टेव कीर्तिस्तदा D 279
छाया प्रादुरभूत्तमःपरिचिता याच्ञेव दैन्योदये।
खेदः पुण्यपरिक्षये नव इवापायश्चकारास्पदं
तस्याभूदरतिर्निपातपिशुना सद्द्वेषदोषेव धीः ॥ ३६ ॥

गुणिनः सुप्रबुद्धस्य पृथिव्यां प्रथितश्रियः।
सुमते पुत्रतामेहि तमित्याह सुरेश्वरः ॥ ३७ ॥

सोऽब्रवीत्तत्र मां काले शास्तुः शाक्यमुनेः पुरः।
शक्रस्यानुत्तरोदारधर्मचक्रप्रवर्तने ॥ ३८ ॥

प्रव्रज्यासादनाय त्वं यदि संबोधयिष्यसि।
तदहं सुप्रबुद्धस्य व्रजामि भुवि पुत्रताम् ॥ ३९ ॥

इत्युक्ते देवपुत्रेण शक्रेणोक्ते तथेति च।
च्युतः स तस्मादाज्ञप्तस्तत्पत्न्याः कुक्षिमाविशत् ॥ ४० ॥

देवता स्वपदं गत्वा सुप्रबुद्धमभाषत।
प्रव्रज्याभिरतः साधो भविष्यति सुतस्तव॥ ४१॥

इति श्रुत्वा गृहपतिः प्रहृष्टः प्रययौ गृहम्।
प्रव्रज्यां वारयिष्यामि पुत्रस्येति विचिन्तयन्॥ ४२॥

D 281 ततः कालेन तत्पत्नी ललिता नाम बालकम्।
सर्वाङ्गलक्षणोपेतमसूत कनकद्युतिम्॥ ४३॥

सर्वं रत्नमयं तस्य जातस्येव व्यजायत।
छत्रं मूर्तमिवाश्चर्यमुत्तंसं सुकृतश्रियः॥ ४४॥

स यशोदाभिधानोऽभूद्यशोवृद्ध्या पितुः परम्।
विद्याकलाविभूतीनां समागमगृहोपमः॥ ४५॥

देवतावचनं स्मृत्वा प्रव्रज्याशङ्कितः पिता।
तस्य चक्रे गृहपुरद्वारगोपुररक्षणम्॥ ४६॥

अथाभ्येत्य स शक्रेण स्मारितः पूर्वसंविदा।
बभूव शमसंसिक्तः प्रव्रज्याभिमुखादरः॥ ४७॥

स कदाचिन्निजोद्याने रथारूढः शनैर्व्रजन्।
ददर्श जिनमायान्तं भगवन्तं यदृच्छया॥ ४८॥

हृदये सुखसंस्पर्शं वर्षन्तं प्रशमामृतम्।
तं विलोक्यैव सहसा रथादवततार सः॥ ४९॥

तं त्रिः प्रदक्षिणीकृत्य तत्पादनलिनद्वयम्।
स ववन्दे प्रसादार्द्रदृशा तेनावलोकितः॥ ५०॥

D 283 भगवन्तं प्रणम्याथ प्रसन्नं तदनुज्ञया।
जगाम निजमुद्यानं स तमेव विचिन्तयन्॥ ५१॥

भिक्षुमश्वजितं प्राह भगवानथ सस्मितः।
एषोऽन्तिकेऽद्य मे रात्रौ कुमारः प्रव्रजिष्यति॥ ५२॥

इत्युक्त्वा स्वपदं याते सुगते सह भिक्षुभिः।
शक्रनिर्मितमद्राक्षीत्कुमारः स्त्रीकलेवरम्॥ ५३॥

पूयपर्युषितक्लेदसीदत्क्रिमिकुलाकुलम्।
स दृष्ट्वा शवमुद्याने सोद्वेगः समचिन्तयत्॥ ५४॥

विकारा एव तारुण्यरूपलावण्यकान्तयः।
चर्ममांससमूहानामियं सा प्रकृतिर्नृणाम्॥ ५५॥

लोलल्लोचनमुन्मिषत्कुचयुगं कोषं शशाङ्कत्विषा-
मेतत्तन्नवयौवनोदयलसल्लावण्यगण्यं वपुः ।
यातं पूतिवसावसेकविकलं ताम्यत्कृमिव्याकुलं
क्लिन्नक्लोमयकृद्विकीर्णसकलप्लीहान्त्रनिर्यन्त्रताम् ॥ ५६ ॥

अस्मिन् रागविमोहहारितदृशः सर्वाङ्गसङ्गोत्सहे
संलीनाः स्तनमण्डले हतधियः प्रापुः परां निर्वृतिम् ।
यस्मादेष गतस्पृहः कवलने वैमुख्यवक्रानन:
क्लेदोत्सादविषादकूणितमतिर्दूरं गतो जम्बुकः ॥ ५७ ॥

इति संचिन्त्य संजातगाढवैराग्यवासनः । D 285
जगामोद्यानविमुखः स शनैर्निजमन्दिरम् ॥ ५८ ॥

अत्रान्तरे दिनम्लानिखिन्नोऽभूत्प्रशमोन्मुखः ।
विरसं लोकवृत्तान्तं विलोक्येव दिवाकरः ॥ ५९ ॥

अशेषाशापरित्यागयोग्यं प्रशममीयुषः ।
संध्यारक्ताम्बरजुषः प्रव्रज्येव रवेरभूत् ॥ ६० ॥

लोकोत्तरपदं याते भानौ भुवनचक्षुषि ।
वासरोऽपि परित्यज्य लोकं तदनुगोऽभवत् ॥ ६१ ॥

ततः प्रत्यग्रतिमिरोद्वेगयोगं जगज्जुषाम् ।
प्रदीपमण्डलालोकः कृपयेव न्यवारयत् ॥ ६२ ॥

अस्मिन्नवसरे शास्ता यशोददयया स्वयम् ।
पुरनद्याः परं पारं तत्प्राप्त्यै समुपाययौ ॥ ६३ ॥

यशोदोऽपि दिनापायतुलया कलयन् मुहुः ।
संसारासारतामेव शय्याभवनमाविशत् ॥ ६४ ॥

वेणुवीणामृदङ्गादिविनोदैर्मदनिर्भराः ।
तत्रापश्यत्स ललनाः श्रमनिद्रानिमीलिताः ॥ ६५ ॥

वीणाविन्यस्तवदना मृदङ्गार्पितदोर्लताः ।
क्षणिकत्वात्सुखस्येव दुःखध्यानमुपागताः ॥ ६६ ॥

विलोक्य स्रस्तवसनास्ता मृता इव निश्चलाः । D 287
संजाताधिकवैराग्यः स चिरं समचिन्तयत् ॥ ६७ ॥
अहो बतास्मिन् विषये पर्यन्तविरसे परम् ।
एवंविधे वधूनाम्नि मुग्धानां भृशमादरः ॥ ६८ ॥

विद्युद्विलसितान्यासामसत्सुखघनोदये ।
सुप्तानां च मृतानां च क स्मितं क च विभ्रमाः ॥ ६९ ॥

शेते काचिदधोमुखी विवलिता पृष्ठे च्युतास्यापरा
यातान्यापि विकाशितास्यविवरा सर्वाङ्गमुत्तानताम् ।
अंसासक्तविभक्तमुक्तकबरी काकैर्वृतेवापरा
चित्रं मे भवनं विलीननयनस्त्रैणं श्मशानायते ॥ ७० ॥

अहमद्यैव निष्क्रम्य प्रव्रज्यार्थी पुरान्तरात् ।
भगवन्तं व्रजाम्यत्र द्रष्टुं मोहनिवृत्तये ॥ ७१ ॥

विचिन्त्येति समादाय महार्हे रत्नपादुके ।
शक्रप्रभावात्स ययावज्ञातः पुररक्षिभिः ॥ ७२ ॥

D 289 अभिनिष्क्रम्य नगराद्वारां प्राप्य सरिद्वराम् ।
संसारमरुसंक्रान्तं तापं त्यक्तुमिवोद्यतः ॥ ७३ ॥

तमायान्तं विलोक्यैव भगवान् भूतभावनः ।
प्रीत्या संतरणे तस्य ययौ सोत्कण्ठतामिव ॥ ७४ ॥

स हेमवर्णमुद्यम्य दक्षिणं दक्षिणं भुजम् ।
देहप्रभाप्रकाशेन तमः परिहरन् दिशाम् ॥ ७५ ॥

एह्येहि प्राप्नुहि पदं निरपायमनामयम् ।
अभ्यधादिति तं दूरान्मेघघोषघनस्वनः ॥ ७६ ॥

श्रुत्वा भगवतः शब्दममृतेनेव पूरितः ।
यशोदस्त्यक्तसंतापः सद्यः शीतलतां ययौ ॥ ७७ ॥

त्यक्त्वा स सरितस्तीरे महार्हे रत्नपादुके ।
दत्तावगाहामुत्तीर्य तां परं पारमाप्तवान् ॥ ७८ ॥

भगवन्तं स संप्राप्य तापचन्दनपादपम् ।
प्रणनाम प्रसादार्हं चरणालीनशेखरः ॥ ७९ ॥

ततस्तस्यासमोत्कर्षशालिनीं धर्मदेशनाम् ।
चकार शास्ता लेभेऽसौ यया विगतरागताम् ॥ ८० ॥

स्वाख्याते धर्मविनये ब्रह्मचर्याय सुव्रतः ।
D 291 स नियुक्तो भगवता प्रययौ पूर्णकामताम् ॥ ८१ ॥

सुप्रबुद्धः प्रबुद्धोऽथ श्रुत्वा निष्क्रान्तमात्मजम् ।
तद्वियोगाग्निसंतप्तस्तमन्वेष्टुं विनिर्ययौ ॥ ८२ ॥

स शोकसहितस्नेहमोहेन महतार्दितः ।
व्रजन् ददर्श वारायास्तटान्ते रत्नपादुके ॥ ८३ ॥

स समुत्तीर्य सरितं भगवन्तं व्यलोकयत् ।
तत्प्रभावप्रतिच्छन्नं न तु पुत्रं पुरःस्थितम् ॥ ८४ ॥

ततः कृतप्रणामस्य तस्यापि भगवान् पुरः ।
धर्म्यया कथया मोहं त्विषा तम इवाहरत् ॥ ८५ ॥

वीतमोहस्ततः पुत्रं स दृष्ट्वा विमलद्युतिम् ।
शास्तुश्चकारानुमतः प्रणयादधिवासनाम् ॥ ८६ ॥

भगवानथ तद्गेहे कृत्वा पूजाप्रतिग्रहम् ।
तं पत्नीसहितं चक्रे शुद्धशिक्षापदोज्ज्वलम् ॥ ८७ ॥

ततो यशोदसचिवाश्चत्वारः श्रीमतां वराः ।
विमलाख्यः सुबाहुश्च पूर्णकोऽथ गवांपतिः ॥ ८८ ॥

यशःप्रकाशितदिशं यशोदं भगवत्पुरः ।
ब्रह्मचर्यव्रतासक्तं श्रुत्वा तं देशमाययुः ॥ ८९ ॥

तेषां कुशलपाकेन प्राप्तानां भगवान् पुनः । D 293
विदधे धर्मविनये शासनं शुद्धशासनः ॥ ९० ॥

यशोदस्ते च चत्वारो भिक्षवः पञ्च चापरे ।
अर्हत्पदं दश प्रापुस्तदा भगवतोऽन्तिके ॥ ९१ ॥

श्रुत्वा यशोदवृत्तान्तं धन्यास्तत्सचिवाः परे ।
पञ्चाशदन्तिकं शास्तुर्गत्वा तत्तुल्यतां ययुः ॥ ९२ ॥

शतपञ्चकमन्यच्च तद्वृत्तान्तोदितादरम् ।
तत्तुल्यं धर्मविनयं लेभे भगवतोऽन्तिके ॥ ९३ ॥

ततः कदाचिद्भगवान् कौतुकात्सर्वभिक्षुभिः ।
पृष्टः पुण्यं यशोदस्य सर्वज्ञस्तानभाषत ॥ ९४ ॥

पुरा प्रत्येकसंबुद्धः पुरात्संप्राप्तपिण्डकः ।
वारातटान्ते भगवान् शिखी क्षणमुपाविशत् ॥ ९५ ॥

वर्त्मना व्रजतस्तेन ब्रह्मदत्तस्य भूपतेः ।
अनुगः सुप्रभो नाम विश्रान्तं तं व्यलोकयत् ॥ ९६ ॥

सखेदं तीव्रतापेन प्रचण्डकिरणे रवौ । D 295
तं दृष्ट्वा छत्रमादाय च्छायां तस्य चकार सः ॥ ९७ ॥

तस्यान्तिके ब्रह्मचर्यं समादाय सशासनम् ।
बभूव चित्तवैमल्यात्कुशलप्रणिधानवान् ॥ ९८ ॥

ततः प्रत्येकसंबुद्धस्तमुवाच प्रसन्नधीः ।
भविष्यतः शाक्यमुनेरन्तिके बोधिमाप्स्यसि ॥ ९९ ॥

इत्युक्तस्तेन नियतं कालेन त्यक्तविग्रहः ।
सोऽभवत्सुमतिर्नाम देवपुत्रश्चिरं दिवि ॥ १०० ॥

स एष पुण्यवानद्य यशोदः श्रेयसां निधिः ।
सुहृदामपि संप्राप्तः कीर्त्या कुशलसेतुताम् ॥ १०१ ॥

कृकिर्नाम क्षितिपतिः काश्यपस्याकरोत्पुरा ।
शास्तुः शरीरे निर्वाणे रत्नस्तूपमुदारधीः ॥ १०२ ॥

यशस्वी नाम तनयस्तृतीयस्तस्य भूपतेः ।
भक्त्या तस्मिन् मणिस्तूपे रत्नच्छत्रं न्यवेशयत् ॥ १०३ ॥

तेनापि पूर्वपुण्येन जन्मन्यस्मिन् महायशाः ।
जातो यशोदश्छत्रेण रत्नदीप्तेन भूषितः ॥ १०४ ॥

D 297 इत्यन्यजन्मसुकृतोदयबद्धमूलः
सोन्मेष एष शशिशुभ्रयशोंशुपुष्पः ।
धर्मद्रुमः पृथुतरः फलितोऽस्य साधोः
श्रुत्वेति विस्मयमवाप स भिक्षुसंघः ॥ १०५ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
यशोदावदानं नाम द्विषष्टितमः पल्लवः ॥



## ६३ महाकाश्यपावदानम् । D 299

शक्रवायुवरुणादयः सुरा
विक्रियां मुनिवराश्च यत्कृते ।
यान्ति तत्स्मरसुखं तृणायते
यस्य कस्य न स विस्मयास्पदम् ॥ १ ॥

द्विजन्मा मागधग्रामे विश्रुतश्रीर्महास्थले ।
न्यग्रोधकल्पनामाभून्महाशालकुलोद्भवः ॥ २ ॥

तस्य भार्या सुरूपाख्या गृहोद्यानविहारिणी ।
असूत सुतमर्काभं पिप्पलस्य तरोरधः ॥ ३ ॥

जातमात्रे सुते तस्मिन् दीप्तजाम्बूनदद्युतौ ।
दिव्यांशुकं यशःशुभ्रं तस्मात्प्रादुरभूत्तरोः ॥ ४ ॥

स पिप्पलायनो नाम बालः कमललोचनः ।
विद्याकलाकलितधीर्व्यवर्धत सह श्रिया ॥ ५ ॥

स पित्रा प्रार्थ्यमानोऽपि विवाहविमुखः सदा । D 301
बभूव विषयद्वेषी विवेकविशदाशयः ॥ ६ ॥

वंशच्छेदभयात्पित्रा स पुनः पुनरर्थितः ।
तमूचे रोचते मह्यं न पाणिग्रहबन्धनम् ॥ ७ ॥

न तात कामकामोऽहं ब्रह्मचर्ये मतिर्मम ।
शमस्वाच्छन्द्यमुत्सृज्य कस्येष्टं भवबन्धनम् ॥ ८ ॥

बाष्पस्याद्या सततपतने होमधूमैः प्रवृत्तिः
सत्यग्रन्थिर्व्यसनसरणौ तुल्यहस्तार्पणेन ।
संसाराज्ञासमयचलने बन्धनं माल्यदाम्ना
मोहारोहोपहतमनसां हर्षहेतुर्विवाहः ॥ ९ ॥

यैर्नृत्यानिललोलबाललनावल्लीविलासानुगा
वीणावंशरवा विवाहसमये प्रोत्साहितैर्न श्रुताः ।
हा पुत्रेति वधूप्रलापकलनक्लीबा न तेषां श्रिताः
श्रूयन्ते गुरुबाष्पगद्गदगलद्गाढाभियोगा गिरः ॥ १० ॥

इत्युक्त्वा तीव्रनिर्बन्धं पितरं जननीं च सः ।
हेमकन्यां समादाय कुशलैः शिल्पिभिः कृताम् ॥ ११ ॥

संजातां कान्तिसिक्तस्य कौतुकस्येव कन्दलीम् । D 303
कुलविच्छेदचिन्तार्तं धीरः पुनरुवाच तम् ॥ १२ ॥

तुल्यलावण्यवर्णास्या लभ्यते यदि कन्यका ।
करोमि त्वद्गिरा तात तदहं दारसंग्रहम् ॥ १३ ॥
इति पुत्रवचः श्रुत्वा तत्तुल्यां दिवि दुर्लभाम् ।
ब्राह्मणः कन्यकां मत्वा निराशोऽभूदधोमुखः ॥ १४ ॥
विगतानन्दनिस्पन्दं सुहृच्चतुरकाभिधः ।
तं विप्रः श्रुतवृत्तान्तः शोकक्लान्तमभाषत ॥ १५ ॥
प्रयत्नमात्रसाध्येऽर्थे न शोकं कर्तुमर्हसि ।
एष व्रजाम्यहं द्रष्टुं कन्यकां कनकप्रभाम् ॥ १६ ॥
इति स्निग्धस्य सुहृदः स कृत्वा धैर्यमग्रजः ।
आदाय हेमप्रतिमां ययौ धीमान् दिगन्तरम् ॥ १७ ॥
देवतालाञ्छनच्छत्रं समाल्यांशुकभूषणम् ।
गृहीत्वा दिक्षु बभ्राम कन्यापूज्यमुदाहरन् ॥ १८ ॥
तत्पूजोपगताः कन्या नगरग्रामवर्त्मसु ।
विलोकयन् स सततं न तत्तुल्यामवाप्तवान् ॥ १९ ॥
D 305 ततः कदाचिद्वैशाल्यां कपिलस्याग्रजन्मनः ।
कन्यामपश्यद्भद्राख्यां हेमकन्याधिकप्रभाम् ॥ २० ॥
विवाहविमुखीं कान्तां तां वैराग्यविवेकिनीम् ।
स हेमशुल्कां कपिलं ययाचे कथितान्वयः ॥ २१ ॥
तं कन्याजनकः प्राह सत्कुलं कुलविश्रुतम् ।
लोके न्यग्रोधकल्पस्य गोत्रे जातस्य काश्यपे ॥ २२ ॥
किं तु कन्या प्रयत्नेन धनमन्विष्य दीयते ।
दरिद्रोच्छ्वासिनी सा हि पितुर्दहति मानसम् ॥ २३ ॥
पत्नी कलहसंसक्ता कन्यका निर्धनार्पिता ।
व्यसनोपहतः सूनुस्तप्ताश्चेतसि सूचयः ॥ २४ ॥
दत्वा श्रियं जलनिधिः पुरुषोत्तमाय
ज्ञात्वाथ वामनतरं बलियाच्ञया तम् ।
अद्यापि सक्तवडवानलरूपशोकः
सोच्छ्वास एव न विमुञ्चति तीव्रतापम् ॥ २५ ॥
तस्माद्वित्तं समन्विष्य ज्ञात्वा तद्विभवोन्नतिम् ।
दास्यामः सत्कुले कन्या धनाधीना हि सद्गुणाः ॥ २६ ॥
D 307 इति कन्यापितुः श्रुत्वा तत्पुत्रीणां च भाषितम् ।
तथेत्युक्त्वा द्विजः प्रायात्कुमारजनकान्तिकम् ॥ २७ ॥

सुवर्णवर्णलावण्या प्राप्ता कन्येति तद्वचः ।
न्यग्रोधकल्पः श्रुत्वैव बभूवानन्दनिर्भरः ॥ २८ ॥
ब्रह्मचर्यैषिणीं श्रुत्वा कन्यकां पिप्पलायनः ।
स्वयमेवार्थिवेषेण प्रययौ तद्गृहं शनैः ॥ २९ ॥
संप्राप्तातिथिसत्कारः स दृष्ट्वा तत्र तां कृती ।
ब्रह्मचर्यार्थिनीं ज्ञात्वा प्राह पूर्णमनोरथः ॥ ३० ॥
कल्याणि ब्रह्मचर्यार्थी विप्रोऽहं पिप्पलायनः ।
यत्कृते तेन विप्रेण त्वं प्रयत्नेन याचिता ॥ ३१ ॥
अहं विवाहविमुखः पित्रा चात्यर्थमर्थितः ।
त्वमप्येवंविधा भद्रे दिष्ट्या तुल्यः समागमः ॥ ३२ ॥
इति तस्य वचः श्रुत्वा प्रहृष्टा तमुवाच सा ।
आवयोरविरुद्धोऽयं विवाहः शमसंयमात् ॥ ३३ ॥
ततः समुचितावाप्तप्रहर्षोत्साहपूरितः ।
निजं गत्वा स भवनं पितुर्वाक्यममन्यत ॥ ३४ ॥
कपिलोऽपि समन्विष्य तमनन्तधनोदयम् । D 309
प्रददौ तनयां तस्मै वररत्नैरलंकृताम् ॥ ३५ ॥
तयोर्महार्हविभवैर्वृत्ते परिणयोत्सवे ।
अलुप्तब्रह्मचर्योरुनिर्विकारः समागमः ॥ ३६ ॥
रूपयौवनसंभारे तयोः संयमशीलयोः ।
बभूव विभवग्लानिराज्ञाभङ्गान्मनोभुवः ॥ ३७ ॥
पर्यायेणैकनिद्रायां जागर्त्येकः समुत्थितः ।
इति तौ स्पर्शरक्षायै चक्रतुः शयनस्थितिम् ॥ ३८ ॥
कदाचिदथ शय्यान्ते कालव्यालं व्यलोकयत् ।
निद्रामुद्रितनेत्रायां भद्रायां पिप्पलायनः ॥ ३९ ॥
ततः स तद्भयात्तस्या दोर्लतां पार्श्वलम्बिनीम् ।
सदयश्चामरान्तेन ररक्षोत्क्षिप्य वाससा ॥ ४० ॥
सहसा बाहुचलनत्रस्ता हरिणलोचना ।
सा सकम्पकुचालोलहारा पतिमभाषत ॥ ४१
आर्यपुत्र कथं नाम समयः सत्यवादिनः ।
विस्मृतस्तव संजातो यदयं चित्तविप्लवः ॥ ४२ ॥
लज्जावहा विकारस्य केयमापतिता तव । D 311
त्यजन्ति धृतिमर्यादां भूधरा न तु साधवः ॥ ४३ ॥

इति तस्याः वचः श्रुत्वा तामुवाच स सस्मितः।
भद्रे नास्त्येव मनसः स्वप्नेऽपि मम विप्लवः॥ ४४॥

किं त्वेष कृष्णसर्पोऽत्र भीषणः परिवर्तते।
बाहुस्ते शयनालम्बी भीत्या संरक्षितो मया॥ ४५॥

एतत्पत्युर्वचः श्रुत्वा त्यक्तशङ्का जगाद सा।
दिष्ट्या ते सत्यशीलस्य न काममलिना मतिः॥ ४६॥

सर्पः साधुर्वराकोऽयं भयं रागोरगात्परम्।
एकां हन्ति तनुं सर्पः कामः कायशतान्तकृत्॥ ४७॥

रक्ष्यस्तस्माद्विकारोऽयमित्युक्त्वा विरराम सा।
तीव्रं च प्रशशंसास्याः संयमं पिप्पलायनः॥ ४८॥

न्यग्रोधकल्पे कालेन सभार्ये त्रिदिवं गते।
प्रभूतगृहसंभारचिन्ताभारमुवाह सः॥ ४९॥

कदाचित्तैलपानाय वृषाणां तिलपीडने।
तेन भद्रा समादिष्टा न्ययुङ्क्त परिचारिकाः॥ ५०॥

D 313 ताः पीडिततिलास्तैलकुम्भेषु कृमिसंचयम्।
च्युतं विलोक्य सीदन्तमूचुः सकरुणा मिथः॥ ५१॥

अहो नु पापमस्माकं बहुप्राणिपरिक्षयात्।
भद्रायाः सर्वमेतद्वा पातकं यद्गिरा कृतम्॥ ५२॥

तच्छ्रुत्वान्तर्गृहगता भद्रा वैराग्यमाययौ।
तस्मिन्नेव क्षणे भर्ता प्रविश्योवाच तां रहः॥ ५३॥

भद्रे गृहमहाभारश्रान्तोऽहं न सहे सदा।
कृषिक्लेशार्दितवृषप्राणहिंसानुशासनम्॥ ५४॥

इमाः पर्यन्तविरसा निःसाराः सुखसंपदः।
आस्वाद्यमानाः कुर्वन्ति नडशाखा इव व्यथाम्॥ ५५॥

क्लेशशैवालजालेषु पापपङ्केषु वेश्मिनः।
अवसन्ना गृहेष्वेव पङ्केष्विव जरद्गवाः॥ ५६॥

तस्माद्गृहसमारम्भस्त्यागयोग्योऽयमावयोः।
इत्युक्त्वानुमतः पत्न्या शान्त्यै निश्चयमादधे॥ ५७॥

स दत्वा धनमर्थिभ्यो गृहं च सपरिच्छदम्।
निश्चक्राम समुन्मुक्तसर्वाशापाशबन्धनः॥ ५८॥

सोऽथ काश्यपगोत्रत्वान्महाकाश्यपतां गतः । D 315
तत्कालसम्यक्संबुद्धं काश्यपं समुपाययौ ॥ ५९ ॥

बहुपुत्राख्यचैत्यस्य मूले स्थितमुपेत्य तम् ।
तद्दत्तधर्मविनयः शुद्धां बोधिमवाप्तवान् ॥ ६० ॥

भद्रापि लब्धविनया वैराग्याविष्टवर्मना ।
प्राक्पुण्यपरिणामेन लेभे कुशलमुज्ज्वलम् ॥ ६१ ॥

महाकाश्यपमालोक्य संप्राप्तं सुरवन्द्यताम् ।
तत्पुण्यं भिक्षुभिः पृष्टस्तानुवाच तथागतः ॥ ६२ ॥

प्रविरतनिखिलान्नशस्यकाले
विषमतरे विनिवृत्तपिण्डपात्रे ।
कृशधनपुरुषेण काशिपुर्यां
तगरशिखी महितः स्वभोजनेन ॥ ६३ ॥

कृकिनरपतिना कृतेऽपि चैत्ये
वररुचिरत्नचिते तदात्मजश्च ।
मणिकनकविचित्रमातपत्रं
व्यधित महत्कुशलाय पुण्यशीलः ॥ ६४ ॥

जन्मद्वयोपचितपुण्यमहोदयेन D 317
सोऽयं महोपपदकाश्यपतामवाप ।
लब्धोन्नतिः कनकताल इव प्रभाव-
मर्हत्पदं कुशलमूलफलं बिभर्ति ॥ ६५ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
महाकाश्यपावदानं नाम त्रिषष्टितमः पल्लवः ॥



D 319 ## ६४ सुधनकिन्नर्यवदानम् ।

अभिनवकिसलयकोमलमनसामपि कुलिशकठिनधैर्याणाम् ।
महतां मणिविमलानामपि भवति न रागसंक्रान्तिः ॥ १ ॥

शाक्यालये दर्शनमेव पित्रा
सर्वानुकम्पी भृशमर्थ्यमानः ।
यदा यदानन्दसुधारसेन्दु-
र्विवेश शास्ता निजराजधानीम् ॥ २ ॥

तदा तदा हर्म्यगता मृगाक्षी
कर्णावतंसीकृतनेत्रकान्तिः ।
कान्त्या दिशां विस्मयमुल्लिखन्तं
यशोधरा तं दयितं विलोक्य ॥ ३ ॥

D 321 तत्संगमालिङ्गनयोर्निराशा
भ्रान्ताखिलाशा विषमूर्च्छितेव ।
धृतिं वयस्यामिव वारयन्तीं
निरस्य सौधात्तनुमुत्ससर्ज ॥ ४ ॥

यदा यदा पल्लवपेशलाङ्गी
देहं समुत्सृष्टवती सती सा ।
तदा तदा मन्मथमोहितां तां
दयार्द्रचक्षुर्भगवान् ररक्ष ॥ ५ ॥

ततः कदाचिद्भगवान् वनान्ते
तत्कौतुकाद्भिक्षुगणेन पृष्टः ।
जगाद दन्तद्युतिचन्द्रिकाभि-
र्निवारयन् रागमिवाधरस्य ॥ ६ ॥

यशोधरा मद्विरहेण नित्यं
करोति यत्साहसमेतदार्ता ।
हरन्ति धैर्यं वितरन्ति मोह-
मेष स्वभावः स्मरविभ्रमाणाम् ॥ ७ ॥

D 323 मयापि तस्या विरहेण पूर्वं
जन्मान्तरे मारविमोहितेन ।

संसक्तसंतापनिमित्तभूतः
खेदः प्रभूतव्यसनोऽनुभूतः[१] ॥ ८ ॥
पुरा जितामरपुरे सत्पुरे हस्तिनापुरे ।
राजा धनाभिधानोऽभून्निधानं गुणसंपदाम् ॥ ९ ॥
भुजेनालिङ्गिता भूमिः कृता कण्ठे सरस्वती ।
लक्ष्मीः प्रसाधिता येन कीर्तिरेव प्रवासिता ॥ १० ॥
रामायां तस्य जायायां तनयः सुधनाभिधः ।
अभवत्सहसंजातनिधानशतविश्रुतः ॥ ११ ॥
सर्वविद्याकुमुदिनीविकासरसिकः सदा ।
कलावान्निर्मलरुचिर्यः पूर्णेन्दुरिवाबभौ ॥ १२ ॥
बभूव तस्य भूभर्तुर्भूपतिर्भूम्यनन्तरः ।
मानी महेन्द्रसेनाख्यः प्रख्यातपृथुविक्रमः ॥ १३ ॥
तेन दुःसहदण्डेन सर्वसर्वस्वहारिणा ।
अकालकालकल्पेन पीडिताः शुशुचुः प्रजाः ॥ १४ ॥
तस्याधर्मप्रवृत्तस्य निवृत्तसुकृतोत्सवे । D 325
तीव्रोपतापसंतप्ते पुरे न ववृषुर्घनाः ॥ १५ ॥
प्रतिकूले महीपाले तत्र दुर्भिक्षविप्लवः ।
बभूव व्यसनेष्वेव भवन्ति व्यसनोदयाः ॥ १६ ॥
ततः क्लेशविशेषार्ताः सर्वे पुरनिवासिनः ।
कुपतिव्यसनोद्वेगादेकीभूता व्यचिन्तयन् ॥ १७ ॥
राज्ञा दोषाकरेणेयं जडेन जनता परम् ।
प्रत्यग्रकरपातेन नलिनीव निमीलिता ॥ १८ ॥
एष दुर्व्यसनी नित्यमसत्यामात्यसंमतः ।
अस्मान्निपीड्य पुष्णाति विटचेटकगायनान् ॥ १९ ॥
कष्टा तत्राप्यनावृष्टिः पापशापेन भूपतेः ।
दुर्भिक्षजननी जाता जनसंक्षयसाक्षिणी ॥ २० ॥
सुतीक्ष्णः क्ष्मापालः खरमुखरमूर्खः परिजनः
कदर्थाश्चामात्याः कटुकपटकौटिल्यपटवः ।
पदस्थाः कायस्था विषममुखरोगाः प्रकुपिताः
कथं सोऽयं सह्यः कृपणदलनो दारुणगणः ॥ २१ ॥

---

१ W1 has the following additional Śloka :—
स्वयम्भ्वर्चनमाहात्म्यमथ वक्ष्यामि हे जिनाः ।
यदर्चनात्सुधनोऽसौ स्त्रीरत्नादिकमाप्तवान् ॥

D 327 धनः श्रीमान् क्षितिपतिः श्रूयते राष्ट्रवर्धनः।
गच्छामस्तत्पुरं सोऽस्मान् वत्सलः पालयिष्यति ॥ २२ ॥
अपत्यमिव राष्ट्रं यः सदा पश्यति भूपतिः।
विषये जीव्यते तस्य जनकस्येव वेश्मनि ॥ २३ ॥
इति निश्चयमाधाय ययुस्ते हस्तिनापुरम्।
त्याज्यः कायोऽपि सापायः किं पुनर्देशसंश्रयः ॥ २४ ॥
ज्ञात्वा महेन्द्रसेनोऽपि स्वपुरं निर्जनं नृपः।
तीव्रानुतापः सामर्षं महामात्यानभाषत ॥ २५ ॥
धनस्य धनिनो राज्ञः पुरं मत्पुरवासिनः।
प्रयाता इति नश्चारैः कथितं गूढचारिभिः ॥ २६ ॥
दुर्भिक्षखिन्ना यदि ते याता मम रिपोः पुरम्।
तत्सर्वत्र भवन्त्येव पर्यायैर्दैवविप्लवाः ॥ २७ ॥
अथवा राजदोषेण गतास्ते सुखवाञ्छया।
विष्टिदण्डकरोन्मुक्तः कस्य राज्ञः पुरे जनः ॥ २८ ॥
प्रायः परिचितद्वेषात्सदा नवनवैषिणः।
दूरस्थ एव सर्वस्य सर्वो भवति वल्लभः ॥ २९ ॥
D 329 अस्मदभ्यधिकः कोऽसौ तस्य भूमिपतेर्गुणः।
परेषां हरते येन मुग्धा जाया इव प्रजाः ॥ ३० ॥
उपायश्चिन्त्यतां तावत्तस्य दर्पप्रशान्तये।
समृद्धिकारणं यच्च तद्विघातो विधीयताम् ॥ ३१ ॥
इति राजवचः श्रुत्वा महामात्या बभाषिरे।
श्रूयतां देव येनासौ राजा धनजनोर्जितः ॥ ३२ ॥
विषये नागराजोऽस्ति चित्रो नाम बहूदकः।
तस्य क्षितिपतेर्मूर्तः पुण्यबद्ध इवोदयः ॥ ३३ ॥
अकाले शस्यनिष्पत्तिस्तत्प्रभावेण जायते।
कृषिसंपत्तिमूलाश्च भूभुजां सर्वसंपदः ॥ ३४ ॥
तस्माद्विद्याबलान्नागः संहर्तुं यदि शक्यते।
तदा यान्ति स्वयं तस्य प्रजास्त्वामेव संश्रयम् ॥ ३५ ॥
दीप्तमन्त्रबलं कंचित्तस्मादन्विष्य साधकम्।
नागराजस्य हरणे क्रियतां तूर्णमुद्यमः ॥ ३६ ॥
इत्यमात्यवचः श्रुत्वा तथेत्याह महीपतिः।
स्वगुणाधानविकलाः परदोषोद्यताः खलाः ॥ ३७ ॥

ततः प्रभूतकनकप्रदानपणघोषणाम् । D 331
कृत्वा ते मन्त्रिणः प्रापुर्नागबन्धनमन्त्रिणम् ॥ ३८ ॥

स तैर्विद्याधरो नाम सुवर्णार्पणसंविदा ।
प्रार्थितश्चित्रमानेतुं प्रययौ हस्तिनापुरम् ॥ ३९ ॥

तत्र काननपर्यन्ते स्निग्धश्यामलपादपे ।
भवनं भोगिनां भर्तुः स ददर्श नभःप्रभम् ॥ ४० ॥

वलद्वकुलमालाया विलसत्तिलकश्रियः ।
वनलक्ष्म्या इवासन्नमण्डना मणिदर्पणम् ॥ ४१ ॥

तद्विलोक्यामलजलं स्पृहामलिनमानसः ।
मन्त्रानुध्यानसंनद्धः सिद्ध्यै दिग्बन्धमादधे ॥ ४२ ॥

दिग्बन्धे विहिते तेन व्रतेनात्युग्रतेजसा ।
शिरोव्यथा नागपतेरभूत्तप्तफणामणेः ॥ ४३ ॥

अथादृश्यः समुत्थाय तं दृष्ट्वा मन्त्रसाधकम् ।
कम्पमानः फणिपतिर्बन्धत्रासादचिन्तयत् ॥ ४४ ॥

बभ्रूभ्रूश्मश्रुशबलस्तडित्कपिललोचनः ।
अकालकालसंकाशः कुलं हन्तुं समागतः ॥ ४५ ॥

वने संप्रति दिग्बन्धः कृतोऽनेन दुरात्मना । D 333
बध्नात्येष न यावन्मां तावद्युक्तिक्रमः क्षमः ॥ ४६ ॥

तीरोपान्ते वसत्यस्मिन् महर्षिर्वल्कलायनः ।
जाने सोऽपि न मे साधुः परित्राणे प्रगल्भते ॥ ४७ ॥

तस्याश्रमपदे योऽसौ परिचर्यापरः सदा ।
लुब्धकः पद्मको नाम स मे संरक्षणक्षमः ॥ ४८ ॥

इति निश्चित्य मनसा गत्वा स लुब्धकान्तिकम् ।
स्ववृत्तान्तं निवेद्यास्मै बन्धरक्षामयाचत ॥ ४९ ॥

साधकस्य वधायैव नागराजेन सोऽर्थितः ।
धन्वी तं देशमभ्येत्य मन्त्रधीरं व्यलोकयत् ॥ ५० ॥

अस्मिन्नवसरे मन्त्री स प्रकोपी हुतानलः ।
आकृष्टिं नागराजस्य विदधे बन्धनोत्सुकः ॥ ५१ ॥

मन्त्राकृष्टे फणिपतौ क्षणं तद्भवनोदकम् ।
सविषादं रुरोदेव प्रोद्यद्बुद्बुदशब्दितम् ॥ ५२ ॥

संत्रासविह्वलभुजंगवधूविषाद-
निःश्वासवेगविहितोज्ज्वलफेनमालम् ।
रक्षार्थनामिव चकार तरङ्गहस्त-
सक्ताञ्जलिप्रबलकम्पविलोलमम्भः ॥ ५३ ॥

D 335 आत्ते विद्याबलात्तेन नागे गरुडतेजसा ।
संकोचितविलाभोगे क्षिते च जलभाजने ॥ ५४ ॥
तं हेमलुब्धं बाणेन त्राससंदिग्धलोचनम् ।
विव्याध धनुराकृष्य विषदिग्धेन लुब्धकः ॥ ५५ ॥
भग्नबाणं तमभेत्य भूयस्त्यक्तभुजंगमम् ।
करालकरवालेन त्विड्विलक्ष्यं चकार सः ॥ ५६ ॥
सा विद्या बन्धकी तस्य लोभादन्योपयोगिनी ।
अभूत्सिद्धापि मुग्धस्य स्वविनाशाय केवलम् ॥ ५७ ॥
मुक्ताः परोपतापाय विद्याविभवशक्तयः ।
सहसैव विमूढानां विनश्यन्ति सहासुभिः ॥ ५८ ॥
ततः प्रहर्षसंपूर्णः कृतज्ञः फणिनायकः ।
तं निनाय स्वभवनं लुब्धकं स्नेहलुब्धकः ॥ ५९ ॥
तत्र रत्नतलोद्यानविमानमणिवेश्मसु ।
अभ्यर्च्यमानश्चित्रेण कंचित्कालमुवास सः ॥ ६० ॥
कदाचिदथ नागेन पूज्यमानः सविस्मयः ।
विद्युद्दामोपमं पाशममोघाख्यं ददर्श सः ॥ ६१ ॥
D 337 तं दृष्ट्वा तत्प्रभावं च श्रुत्वा नागनिवेदितम् ।
यत्नात्तदर्थनां चक्रे लुब्धको लुब्धमानसः ॥ ६२ ॥
अजय्यं समरोद्योगे सुराणामपि बन्धनम् ।
तं जीविताधिकं तस्मै ददौ प्रीत्या फणीश्वरः ॥ ६३ ॥
ततस्तं पाशमादाय चित्रमामन्त्र्य लुब्धकः ।
उत्तीर्य नागभवनाल्लब्धार्थः स्वपदं ययौ ॥ ६४ ॥
नागप्रभावसंप्राप्तां चिरं भुक्त्वा स संपदम् ।
पुत्रायोत्पलकाख्याय पाशं दत्वा व्यपद्यत ॥ ६५ ॥
पालयन् पितुराचारं सोऽपि लुब्धकुमारकः ।
मुनेस्तस्य कुलस्थित्या परिचर्यापरोऽभवत् ॥ ६६ ॥
ततः कदाचित्स मुनेर्विश्रान्तस्य स्थितः पुरः ।
शुश्राव काकलीगीतं कीर्णं कर्णरसायनम् ॥ ६७ ॥

गीतश्रवणनिस्पन्दनिलीनहरिणं वनम् ।
चित्रन्यस्तमिवालोक्य सोऽपृच्छद्विस्मितो मुनिम् ॥ ६८ ॥
कमलाबन्धसंरुद्धमधुपध्वनिसोदरः ।
कुतोऽयं कोकिलालापललितः श्रूयते स्वनः ॥ ६९ ॥
इति लुब्धकपुत्रेण पृष्टस्तं मुनिरब्रवीत् । D 339
गायन्ति मधुरालापमेताः किन्नरकन्यकाः ॥ ७० ॥
द्रुमस्य किन्नरपतेः कन्या कन्याशतैर्वृता ।
पञ्चभिर्नागभवने क्रीडत्येषा मनोहरा ॥ ७१ ॥
श्रुत्वैतत्कौतुकाक्रान्तः स पुनर्मुनिमभ्यधात् ।
अपि शक्नोति पुरुषः प्राप्तुं किन्नरकन्यकाम् ॥ ७२ ॥
तमुवाच मुनिर्यस्य भवेत्पाशः कराग्रगः ।
अमोघाख्यः स शक्नोति हर्तुं किन्नरकामिनीम् ॥ ७३ ॥
स तदाकर्ण्य सोत्साहस्तं प्रणम्याथ लुब्धकः ।
प्रययौ पाशमादाय भोगीन्द्रभवनान्तिकम् ॥ ७४ ॥
तत्र केलिविलासाङ्कं सोऽपश्यत्किन्नरीगणम् ।
बिभ्राणमनिलालोलहेमवल्लीवनश्रियम् ॥ ७५ ॥
मध्ये स्नानोत्थितां तासां स ददर्श मनोहराम् ।
स्मरस्येव त्रिनेत्राग्निनिर्वाणजलदेवताम् ॥ ७६ ॥
अनङ्गविभ्रमारम्भनिर्भरोर्मिणि यौवने ।
मज्जतः शैशवस्येव कुर्वाणामवलम्बनम् ॥ ७७ ॥
मेखलाबन्धसंनद्धदिव्याम्बरमनोरमाम् । D 341
जलकेलिकलासिक्तस्फुरत्फेनावलीमिव ॥ ७८ ॥
लावण्यप्रसृतेनेव प्रवाहेण महीयसा ।
हरन्तीं तारहारेण शशिशुभ्रनिशाश्रियम् ॥ ७९ ॥
कलयन्तीं जलोल्लीढां लीलापत्रलतां पुनः ।
कर्णाभरणरत्नांशुकर्णोत्पलकपोलयोः ॥ ८० ॥
कस्तूरीलेखया सख्या लिख्यमानललाटिकाम् ।
कलङ्ककलनाक्लैव्यं शमयन्तीं हिमत्विषः ॥ ८१ ॥
तां दृष्ट्वा विस्मयावेशपाशेनाकृष्टमानसः ।
चक्रे पाशममोघाख्यं सज्जं सपदि लुब्धकः ॥ ८२ ॥
ततः संत्रासतरलाः सहसा हरिणेक्षणाः ।
किन्नर्यो दिवमुत्पेतुः पाशहस्तं विलोक्य तम् ॥ ८३ ॥

लघुहस्ततया क्षिप्त्वा पाशं चकितलोचनाम्।
मनोहरां स जग्राह हरिणीमिव लुब्धकः॥ ८४॥
सा पाशविवशा तेन कृष्टा कष्टदशां श्रिता।
किमेतदिति नाज्ञासीत्क्षणं मूर्च्छानिमीलिता॥ ८५॥
D 343 यूथभ्रष्टेव करिणी स्वजनालोकनाशया।
निरीक्षमाणा ककुभः सा संभ्रान्ता तमभ्यधात्॥ ८६॥
मुञ्च मुञ्च दृढाक्षिप्तां मा स्प्राक्षीः परिरक्ष माम्।
क्रूरा अपि भवन्त्येव शोकार्तिषु कृपालवः॥ ८७॥
लोभादनुत्तमपदप्रयुक्ता दिव्यकन्यका।
सद्यः प्रदीप्ता विद्येव निर्दहत्येव साधकम्॥ ८८॥
मां विचार्य धिया धीमन्नुचिताय प्रयच्छतः।
भविष्यति तवावश्यं महान् धर्मधनागमः॥ ८९॥
पीडां पाशकृतामेतां न सहे मुञ्च बन्धनम्।
स्वयं व्रजाम्यहं तत्र यत्र तेऽभिमता गतिः॥ ९०॥
दिवमुत्पद्य गच्छामि न त्वहं मुक्तबन्धना।
यद्वशान्मे गतिर्व्योम्नि चूडारत्नं गृहाण तत्॥ ९१॥
इत्युक्तः स तया सास्रं प्रयातः करुणार्द्रताम्।
चूडामणिं समादाय पाशं मुक्त्वा जगाद ताम्॥ ९२॥
समाश्वसिहि कल्याणि न शोकं कर्तुमर्हसि।
न नामानुचिताय त्वां प्रयच्छामि निजेच्छया॥ ९३॥
D 345 अस्ति राजसुतः श्रीमान् गुणरत्नमहोदधिः।
पूरिताः ककुभः सर्वा येन कीर्त्यमृतोर्मिभिः॥ ९४॥
स विद्यावन्धनादर्शः कलाकेलिविभूषणः।
सुवृत्तः सुधनो नाम निजवंशविशेषकः॥ ९५॥
स ते समुचितः सुभ्रु विभ्रमाभरणं भुवः।
त्यागोपभोगसुभगः सुखोत्सव इव श्रियः॥ ९६॥
सुरकिन्नरगन्धर्वविद्याधरविलासिनाम्।
यः खर्वीकुरुते गर्वमुर्वराशर्वरीपतिः॥ ९७॥
इति तेन कृताश्वासा वन्धुवर्गवियोगिनी।
कुररीवातिकरुणं विललाप मनोहरा॥ ९८॥
अत्रान्तरे विन्ध्यतटीं मृगयाकेलिकौतुकी।
प्रस्थितः सुधनो धन्वी शनैस्तं देशमाययौ॥ ९९॥

रथनेमिस्वनैस्तस्य प्रनृत्यच्छिखिमण्डली।
वनलक्ष्म्याः क्षणं लेभे लोलनीलदुकूलताम् ॥ १०० ॥
स कपोलप्रणयिभिर्बभौ स्वेदोदबिन्दुभिः।
संक्रान्तैः कुण्डलप्रान्तकान्तमुक्ताफलैरिव ॥ १०१ ॥
स्यन्दनाश्वखुरोद्धूतं दन्तदीधितिभिः पुरः। D 347
हरन्निव रजःपुञ्जं व्याजहार स सारथिम् ॥ १०२ ॥
अहो मनोरथेनेव रथेनानिलरंहसा।
दूरोज्झिता स्वसैन्येन कियती लङ्घिता क्षितिः ॥ १०३ ॥
एता बालानिलोल्लासलोलपिप्पलपल्लवाः।
हरन्ति हरितच्छायां हरिणाभरणा भुवः ॥ १०४ ॥
एता बालप्रवालोष्ठाः स्तबकस्तनबन्धुराः।
सोत्कण्ठा इव जृम्भन्ते मञ्जर्यः श्वसनाकुलाः ॥ १०५ ॥
इमा मरकतश्यामशष्पसंचयकञ्चुकाः।
राजन्ते कौसुमरजोरञ्जिता वनराजयः ॥ १०६ ॥
एता विवलितग्रीवा हरिण्यस्त्रासविद्रुताः।
नीलोत्पलवनानीव सृजन्ति तरलेक्षितैः ॥ १०७ ॥
एते निशाकरकराङ्कुरकान्तदन्ताः
पल्लीपतिप्रणयिनीस्तनतुल्यकुम्भाः।
पश्यन्ति दन्तिशिशवः परितो रथं मे
नेमिस्वनापहृतचापललीनकर्णाः ॥ १०८ ॥
एते निर्मलनर्मदापरिसरव्याजृम्भिवल्लीवल- D 349
त्पुष्पोद्दाममधूत्सवप्रणयिनः क्षीबा इवाघूर्णिताः।
संनद्धाः शबरीनितम्बविलसन्मायूरपत्रावली-
लीलान्दोलननर्मविभ्रमकलाबन्धेषु विन्ध्यानिलाः ॥ १०९ ॥
इति ब्रुवाणः कलयन् वनलक्ष्मीं नृपात्मजः।
शुश्राव निर्जनाकीर्णे किन्नर्याः करुणस्वनम् ॥ ११० ॥
श्रुत्वैव कौतुकाकृष्टस्तत्समीपं कृपानिधिः।
सोऽभ्येत्य सद्गुणादर्शस्तां ददर्श मृगीदृशम् ॥ १११ ॥
याचमानां परित्राणं लुब्धकं साश्रुलोचनाम्।
वनेचरभयोद्विग्नामिव काननदेवताम् ॥ ११२ ॥
अन्वेष्टुं लुब्धकाकृष्टं स्वमङ्कमृगमागताम्।
खिन्नामिव वनभ्रान्त्या लक्ष्मीं हरिणलक्ष्मणः ॥ ११३ ॥

तां विलोक्य स साश्चर्यरूपातिशयविस्मितः ।
अभिलाषपटे क्षिप्रं चित्रन्यस्त इवाभवत् ॥ ११४ ॥
सोऽचिन्तयदहो रम्यनिर्माणाभ्यासकारिणः ।
D 351 अस्मिन् मुखसमुल्लेखे रेखापरिणतिर्विधेः ॥ ११५ ॥
दुर्लभा भोगिभवने मर्त्यलोके कथैव का ।
मन्ये लावण्यमुद्रेयं स्वर्गेऽप्यभिनवोदिता ॥ ११६ ॥

तारुण्येन निपीतशैशवतया सानङ्गशृङ्गारिणी
तन्वङ्ग्याः सकलाङ्गसंगमसखीभङ्गिर्नवाङ्गीकृता ।
निःसंरम्भपराक्रमः पृथुतरारम्भाभियोगं विना
साम्राज्ये जगतां यया विजयते देवो विलासायुधः ॥ ११७ ॥

इति विस्मयगर्भेण साभिलाषेण चक्षुषा ।
तां पिबन्तमिवाभ्येत्य प्रणम्य प्राह लुब्धकः ॥ ११८ ॥
कुलकल्पद्रुमस्येयं द्रुमस्य दयिता सुता ।
देव किन्नरराजस्य पाशेनापहृता मया ॥ ११९ ॥
आनीता त्वत्कृते दिव्यकन्यैषा प्रतिगृह्यताम् ।
त्वमेवास्या गुणोदार भर्ता भुव इवोचितः ॥ १२० ॥
अस्याश्चूडामणिरयं मया स्वेच्छागतिप्रदः ।
गृहीतस्तद्विरहिता नेयं याति विहायसा ॥ १२१ ॥
रक्ष्यो मणिरयं नास्ति दत्तेऽस्मिन् संगमोऽनया ।
इत्युक्त्वास्मै ददौ कन्यारत्नं रत्नं च लुब्धकः ॥ १२२ ॥
D 353 गृहीता राजपुत्रेण सा महीमृगलक्ष्मणा ।
सुधासिक्तेव तत्याज स्वदेशविरहानलम् ॥ १२३ ॥
उत्कण्ठालोकनालोलां तां बालहरिणीमिव ।
बबन्ध लुब्धकत्यक्तां रागवागुरया स्मरः ॥ १२४ ॥
किन्नरीं रथमारोप्य रत्नैरापूर्य लुब्धकम् ।
हर्षपूर्णः स्वनगरं प्रतस्थे पार्थिवात्मजः ॥ १२५ ॥
स हस्तिनापुरं प्राप्य निवेद्य स्वकथां पितुः ।
हर्षाद्विस्मयिना तेन विवाहे विहितोत्सवः ॥ १२६ ॥
सुकृतैर्भोग्यतां यातां मूर्तामिव शशिश्रियम् ।
अन्तःपुरप्रणयिनीं चक्रे किन्नरकन्यकाम् ॥ १२७ ॥
दधता मधुपेनेव तेनाधरमधुस्पृहाम् ।
स्पृष्टा नतमुखाम्भोजा चकम्पे नलिनीव सा ॥ १२८ ॥

मौनेऽपि कथितोत्कण्ठा मुहुः कम्पेऽपि निश्चला ।
वैलक्ष्येऽपि स्फुटल्लक्ष्मीस्तस्य प्रीतिं ततान सा ॥ १२९ ॥
स शनैरधरास्वादे दत्वा दन्तविभीषिकाम् ।
निमीलितदृशस्तस्या मौनमुद्रामवारयत् ॥ १३० ॥
नीवीमोक्षे निषेधे च दम्पत्योः पाणिपद्मयोः । D 355
विवाद इव सोत्कम्पं कङ्कणस्वनयोरभूत् ॥ १३१ ॥
स रागपल्लवस्तस्य विलासस्मितपुष्पितः ।
कान्ताकुचफलाङ्कोऽभूद्भोग्यः संभोगपादपः ॥ १३२ ॥
अत्रान्तरे दाक्षिणात्यौ विप्रौ कपिलपुष्करौ ।
आजग्मतुर्वृत्तिकामौ धनस्य नृपतेः सभाम् ॥ १३३ ॥
तौ विद्यातिशयश्लाघ्यौ पौरोहित्यमवापतुः ।
कपिलः क्षितिपालस्य राजपुत्रस्य चापरः ॥ १३४ ॥
तयोः स्पर्धानुबन्धेन सदा विवदमानयोः ।
एकद्रव्याभिलाषेण विद्वेषः समजायत ॥ १३५ ॥
द्वेषदोषेण मातङ्गयोग्यनिर्घातयोस्तयोः ।
विदधे मदलेखेव विद्या मलिनतां मुखे ॥ १३६ ॥
येषां वस्तुविवेकिनां गुणसखी लोकप्रकाशोन्मुखी
विद्यादीपशिखा करोति विषमं द्वेषान्धकारं पुरः ।
ते मोहोपहता विचाररहिताः सौजन्यजन्याहिता
दग्धाश्चन्दनचन्द्रकान्तकमलस्यन्दोद्गतेनाग्निना ॥ १३७ ॥
श्रुतिस्मृतिविवादेषु पुष्करेण पदे पदे । D 357
निगृह्यमाणः कपिलः कोपतापादचिन्तयत् ॥ १३८ ॥
मन्दाभ्यासं दृढाभ्यासस्तीक्ष्णस्तीव्रमदोद्धतः ।
सदा संसदि मामेव नयत्येष विलक्षताम् ॥ १३९ ॥
प्रज्ञावञ्चकवृत्ताय श्रुतं दर्पज्वराय च ।
धनं धर्मनिषेधाय भवत्यधमचेतसाम् ॥ १४० ॥
दृप्तः परिभवत्येष राजपुत्राश्रयेण माम् ।
तस्मादाश्रयमेवास्य श्रीमूलं प्रहराम्यहम् ॥ १४१ ॥
निधने राजपुत्रस्य युक्त्युपायेन केनचित् ।
युक्तः कर्तुं प्रयत्नो मे मानम्लानिं कथं सहे ॥ १४२ ॥
इत्युग्रपापसंकल्पस्तस्य द्वेषात्समुद्ययौ ।
नास्ति तत्पातकं लोके यन्न कुर्वन्ति मत्सराः ॥ १४३ ॥

कथं पश्यति सद्धर्मं समदो व्यथिताश्रयः ।
दत्तं नयनयोर्येन तीव्रामर्षविषाञ्जनम् ॥ १४४ ॥

रागः पापं परममधिकं दर्पपापं ततोऽपि
क्रोधात्पापं जगति न परं दुःसहं लोभपापम् ।
यावानेष व्यसनिनि जने गण्यते पापवर्गः
पापांशस्य स्पृशति न तुलां सोऽपि विद्वेषसूतेः ॥ १४५ ॥

D 359 ततः कदाचिन्मेघाख्यं क्रूरं कर्वटवासिनम् ।
विसृष्टसैन्यहन्तारं सामन्तमपकारिणम् ॥ १४६ ॥

श्रुत्वा नरपतिः कोपाच्चतुर्थोपायनिश्चये ।
अमात्यानामनुमते कुमारमिदमब्रवीत् ॥ १४७ ॥

कुमार गम्यतां तूर्णमुच्छेत्तुं तरसा रिपुम् ।
क्रमोपपन्नं साम्राज्यं निःशल्यमिदमस्तु ते ॥ १४८ ॥

अयं ते समरारम्भे प्रभावाभरणो भुजः ।
आलानस्तम्भतां यातु जगद्विजयदन्तिनः ॥ १४९ ॥

मेघे भूभृत्कुलाक्रान्तसंरम्भाभ्यधिकोदये ।
हते तव प्रतापस्य निर्विघ्नावरणा दिशः ॥ १५० ॥

दुर्बलैः किं हतैरन्यैः सामन्तैरन्तवासिभिः ।
दृप्तः स एव हन्तव्यस्तद्वधे सर्वसिद्धयः ॥ १५१ ॥

किं कौतुकं यदि हरिः करिचक्रवाल-
माहन्ति दैवविहितं निजमेव भोज्यम् ।
पञ्चाननं यदि भिनत्ति नखाट्टहासं
तत्तस्य पौरुषकथापथमेति शौर्यम् ॥ १५२ ॥

D 361 इति पित्रा समादिष्टः समीहितरणोत्सवः ।
किन्नरीविरहालोलः सोऽभूद्दोलाकुलः क्षणम् ॥ १५३ ॥

अचिरागमनाख्यानैर्यत्नेनाश्वास्य वल्लभाम् ।
जननीं स्वैरमभ्येत्य प्रणिपत्य जगाद सः ॥ १५४ ॥

दुहिता शक्रकल्पस्य किन्नरेन्द्रस्य मानिनी ।
पाल्या विरहशोकार्ता मद्वात्सल्यधिया त्वया ॥ १५५ ॥

अस्याश्चूडामणिरयं रक्ष्यः खेच्छागतिप्रदः ।
दातव्यः सर्वथा मातर्नान्यत्र प्राणसंशयात् ॥ १५६ ॥

इत्युक्त्वा जननीहस्ते कान्तं कान्ताशिखामणिम् ।
निक्षिप्य स ययौ तूर्णं सैन्याच्छादितदिङ्मुखः ॥ १५७ ॥

तस्य वादित्रजोद्भूतरजःपुञ्जघनोदयः ।
प्रययौ राजहंसानां संत्रासायासहेतुताम् ॥ १५८ ॥
दूरं प्रयाते दयिते विरहेण मनोहरा ।
बभूव बालनलिनीपलाशशयनाश्रया ॥ १५९ ॥
सोत्कण्ठाया दिवसगणनारम्भनित्याभियोगे
संख्यालेखासरणिमवनौ कम्पलोलं लिखन्त्याः ।
तस्याः पाणौ निपतितरणत्कङ्कणे तानवेन
क्षिप्रं मुक्तावलयकलनामश्रुधारा चकार ॥ १६० ॥
द्वेषः पुष्पशरे सुखे विमुखता देहेऽपि निःस्नेहता D 363
पत्यौ ध्यानपरायणत्वमनिशं तन्नाममन्त्रे जपः ।
शय्या भूमितले तथापि सुतनोस्तापक्षतिर्नाभवत्
नूनं निश्चललीनरागमनसां मुक्तिर्न तीव्रव्रतैः ॥ १६१ ॥
लीना स्फटिकपर्यङ्के हरिचन्दनपाण्डुरा ।
चन्द्रलेखेव सा तन्वी ज्योत्स्नामध्यगता बभौ ॥ १६२ ॥
कदाचिदथ भूपालः स्वप्नदर्शनशङ्कितः ।
पुरोहितं समाहूय पप्रच्छ कपिलं रहः ॥ १६३ ॥
दृष्टमद्य मया स्वप्ने निरुद्धं शत्रुभिः पुरम् ।
पाटितोदरकुष्टैश्च ममान्त्रैः परिवेष्टितम् ॥ १६४ ॥
स्वप्नस्यास्य विपाकार्हं फलं ब्रूहि महामते ।
विचिन्तय शुभोदर्कामुचितां च प्रतिक्रियाम् ॥ १६५ ॥
इति पृष्टः क्षितीशेन क्षणमन्तः पुरोहितः ।
भक्तिदम्भधृतध्यानः समीहितमचिन्तयत् ॥ १६६ ॥
उपायोऽयं मया दिष्ट्या प्राप्तः सुचिरचिन्तितः ।
पुष्करस्याश्रयोच्छित्त्यै राजपुत्रविनाशने ॥ १६७ ॥
प्रिया मनोहरा ज्येष्ठं जीवितं तस्य किन्नरी । D 365
अभावे नियतं तस्या न स जीवति दुःखितः ॥ १६८ ॥
इति संचिन्त्य शनकैर्मिथ्याखेदविषादवान् ।
अभ्यधाद्वसुधाधीशमहितैषी पुरोहितः ॥ १६९ ॥
दुःस्वप्नोऽयं त्वया देव हृदयाकम्पनः परम् ।
दृष्टः स्पष्टफलं तस्य दुःसहं कथमुच्यते ॥ १७० ॥
प्रभुभक्तिव्रतस्थानां दोषेष्वविहितात्मनाम् ।
न कर्णकटुकं वक्तुं निषेधोऽस्ति हितैषिणाम् ॥ १७१ ॥

राज्याद्भ्रंशः शरीराद्वा स्वप्नस्यास्य फलं स्फुटम्।
शङ्काविरहितैः कार्यः प्रतीकारोऽत्र भूतये ॥ १७२ ॥
पुष्करिण्यां क्रतुक्षेत्रे पूर्णायां पशुशोणितैः।
स्नातस्त्वं मार्जितो विप्रैर्भूरिरत्नसुवर्णदः ॥ १७३ ॥
किन्नरीमेदसा वह्निं हुत्वा कुशलमाप्स्यसि।
अन्तःपुरे स्नुषा तेऽस्ति किन्नरी न तु दुर्लभा ॥ १७४ ॥
इति तस्य वचः श्रुत्वा क्रूरपातककूणितः।
नृशंसवृत्तसंत्रस्तस्तमभाषत भूपतिः ॥ १७५ ॥
D 367 निजजीवितरक्षायै कथं स्त्रीवधमुत्सहे।
किन्नरीविरहेऽवश्यं न च जीवति मे सुतः ॥ १७६ ॥
इति भूमिभुजा तस्य प्रत्याख्याते समीहिते।
तं पापाभिनिवेशेन पुनः प्राह पुरोहितः ॥ १७७ ॥
अहो राजन्न जानीषे धीमानपि जनस्थितिम्।
त्रिवर्गसाधनं त्याज्यं न राज्यं न च जीवितम् ॥ १७८ ॥
अर्था इव स्वजनमित्रकलत्रपुत्रा
नष्टाः स्थितस्य पुरुषस्य पुनर्भवन्ति।
उच्छ्वासमात्रविरहे गतजीवितस्य
तत्कालसंनिहितमप्यसदेव सर्वम् ॥ १७९ ॥
त्यज्यन्ते जीवितस्यार्थे निजदेशप्रियात्मजाः।
जीवितादपरं राजन् जीवलोकेऽस्ति न प्रियम् ॥ १८० ॥
इति जीवितलोभाय तेन नानानिदर्शनैः।
शनैः प्रतारितः पापे राजा युक्तममन्यत ॥ १८१ ॥
ततः सुसंभृतारम्भे प्रवृत्ते यज्ञकर्मणि।
कृतायां पुष्करिण्यां च पूर्णायां पशुशोणितैः ॥ १८२ ॥
D 369 राज्ञा कथितवृत्तान्ता निजपत्नी स्वयं रहः।
पुत्रप्रवासशोकार्ता पापत्रस्ता व्यचिन्तयत् ॥ १८३ ॥
अहो मूर्खतरो राजा मोहान्धेन पुरोधसा।
स्नुषावधविधानेऽस्मिन् प्रेरितः पृथुपातकैः ॥ १८४ ॥
यत्नैरपरिहार्येऽपि निबद्धे निधनावधौ।
परप्राणापहारेण मूढा वाञ्छन्ति जीवितम् ॥ १८५ ॥
यदि जीवितलुब्धेन मुग्धा मृगवधूरिव।
स्नुषापि हन्यते राज्ञा तत्किं वक्ष्याम्यहं सुतम् ॥ १८६ ॥

मातस्त्वयेयं वात्सल्यात्पाल्या मम मनोहरा।
इत्युक्त्वा सुधनः सूनुर्गतो निक्षिप्य मे वधूम्॥ १८७॥
तस्माच्चूडामणिं मत्तः प्राप्य व्योम्ना प्रयातु सा।
भविष्यति तया पत्युर्जीवन्त्या संगमः पुनः॥ १८८॥
इति संचिन्त्य सा गत्वा साश्रुनेत्रा स्नुपान्तिकम्।
राजवृत्तं निवेद्यास्यै सोत्कम्पा पुनरब्रवीत्॥ १८९॥
वत्से चूडामणिं बद्ध्वा गच्छ तूर्णं विहायसा।
नृपः पापप्रवृत्तोऽयं न सदाचारमीक्षते॥ १९०॥
यज्ञभूमिं त्वया गत्वा गन्तव्यं व्योमवर्त्मना। D 371
अन्यथा त्वामसौ वेत्ति गूढन्यस्तां मया क्वचित्॥ १९१॥
इति भर्तृप्रवासार्ता वचः श्रुत्वा मनोहरा।
तत्संगमाय रक्षन्ती यत्नात्प्रियतरं वपुः॥ १९२॥
श्वश्र्वा दत्तं समादाय बद्ध्वा मूर्ध्नि शिखामणिम्।
नृपाहृता क्रतुक्षेत्रं गत्वा व्योम व्यगाहत॥ १९३॥
राजन्नैतत्तव समुचितं यत्प्रियस्यापि सूनो-
र्वध्या पत्नी निजपदमियं स्वस्ति तुभ्यं गताहम्।
रक्ष्यश्चासौ प्रतिहतधृतिर्मद्वियोगे कुमारः
तत्रेत्युक्त्वा तनुतरतडिद्विभ्रमैः सा जगाम॥ १९४॥
तस्यां गतायां नृपतिर्यज्ञविघ्नेन शङ्कितः।
पुरोहितस्तमवदद्देव मा संशयं कृथाः॥ १९५॥
मन्त्रैर्मया समाकृष्टः क्रूराख्यो ब्रह्मराक्षसः।
निर्विघ्नस्ते क्रतुः सिद्धः सा हता तेन किन्नरी॥ १९६॥
इति मिथ्यावचस्तस्य राजा सत्यममन्यत।
नर्त्यन्ते कुटिलैर्मुग्धा यन्त्रपुत्रकलीलया॥ १९७॥
पितुर्भवनमभ्येत्य कीर्णहर्षा मनोहरा। D 373
न्यवेदयत्स्ववृत्तान्तं वहन्ती वल्लभं हृदि॥ १९८॥
सा पितुः शासनान्मर्त्यसङ्गसौरभशान्तये।
हेमकुम्भशतैः स्नानं पञ्चभिः प्रत्यहं व्यधात्॥ १९९॥
मर्त्यामोदः प्रतनुतां क्षालितायाः शनैर्ययौ।
सुधनस्नेहसंयोगी न तु रागो मृगीदृशः॥ २००॥
दिव्योद्यानोपभोगेषु न सा निर्वृतिमाययौ।
अन्यत्र बद्धरागाणां रतिर्नान्यत्र देहिनाम्॥ २०१॥

सा कान्तविरहक्लान्ता कदाचिद् व्योमगामिनी ।
तां नागभवनोपान्तवनान्तवसुधां ययौ ॥ २०२ ॥

तत्राश्रमस्थलीसक्तं महर्षिं वल्कलायनम् ।
अवदत्सा समभ्येत्य प्रणामविनमन्मुखी ॥ २०३ ॥

लुब्धकस्योपदिशता भवता मम बन्धनम् ।
त्वमेव ब्रूहि भगवन् यदि युक्तमिदं कृतम् ॥ २०४ ॥

इति तस्या वचः श्रुत्वा किंचिल्लज्जानताननः ।
तामुवाच मुनिर्मुग्धे तवैषा भवितव्यता ॥ २०५ ॥

D 375 अमोघपाशस्तस्यास्तीत्यज्ञात्वा कथितं मया ।
उपलभ्य कथां धूर्तस्त्वां बबन्ध स लुब्धकः ॥ २०६ ॥

दुष्टात्मनां न जानीमः कौटिल्यं क्रूरचेतसाम् ।
सत्यप्रवादमुखराः सद्भावसरला वयम् ॥ २०७ ॥

इत्युक्त्वा मुनिना तन्वी प्रणयात्तमभाषत ।
भगवन् क्षम्यतामेतद्बालावचनचापलम् ॥ २०८ ॥

इदं तु भवतामग्रे यन्मया किंचिदुच्यते ।
ललनासुभगः सोऽयं सदाचारव्यतिक्रमः ॥ २०९ ॥

[१]कथातिथित्वमायान्ति चापल्ये गुरवोऽपि यत् ।
सा वियोगाग्नितापस्य ज्वालायोगासहिष्णुता ॥ २१० ॥

दुःखोद्धरणसंनद्धाः संतप्तानां दयालवः ।
कार्यान्तरज्ञाः प्रायेण भवन्त्यनुचितेष्वपि ॥ २११ ॥

पाशबन्धाद्वियुक्ताहं लुब्धकेन प्रलापिनी ।
निबद्धा राजपुत्रेण स्नेहपाशेन हारिणा ॥ २१२ ॥

सुभगः सुधनाख्योऽसौ मद्वियोगानलाकुलः ।
अमुना यदि मार्गेण समेष्यति तवान्तिकम् ॥ २१३ ॥

D 377 तदिदं भवता वाच्यं कारुण्याद्वचसा मम ।
स्थिता त्वद्विरहायासनिःसुखाहं गृहे पितुः ॥ २१४ ॥

उत्कण्ठामनुकम्पां वा सहजां वा कृतज्ञताम् ।
दाक्षिण्यं वा पुरस्कृत्य तूर्णमागम्यतामिति ॥ २१५ ॥

दुर्गमः किन्नरपुरे मार्गः क्लेशशताश्रयः ।
अभूमिरेव मर्त्यानामल्पवीर्यबलौजसाम् ॥ २१६ ॥

---

१ Tibetan translation of this verse is not available.

दीप्ता तपोवनान्तेऽस्मिन् सुधा नाम महौषधिः ।
दृश्यते हविषा पक्त्वा पातव्या सा स्वयं त्वया ॥ २१७ ॥
तत्प्रभावात्समुत्तीर्य क्लेशं सत्त्वसहायवान् ।
कैलासहासशुभ्रेण पथा मत्पुरमेष्यसि ॥ २१८ ॥
इदं च तस्मै दातव्यं मदभिज्ञाङ्गुलीयकम् ।
इत्युक्त्वा विषमं मार्गं कथयित्वा क्रमेण सा ॥ २१९ ॥
विघ्नप्रतिक्रियोपायान् संदिश्याश्चर्ययुक्तिभिः ।
आशाबन्धधृतप्राणा ययौ दत्त्वाङ्गुलीयकम् ॥ २२० ॥
तया कथितमाकर्ण्य दूराध्वतरणाद्भुतम् ।
अङ्गुलीयकमादाय तदेवाचिन्तयन्मुनिः ॥ २२१ ॥
अत्रान्तरे राजसूनुर्जित्वा मेघं महीपतिम् । D 379
आययौ कोशमादाय दयितादर्शनोत्सुकः ॥ २२२ ॥
स विवेश स्वनगरीं सामन्तच्छत्रमण्डलैः ।
फुल्लफेनस्मितस्याब्धेः कुर्वाणः संनिभं नभः ॥ २२३ ॥
स्नुषावैशसवृत्तान्तकथनक्लेशकम्पितम् ।
अथान्तःपुरमभ्येत्य जनकं प्रणनाम सः ॥ २२४ ॥
अधोमुखाखिलजनं शोकशल्यहतोत्सवम् ।
पितुरन्तःपुरं दृष्ट्वा स विप्रियमशङ्कत ॥ २२५ ॥
अपि जीवति सा तन्वी विरहार्ता मनोहरा ।
इति ब्रुवाणं न यदा तमूचे कश्चिदप्रियम् ॥ २२६ ॥
तदा जगाद जननी पुत्र जीवति ते प्रिया ।
गता चूडामणिं प्राप्य किं तु जीवितसंशये ॥ २२७ ॥
इति श्रुत्वैव सहसा स पपात महीतले ।
कीर्णहारलतां कुर्वन् साश्रुधारामिव क्षितिम् ॥ २२८ ॥
तुषारशीकरस्मेरहरिचन्दनवारिभिः ।
स लब्धसंज्ञः शनकैर्विललापाश्रुगद्गदः ॥ २२९ ॥
अनाकाशशशाङ्कश्रीरमन्थामृतवाहिनी । D 381
अयत्नरत्नवलभी क्व सा कुसुमधन्वनः ॥ २३० ॥

गुरुशासनयन्त्रितेन दूरं
व्रजता बाष्पनिरुद्धलोचनायाः ।
विहिता न धृतिर्मया मृगाक्ष्या-
स्तदयं मे पतितः स्मराभिशापः ॥ २३१ ॥

देहि प्रतिवचः सुभ्रु क्व गतासि मनोहरे।
मया प्रमादमूढेन हरिणाक्षी न रक्षिता ॥ २३२ ॥

तत्समागमसौभाग्यश्लाघ्यस्य सुरसंसदि।
ममैव मर्त्यलोकस्य त्वद्वियुक्तस्य का द्युतिः ॥ २३३ ॥

इति ब्रुवाणः शनकैः कान्तासंभोगसाक्षिषु।
उद्यानेषु प्रियतमां विचेतुं स्वयमाययौ ॥ २३४ ॥

वञ्चयित्वा परिजनं स रजन्यामलक्षितः।
गत्वा वनान्तं बभ्राम समेषु विषमेषु च ॥ २३५ ॥

तीव्ररागपिशाचेन महता स विमोहितः।
उन्मत्त इव पप्रच्छ चेतनाचेतनानपि ॥ २३६ ॥

D 383 ब्रूहि सखे शुकशावक सख्युः
प्राणसखीं निखिलेन्दुमुखीं ताम्।
तद्दशनच्छदरागविभागे
बिम्बफलेऽस्तु सदा तव भोगः ॥ २३७ ॥

हंहो हंस सितांस शंस नलिनीलीलावतंसद्युते
दृष्टा सौरभसक्तपद्मवदना किं कान्तिकल्लोलिनी।
यस्याः पीनपयोधराग्रविलुठन्मुक्ताकलापस्य सा
हंसस्येव विभाति रोमलतिका शैवालवल्लीच्युता ॥ २३८ ॥

तस्येति तीव्रव्यसनानुबन्धात्
प्रलापिनः प्रस्खलतः समेऽपि।
दिशन् प्रकाशं दययैव मार्गे
शनैर्जगाहे गगनं सितांशुः ॥ २३९ ॥

श्यामापतेर्मन्मथबान्धवस्य
कान्तं स दृष्ट्वाम्बरचुम्बि बिम्बम्।
संदर्शितं सस्मितमिन्दुमुख्या
मेने मुखं व्योमविमानशङ्कात् ॥ २४० ॥

D 385 मूकं कलङ्काङ्कमवाप्तदोष-
मविभ्रमं हासविलासहीनम्।
चिरेण निश्चित्य शशाङ्कमेव
पप्रच्छ गच्छन्नरनाथसूनुः ॥ २४० अ ॥

अपि त्वया कान्तिसखी सखे खे
तुल्येक्षणा लक्ष्ममृगस्य दृष्टा ।
तवोदिता यद्वदनोपमान-
संबन्धलब्धा जगति प्रसिद्धिः ॥ २४१ ॥
कथं न किंचित्कथयत्ययं मे
गतस्य कान्ताकथनार्थिभावम् ।
परार्थसंपादनशीतलेन
कलावता कस्य कृतोऽनुरोधः ॥ २४२ ॥
अपि त्वया स्निग्धतडित्प्रकाशा
घनस्तनी क्वापि मयूर दृष्टा ।
त्वद्बर्हभारस्य सुहृत्स यस्या
विचित्रमाल्यः कबरीकलापः ॥ २४३ ॥
भुजंग काचिद्भवता भुजंगी
दृष्टा क्वचित्सा वररत्नचूडा ।
विषच्छटाः पश्य यया विसृष्टा
मां दुःसहेऽस्मिन् विरहे दहन्ति ॥ २४४ ॥
सारङ्ग सारङ्गविलासिनी किं D 387
दृष्टा त्वया मन्मथपार्थिवस्य ।
यस्याः कटाक्षोत्पलसंविभागै-
र्विभान्ति मन्ये गहने हरिण्यः ॥ २४५ ॥
अपि त्वया विभ्रमजन्मभूमि-
र्वनस्पते पल्लवपेशलोष्ठी ।
लीलाविलोला ललना वनान्ते
लतेव दृष्टा स्तबकावनम्रा ॥ २४६ ॥
अनेन नूनं वनकुञ्जरेण
सा राजरम्भा परिरम्भलौल्यात् ।
आकृष्य नीता घनसंनिभेन
संछादिता वा शशिनः कलेव ॥ २४७ ॥
इति काननकुञ्जेषु तस्योन्मादप्रलापिनः ।
शोकादिव विवर्णेन्दुवदना रजनी ययौ ॥ २४८ ॥
स नागभवनासन्नतीरोपान्तं तपोवनम् ।
शनैः प्रविश्य पप्रच्छ महर्षिं वल्कलायनम् ॥ २४९ ॥

D 389 इह विरहविचिन्ताशोकनिश्वासमूर्च्छे-
न्मदनदहनधूमश्यामसक्तैकवेणी ।
अपि शमितशशाङ्कोद्दामसौन्दर्यदर्पा
मुनिवर हरिणाक्षी किन्नरी कापि दृष्टा ॥ २५० ॥
इति कान्तावियुक्तस्य प्राप्तस्योन्मादिनीं दशाम् ।
मुनिः श्रुत्वा वचस्तस्य परिज्ञाय तमब्रवीत् ॥ २५१ ॥
समाश्वसिहि विश्राम्य संतापस्त्यज्यतामयम् ।
दृष्टा सा तव कल्याणी मया मानसचन्द्रिका ॥ २५२ ॥
यूथभ्रष्टेव करिणी निरपेक्षापि जीविते ।
पाशाकृष्टेव हरिणी धार्यते सा त्वदाशया ॥ २५३ ॥
पाणौ शेते वदनकमलं प्रस्तरे पल्लवानां
तापक्लान्ता तरलवचनस्रंसिनी गात्रलेखा ।
आशाबन्धे धृतिरिव मतिस्त्वद्वियोगाकुलाया-
स्तस्या नैव क्वचिदपि मनः किं तु विश्रान्तिमेति ॥ २५४ ॥
द्रुमस्य किन्नरपतेः स्थिताहं भवने पितुः ।
आगन्तव्यं त्वया तूर्णमिति त्वां संदिदेश सा ॥ २५५ ॥
D 391 वीर्यसत्त्वबलोपायधैर्योत्साहवतामपि ।
अगम्ये किन्नरपुरे क्रमाद्वर्त्म शशंस च ॥ २५६ ॥
इदं च त्वत्कृते दत्तं तया रत्नाङ्गुलीयकम् ।
यस्य स्निग्धप्रभाभ्यङ्गैर्दिशो यान्ति पिशङ्गताम् ॥ २५७ ॥
इत्यानन्दसुधासिक्तमुक्त्वा धैर्यावलम्बनम् ।
अङ्गुलीयं ददौ तस्मै मार्गं चाकथयन्मुनिः ॥ २५८ ॥
पथा तदुपदिष्टेन सोपायेन नृपात्मजः ।
धीरः प्रचक्रमे गन्तुं धनदाध्युषितां दिशम् ॥ २५९ ॥
स सिद्धां घृतपाकेन सुधां पीत्वा महौषधिम् ।
लब्धर्द्धिबलमाहात्म्यः सायुधः प्रययौ शनैः ॥ २६० ॥
ऋद्ध्या संनिहितं तस्य सर्वोपकरणं पथि ।
अभूत्सत्त्वसहायानां स्वाधीनाः सर्वसंपदः ॥ २६१ ॥
अथ विद्याधरवधूविलासहसितद्युतिम् ।
हिमवन्तमतिक्रम्य कुकूलाद्रिमवाप सः ॥ २६२ ॥
फलोपहारैः स्वीकृत्य तत्र वानरयूथपम् ।
वायुवेगाख्यमारुह्य स तं शैलमलङ्घयत् ॥ २६३ ॥

अथाजपथनामानमतिचक्राम भूधरम्। D 393
निहत्याजगरं घोरं विघ्नसंघमिवेषुणा ॥ २६४ ॥
वीणास्वनैर्वशीकृत्य राक्षसीं कामरूपिणीम्।
कामरूपाद्रिमुल्लङ्घ्य प्रययौ किन्नरीप्रियः ॥ २६५ ॥
बलवान् मुद्गराघातनिखातैः शस्त्रशङ्कुभिः।
एकधारं ततः शैलमारुरोहातिसाहसः ॥ २६६ ॥
अथोग्रतरमारुह्य वज्रकाख्यं स पर्वतम्।
गृध्ररूपां समालोक्य राक्षसीं पिशितैषिणीम् ॥ २६७ ॥
परिवृत्तेन संछन्नः समांसमृगचर्मणा।
स पादमूले तस्याद्रेस्तस्थौ निश्चलविग्रहः ॥ २६८ ॥
मांसलुब्धा तमुत्क्षिप्य गृध्ररूपा निशाचरी।
निदधे शिखरस्याग्रे भोक्तुं भीषणविग्रहा ॥ २६९ ॥
मृगचर्म समुत्सृज्य तां निहत्य स वीर्यवान्।
नीरन्ध्रखदिराकीर्णं प्राप खादिरभूधरम् ॥ २७० ॥
प्रविश्य तद्गुहां लेभे शिलां व्यस्य महौषधिम्।
शीतातपतमःसर्पराक्षसादिभयापहाम् ॥ २७१ ॥
स यन्त्रपर्वतौ प्राप्य संघट्टैः प्राणहारिणम्। D 395
यन्त्रकीलं शराग्रेण छित्त्वा चक्रे विनिश्चलौ ॥ २७२ ॥
यन्त्रकीलसमुच्छेदैर्यन्त्रद्वारं विदार्य सः।
छेदनं यन्त्रचक्रस्य यन्त्रयुक्तौ तथायसौ ॥ २७३ ॥
तीव्रप्रहारौ पुरुषौ यन्त्रमेषौ च दुःसहौ।
यन्त्रोग्रदन्तनिष्पेषौ तथा मकरराक्षसौ ॥ २७४ ॥
घोरान्धकारगम्भीरं गुहाकूपं विलङ्घ्य च।
तुङ्गां सरितमुत्तीर्य हत्वा तत्कूलराक्षसान् ॥ २७५ ॥
आशीविषावृतजलां पतङ्गाख्यां च निम्नगाम्।
रोदिनीं च नदीं तीरे यस्याः किन्नरचेटिकाः ॥ २७६ ॥
कुर्वन्ति रोदनरवैर्विघ्नं तद्गतचेतसाम्।
तद्विधां हासिनीं नाम हासापहृतचेतसाम् ॥ २७७ ॥
दिशन्ति पुलिने यस्या व्यसनं किन्नराङ्गनाः।
लङ्घयित्वापगाश्चान्या वेत्रां प्राप्य नदीं ततः ॥ २७८ ॥
कूलवेत्रलतालम्बी तस्यामथ तितीर्षया।
पवनप्रेरितां पारवेत्रवल्लीमवाप सः ॥ २७९ ॥

D 397 तया प्राप परं पारमाशयेवातिदीर्घया ।
दर्दर्श किन्नरपुरं स्फारस्फटिकमन्दिरम् ॥ २८० ॥
प्रविश्य स शनैः प्राप्य कान्तां कनकपद्मिनीम् ।
तत्तीरतरुमारुह्य तस्थौ रत्नलतावृतः ॥ २८१ ॥
स ददर्शाम्बुजरजःपुञ्जैः सुरभिपिञ्जरम् ।
हेमकुम्भैर्जलं तत्र नयन्तीः किन्नराङ्गनाः ॥ २८२ ॥
कुम्भोत्क्षेपे श्रमार्तायास्तत्रैकस्याः समेत्य सः ।
हस्तालम्बेन साहाय्यं कृत्वा पप्रच्छ तां शनैः ॥ २८३ ॥
मातः कस्य कृते तोयमिदं यत्नेन नीयते ।
यद्भक्त्या गण्यते नायं भवतीभिः परिश्रमः ॥ २८४ ॥
इति तेन प्रियगिरा सा पृष्टा तमभाषत ।
माधुर्यधुर्यसौन्दर्ये पक्षपातवती क्षणात् ॥ २८५ ॥
मर्त्यामोदापनोदाय सदा सुरभिवारिभिः ।
पितुः किन्नरराजस्य गिरा स्नाति मनोहरा ॥ २८६ ॥
तयेति कथितं श्रुत्वा सुधासिक्त इव क्षणात् ।
स हेमकुम्भे चिक्षेप तदभिज्ञाङ्गुलीयकम् ॥ २८७ ॥
D 399 स्नान्त्यास्ततस्तदभिहारि मनोहरायाः
कुम्भात्पपात कुचकुम्भयुगेऽङ्गुलीयम् ।
यस्यांशुमत्प्रतिमरत्नमयूखलेखाः
क्षिप्रं नखक्षतविलासतुलामवापुः ॥ २८८ ॥
मूर्तं ततः स्वमनुरागमिवाकलय्य
रत्नाङ्गुलीयकमनङ्गकथान्तरङ्गम् ।
सा कान्तमागतमवेत्य कुतस्त्वयेदं
संप्राप्तमित्यवददुच्छ्वसितेव दासीम् ॥ २८९ ॥
ततस्तामवदद्दासी देवि पुष्करिणीतटे ।
स्थितः कोऽपि युवा कान्तः प्रत्यक्ष इव मन्मथः ॥ २९० ॥
निक्षिप्तं हेमकुम्भेऽस्मिन्निदं तेनाङ्गुलीयकम् ।
भजते यत्प्रभागर्भं पयः कुङ्कुमकान्तताम् ॥ २९१ ॥
इति तद्वचनं तन्वी प्रियं श्रुत्वा मनोहरा ।
निःश्वस्य दयितं प्राप्तमानिनाय तयैव तम् ॥ २९२ ॥
तया गुप्ततरे न्यस्तं कान्तमुद्यानमन्दिरे ।
कुमुद्वतीव शशिनं गत्वापश्यन्मनोहरा ॥ २९३ ॥

परस्परालोकनविभ्रमेण D 401
वियोगसंतापनिवेदनेन ।
तयोः प्रहर्षानुभवेन लेभे
शोभामशेषाङ्गवतीमनङ्गः ॥ २९४ ॥

यद्यत्किंचिद्विरहसमये चिन्तयाभ्यस्तमन्त-
र्यद्यत्प्रौढप्रमदसुहृदा मन्मथेनोपदिष्टम् ।
यद्यत्प्रेम्णः सदृशमुचितं यद्यदौत्सुक्यराशे-
स्तत्तत्सर्वं प्रणयसुभगं दम्पती चक्रतुस्तौ ॥ २९५ ॥

ततः प्रच्छन्नवृत्तान्तं लज्जमाना मनोहरा ।
निवेद्यादर्शयत्पित्रोः पतिं भूमिमनोभवम् ॥ २९६ ॥

ततः किन्नरराजस्तां कोपप्रस्फुरिताधरः ।
उवाच दर्शनपथं परिहृत्यात्मजापतेः ॥ २९७ ॥

अहो प्रमादपतिता दैवादनुचिते जने ।
न विमुञ्चसि दुर्वृत्ते क्षाल्यमानापि रक्तताम् ॥ २९८ ॥

यौवनोत्पत्तिलावण्यं स्पृहणीयं दिवौकसाम् ।
बत प्रयातमेतत्ते मर्त्यस्नेहेन शोच्यताम् ॥ २९९ ॥

उदग्रगोत्रप्रभवा घनयौवननिर्भरा । D 403
निम्नगे क्षोभविभ्रष्टा यातासि सुतरामधः ॥ ३०० ॥

विद्वदुद्वेगजननी कुलवैलक्ष्यकारिणी ।
मलिना खलविद्येव संमतासि न कस्यचित् ॥ ३०१ ॥

रूपमात्रेण दृष्टा त्वं यदि मर्त्यवशं गता ।
तत्किं न रमसे हेमनिर्माणपुरुषत्विषा ॥ ३०२ ॥

प्रभावगुणहीनस्य पुंसश्चारुतराकृतेः ।
आलेख्यपुरुषस्येव सौन्दर्यं भित्तिरञ्जनम् ॥ ३०३ ॥

वध्यो मे त्वत्पतिः पापे हीनसंबन्धलज्जया ।
मुखं द्रष्टुं न शक्नोमि त्वद्याच्ञाप्तदिवौकसाम् ॥ ३०४ ॥

सत्यमुत्साहयुक्तस्य कुलस्योन्नतिशालिनः ।
जरेव किल कायस्य कन्या संकोचकारिणी ॥ ३०५ ॥

इति सा भर्त्सिता पित्रा तमुवाच नतानना ।
असूत्रहारं कुर्वाणा कुचयोर्बाष्पबिन्दुभिः ॥ ३०६ ॥

कोपादनुचितं तात नैतन्मां वक्तुमर्हसि ।
न श्रूयन्ते प्रभावेण किं नराः किन्नराधिकाः ॥ ३०७ ॥

D. 405 गरुडस्यापि दुर्लङ्घ्यामिमामुल्लङ्घ्य यः क्षितिम्।
प्रभावभूमिरायाति मनुष्यः स कथं भवेत्॥ ३०८॥

गुणसंवादिनी मूर्तिर्भवत्येव शरीरिणाम्।
करोत्यानन्दसंवादं द्युतिरेव हिमत्विषः॥ ३०९॥

जात्या किं क्रियते तात स्वभावानुगुणा गुणाः।
पूर्णेन्दुरमृतस्यन्दी कालकूटस्य सोदरः॥ ३१०॥

भवन्त्यन्तर्गुणाः केचिच्छन्नदोषास्तथापरे।
अपरीक्ष्य न कर्तव्या मणीनां मूल्यलङ्घना॥ ३११॥

श्रुत्वैतत्किन्नरपतिस्तत्तथेति विचिन्त्य च।
जामातरं समाहूय गुणजिज्ञासयाब्रवीत्॥ ३१२॥

त्वया कान्त्या जितास्तावदेते किन्नरदारकाः।
संदर्शितप्रभावस्तु दिव्यसंबन्धमर्हसि॥ ३१३॥

अत्यायतं शरवणं कृत्वोद्धृतशरं क्षणात्।
व्युप्तमन्यूनमुच्चित्य पुनर्देहि तिलाढकम्॥ ३१४॥

संदर्शय धनुर्वेदे दृढलक्ष्यादिकौशलम्।
ततः कीर्तिपताकेयं तवायत्ता मनोहरा॥ ३१५॥

D. 407 इत्यशक्येऽपि कौटिल्यात्प्रेरितस्तेन कर्मणि।
सर्वं कान्तानुरागेण कुमारः कर्तुमुद्ययौ॥ ३१६॥

मिथ्याश्रमक्लेशफले प्रवृत्तं शरपाटने।
तं विज्ञाय सहस्राक्षः पक्षपातादचिन्तयत्॥ ३१७॥

किं भाद्रकल्पिको बोधिसत्त्वोऽयं पार्थिवात्मजः।
नियुक्तः किन्नरेन्द्रेण निष्फले क्लेशकर्मणि॥ ३१८॥

अस्यास्मिन् समयायासे कार्यं साहाय्यकं मया।
इति संचिन्त्य शक्रोऽस्य कर्मनिष्पत्तिमादधे॥ ३१९॥

शतक्रतुसमादिष्टैर्यक्षैः सूकररूपिभिः।
उत्पाटिते शरवणे समे व्युप्तं तिलाढकम्॥ ३२०॥

एकीकृतं समुच्चित्य शक्रसृष्टैः पिपीलकैः।
कुमारः किन्नरेन्द्राय विस्मिताय न्यवेदयत्॥ ३२१॥

स सप्त कनकस्तम्भान् सप्त तालान् बलोर्जितः।
सूकरीचक्रसंयुक्तान् विद्ध्वा निशितपत्रिणा॥ ३२२॥

शस्त्रास्त्रविक्रमकलाशिल्पशक्तिमदर्शयत् ।
ययास्य पेतुर्मुकुटे दिव्याः कुसुमवृष्टयः ॥ ३२३ ॥

विस्मितोऽपि प्रभावेण तस्य किन्नरभूपतिः । D 409
पुनस्तद्वञ्चनायैव तां तां युक्तिमचिन्तयत् ॥ ३२४ ॥

दधति विपुलाश्चर्ये मौनं हसन्ति सतां स्तुतौ
मलिनवदनाः कीर्त्युत्कर्षे व्रजन्ति विवादिताम् ।
अपि गुणशतैर्नाराध्यन्ते विरुद्धधियः परं
परपरिभवक्षोभारम्भस्थिराभिनिवेशिनः ॥ ३२५ ॥

स तमूचे प्रभावोऽयं दिव्यः प्रकटितस्त्वया ।
प्रज्ञाप्रकर्षमधुना संदर्शयितुमर्हसि ॥ ३२६ ॥

अभिन्नवर्णरूपाणां तुल्याभरणवाससाम् ।
किन्नरीणां स्थितां मध्ये गृहाण निजवल्लभाम् ॥ ३२७ ॥

इत्युक्तः स पुनस्तेन किन्नरीशतपञ्चकम् ।
तुल्यवर्णवयोवेषं ददर्श व्यग्रमग्रतः ॥ ३२८ ॥

तासां मध्ये परिज्ञाय स जग्राह मनोहराम् ।
वल्लरीवनसंछन्नां भृङ्गश्चूतलतामिव ॥ ३२९ ॥

देवोऽयमिति निश्चित्य ततस्तं किन्नरेश्वरः ।
तुष्टस्तस्मै ददौ दिव्यरत्नैः सह मनोहराम् ॥ ३३० ॥

श्लाघ्योपभोगविभवैः पूजितस्तेन सादरम् । D 411
जायासखस्तमामन्त्र्य कुमारः स्वपुरं ययौ ॥ ३३१ ॥

मनोहराग्रगं पुत्रं प्राप्तमालोक्य भूपतिः ।
राकेन्दुदर्शनोद्भूतः सुधाम्बुधिरिवाबभौ ॥ ३३२ ॥

पुत्रं ततश्चरितचन्द्रसितातपत्रे
राज्येऽभिषिच्य परितापहरं प्रजानाम् ।
संतोषशीतलविवेकसुखाभिरामां
छायामसेवत नृपः प्रशमद्रुमस्य ॥ ३३३ ॥

प्राप्ताभिषेकं सुधनं प्रभाते
तं सप्तरत्नानि पृथुप्रतापम् ।
नवप्रभावप्रभुभावभीत्या
सेवानिवासार्थमिवोपजग्मुः ॥ ३३४ ॥

स बोधिसत्त्वः सुधनोऽहमेव
यशोधरा सापि मनोहराभूत् ।
तद्विप्रयोगव्यसनानलार्तिः
कामानुबन्धादियती मयाप्ता ॥ ३३५ ॥

D 413 तस्मात्कामः कमलवदनानेत्रपर्यन्तवासी
वर्ज्यः सद्भिः शममृगवधूबन्धकेलीकिरातः ।
स्फूर्जत्पुष्पप्रसरजरजःपुञ्जहालाहलोग्रै-
र्लोकः शोकव्यसनविशिखैर्मोहनैर्येन विद्धः ॥ ३३६ ॥

इति भिक्षुगणः स्वयं जिनेन
स्वकथां तां विनिवेदितां निशम्य ।
सरसं पृथुमूलमेव मेने
शतशाखस्य मनोभवं भवस्य ॥ ३३७ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
सुधनकिन्नर्यवदानं नाम चतुःषष्टितमः पल्लवः ॥



## ६५ एकशृङ्गावदानम् ।

प्राग्जन्माभ्यासलीनादतिसरसलसद्वासनामूलशेषात् D 415
निःशङ्कस्यापि जन्तोः कमलकलनया जायते मानसेऽस्मिन् ।
रागः संभोगलीलापरिमलपटलाकृष्टसर्वेन्द्रियाणा-
मेकत्रैवातिमात्रं सरसमधुलिहां बन्धनं यः करोति ॥ १ ॥

न्यग्रोधाराममनिरतं पुरा शाक्यपुरे जिनम् ।
भगवन्तं समापन्नाः पप्रच्छुर्भिक्षवः पुनः ॥ २ ॥

प्रवृत्तशान्तिं परिवृत्तवेषं
निवृत्तसंसारविकारवृत्तम् ।
अन्तःपुरं त्वां नृपतेर्विशन्तं
यशोधरा वीक्ष्य विमुह्यतीव ॥ ३ ॥

त्वद्दर्शने तिष्ठति सर्वथैव
विभूषिता कम्पतरङ्गिताङ्गी ।
भोज्याधिवासे भवतः करोति
विलोभनं मोदकपात्रहस्ता ॥ ४ ॥

नाद्यापि शान्तिं समुपैति तस्या D 417
मनोविकारः स बहुप्रकारः ।
त्वदाननेन्दुद्युतिविप्रयुक्ता
सीदत्यलं सा हि कुमुद्वतीव ॥ ५ ॥

इति स्मयाद्भिक्षुगणेन पृष्टः
किंचित्स्मितेनाधरपल्लवस्य ।
प्रत्युप्तमुक्ताफलविद्रुमाभां
निवेश्य शोभां भगवान् बभाषे ॥ ६ ॥

यशोधराचैव विकारयुक्तां
बिभर्ति नैतामभिलाषलीलाम् ।
जन्मान्तरेऽपि स्मरविभ्रमैर्मे
सा मोदकैर्लोभनमेव चक्रे ॥ ७ ॥

काश्यः पुरा काशिपुरे नरेन्द्र-
श्चन्द्रावदातद्युतिकीर्तिरासीत् ।
अप्यङ्कुशः शत्रुमदद्विपाना-
मतीक्ष्णवृत्तः सरलस्वभावः ॥ ८ ॥

D 419 पुत्रार्थिनस्तस्य तपःप्रयत्नै-
रेकैव कन्या नलिनी बभूव ।
प्रायः प्रजापालनसावलेपाः
स्वल्पान्वया एव भवन्ति भूपाः ॥ ९ ॥

अन्तःपुरे तां परिवर्धमानां
चित्ते च चिन्तां नृपतिर्विचिन्त्य ।
आहूय विद्वत्प्रमुखानमात्यान्
प्रजागरप्रस्तरतिर्जगाद ॥ १० ॥

विस्तीर्णशाखं स्थिरबद्धमूल-
मभ्युन्नतं सर्वजनोपजीव्यम् ।
अवैमि तुल्यप्रसवावहीनं
घुणक्षतं वृक्षमिवाधिपत्यम् ॥ ११ ॥

एकैव कन्या नलिनी ममास्ति
वयः प्रदानोचितमाश्रयन्ती ।
तस्यां प्रयत्नेन वरार्पिताया-
मपत्यता तत्प्रणयोऽपि दूरे ॥ १२ ॥

D 421 पाणौ प्रदीप्तामिव दीपवर्तिं
धर्तुं न शक्नोति जनः स्वकन्याम् ।
न्यासार्थतुल्या हि परार्पणीया-
श्चिन्ताफला एव कुलस्य कन्याः ॥ १३ ॥

न भृत्यदेया न च पौरयोग्या
दूरोचिता एव नरेन्द्रकन्याः ।
अज्ञातनित्याचरितस्य दूरं
मृतस्य जातस्य च को विशेषः ॥ १४ ॥

तस्मात्प्रयत्नेन मया स कश्चि-
ज्जामातृभावे गुणवान्नियोज्यः ।
स्वदेशमुत्सृज्य ममैव देशे
बिभर्ति यः पुत्र इवाधिपत्यम् ॥ १५ ॥

श्रुतं मया जह्नुसुताप्रवाह-
पुण्यावदाते पुलिनोपकण्ठे ।
साहञ्जनीनाम्नि तपोवनान्ते
राजर्षिरास्ते किल काश्यपाख्यः ॥ १६ ॥

तस्य स्रुतं प्रस्रवणेन वीर्यं D 423
दैवोदयादश्मनि संनताग्रे ।
तोयस्पृहार्ता हरिणी निपीय
सुवर्णवर्णं सुषुवे कुमारम् ॥ १७ ॥

वने मृगीस्तन्यविवर्धितोऽसौ
पित्रा गृहीतो विहितव्रतश्च ।
नाम्ना प्रसिद्धः शिशुरेकशृङ्गः
स लक्ष्यमाणाङ्गुलमात्रशृङ्गः ॥ १८ ॥

युवा चतुर्ध्यानपरायणश्च
स ब्रह्मचारी विमलस्वभावः ।
निःसङ्गवासाद्विषयानभिज्ञ-
स्तत्राकठोरार्करुचिश्चकास्ति ॥ १९ ॥

स चेन्नलिन्याः पतितामुपैति
तदेष वंशः प्रशमं न याति ।
तेजोनिधेरानयने तु तस्य
विचिन्त्यतां काप्यनपाययुक्तिः ॥ २० ॥

श्रुत्वेति वाक्यं नृपतेरमात्या D. 425
विचार्य सर्वे सुचिरात्तमूचुः ।
तदाश्रमोपान्तवने विहर्तुं
विसृज्यतां संप्रति राजपुत्री ॥ २१ ॥

तद्वाक्यलुब्धानुमतेन राज्ञा
समीहितार्थं विनिवेद्य सर्वम् ।
ययौ विसृष्टा नलिनी विहर्तुं
हर्तुं प्रगल्भेव मुनेः कुमारम् ॥ २२ ॥

कान्ता वनान्तं शनकैरवाप्य
लीलाभिरामा विजहार तन्वी ।
बालानिलेनाकलिता लतेव
संचारिणी चारुविलोचना सा ॥ २३ ॥

विलासपुष्पावचयेन तस्य
भृङ्गोत्तरङ्गं विचलत्कुरङ्गम् ।
वनं विलोक्य स्वतपोवनान्तात्
समाययौ कौतुकवान् कुमारः ॥ २४ ॥

D 427 स संनताङ्गीममनुष्यसङ्ग-
स्तरङ्गितां यौवनविभ्रमेण।
ददर्श तां विस्मयनिर्निमेषः
फुल्लोत्पलाक्षीं कमलायताक्षः॥ २५॥

विलोक्य कान्तां मृगलोचनान्तां
रामानभिज्ञोऽपि मुनिर्जहर्ष।
न वासनाभ्यासविलीनमन्त-
र्जहाति जन्तुर्विषयाभिलाषम्॥ २६॥

सुस्निग्धमुग्धां विनिवेश्य दृष्टिं
मृगीसुतस्तद्वदनारविन्दे।
विद्याधरं वा मुनिपुत्रकं वा
विज्ञाय तां प्रीतिरसाद्ववन्दे॥ २७॥

प्रतिप्रणामावनताननाया-
स्तस्याः प्रवालद्युतिनाधरेण।
आच्छाद्यमानोऽशुवनेन रागं
जग्राह हारोऽप्यमलस्वभावः॥ २८॥

D 429 तां खेदसीदत्तिलकालकान्ता-
मुत्कम्पिताङ्गीमवदत्कुमारः।
सख्येव काञ्च्या मधुरस्वरेण
स्मरोपचारेषु कृतोपदेशाम्॥ २९॥

भोः स्वागतं ते मुनिपुत्र कच्चित्
तपोवनान्ते कुशलं मृगाणाम्।
सदा तदालोकननिश्चलानां
स्थलीषु येषां विरलः प्रचारः॥ ३०॥

इदं विलोक्याद्य तवानवद्यं
दिव्यव्रतस्यामृतवर्षि रूपम्।
वपुर्जटावल्कलिनां मुनीनां
शुष्कद्रुमाणामिव तर्कयामि॥ ३१॥

अयं तव स्निग्धजटाकलापः
कृतोपचारः कुसुमैर्लताभिः।
नवाभ्रसंभारविजृम्भमाण-
मयूरबर्हप्रतिमां बिभर्ति॥ ३२॥

इदं तव श्रीफलयुग्मशोभि D 431
वक्षो विनिक्षिप्तसिताक्षसूत्रम् ।
आसूत्रयद्बालकुरङ्गनेत्र-
वैचित्र्यमैत्रीं मनसश्चकास्ति ॥ ३३ ॥

होमाग्निलग्नस्फुटविस्फुलिङ्गां
मौञ्जीं दधाना नवपल्लवाङ्काम् ।
कुतूहलं बाललतेव तन्वी
तनुस्तवेयं न तनोति कस्य ॥ ३४ ॥

ब्रूहि प्रसन्नं क्व तपोवनं ते
त्वत्पादविन्यासविकासिनीभिः ।
यत्र प्रभाभिः सततं विभाति
संचारिणी पङ्कजिनी स्थलेषु ॥ ३५ ॥

इति ब्रुवाणं ललनानभिज्ञं
मृगस्वभावं तमवेत्य बाला ।
उत्सृज्य लज्जामविशङ्कमाना
निर्यन्त्रलीलाभरणा बभूव ॥ ३६ ॥

ततस्तमानन्दरसार्द्रचित्तं D 433
शनैर्बभाषे मृदुभाषिणी सा ।
तपोवनस्यास्य समीपवर्ती
ममाश्रमः स्वादुफलप्रसूनः ॥ ३७ ॥

उक्त्वेति खण्डस्मितमोदकैः सा
तस्याथ कर्पूरपरागगर्भैः ।
चकार माधुर्यचमत्क्रियार्है-
र्विलोभनं सत्कविसूक्तितुल्यैः ॥ ३८ ॥

तैर्मोदकैः सा रसनानुकूलै-
श्चित्तोत्सवैः प्रेममयैर्विलासैः ।
कर्णामृतैश्च प्रणयोक्तिबन्धै-
स्तं वागुरेवार्यमृगं जहार ॥ ३९ ॥

तपोवनं दर्शय मे महार्ह-
मित्युल्लपन्तं भुजवल्लरीभ्याम् ।
गाढं परिष्वज्य निमीलिताक्ष-
मेहीति तं राजसुता जगाद ॥ ४० ॥

D 435 तं प्रस्थितं सा कतिचित्पदानि
गत्वा पुरस्तद्गमनाय सज्जम् ।
रथं समारुह्य विसार्य पाणि-
मारोहणायैव गिरा न्ययुङ्क्त ॥ ४१ ॥

रथे तुरङ्गान् स विलोक्य युक्तान्
मत्वा कुरङ्गान् विगलद्विशेषः ।
मृगीसुतोऽहं न मृगाग्रमेतं
स्पृशामि पद्भ्यामिति तामुवाच ॥ ४२ ॥

रथेन गत्वाथ मनोजवेन
मुनीन्द्रसूनुं मनसा वहन्ती ।
नरेन्द्रकन्या स्वपुरीमवाप्य
न्यवेदयत्तच्चरितं नृपाय ॥ ४३ ॥

राजापि तस्यागमने प्रयत्ना-
दचिन्तयन्मन्त्रिभिरभ्युपायम् ।
हठप्रयुक्त्या हरणाभियोगे
भीतः कृशानुप्रतिमान्महर्षेः ॥ ४४ ॥

D 437 ततः कुमाराहरणे पुनस्तां
विलासवल्लीं विससर्ज राजा ।
नौभिर्घटाबन्धकृताश्रमाभि-
र्मन्दाकिनीकूलतपोवनान्तम् ॥ ४५ ॥

अत्रान्तरे त्यक्तसमस्तकृत्यं
नृपात्मजाध्याननिबद्धमौनम् ।
नवाभिलाषव्रतमाकलय्य
पुत्रं मुनिर्विस्मयनिश्चलोऽभूत् ॥ ४६ ॥

पृष्टोऽथ पित्रा मुनिपुत्रकस्तं
प्रोवाच निःश्वासपरंपराभिः ।
समीपसक्ताश्रममञ्जरीणां
दिशन् मुहुः पल्लवलास्यलीलाम् ॥ ४७ ॥

तपोवने तात मयाद्य दृष्टः
प्रमृष्टचन्द्रप्रतिबिम्बवक्त्रः ।
महर्षिसूनुर्नयनप्रभाभि-
र्दर्पापहारी हरिणाङ्गनानाम् ॥ ४८ ॥

वक्षःकटीपाणिगलावसक्त- D 439
विचित्रसूत्राणि विभान्ति तस्य ।
इन्द्रायुधापल्वनिभानि सन्ति
ममापि किं तात न तद्विधानि ॥ ४९ ॥
अद्यापि मेऽन्तर्दधतीव तस्य
वाणी शतांशप्रतिमापि यस्याः ।
श्रुता मया चूतवने कदाचित्
न कोकिलानां न च षट्पदानाम् ॥ ५० ॥
मन्दाकिनीमज्जनलीनफेन-
समानभासा नववल्कलेन ।
तनीयसी तस्य तनुर्विभाति
नेदं प्रियं वल्कलकं ममाद्य ॥ ५१ ॥
निवेश्य वक्त्रं वदनारविन्दे
निपीड्य दोर्भ्यां सुचिरं वपुर्मे ।
चक्रे जपप्रस्फुरिताधरोऽसौ
हर्षामृतस्पर्शविशेषदीक्षाम् ॥ ५२ ॥
न मे क्षमा कान्तविलक्षणेन D 441
नैव क्षणं तेन विना वनेऽस्मिन् ।
करोति मे यद्व्रतशासनेन
दृशोः पदं मोहसखी न निद्रा ॥ ५३ ॥
दृष्टिस्तदालोकनमीहते मे
श्रुतिर्विना तद्वचनं न चास्ते ।
तच्चिन्तया ताम्यति धीर्नितान्तं
मन्त्रं न जानाति तनुव्यथायाः ॥ ५४ ॥
श्रुत्वेति कान्ताहृतमानसस्य
संतापचिन्तापिशुनं महर्षिः ।
पुत्रस्य वाक्यं तपसोऽन्तरायं
निपातभीतः सुचिरं प्रदध्यौ ॥ ५५ ॥
कष्टं तपस्वी मृगशावकोऽयं
तीव्रेण मुग्धः स्मरलुब्धकेन ।
वराङ्गनावागुरया कटाक्ष-
कूटावपाती सहसा निबद्धः ॥ ५६ ॥
क्षणं विचिन्त्येति मुनिर्मनीषी D 443
मनोविकारं तनयस्य हर्तुम् ।

तमब्रवीत्कामभुजंगमुक्तं
विषं वहन्तं विषयाभिलाषम् ॥ ५७ ॥
न पुत्र साधुः स महर्षिसूनुः
सा स्त्री मनोजन्मभुजंगभूमिः।
तत्र क्षतस्तीव्रतरानुराग-
विषव्यथामेव बिभर्ति मूढः ॥ ५८ ॥
जनाः प्रसक्ताञ्जनकालकूटै-
र्विद्धाः सुतीक्ष्णैस्तरुणीकटाक्षैः।
शोचन्ति योषिद्भुजपाशबद्धाः
संसारकारासदने सदोषाः ॥ ५९ ॥
घनस्य संमोहमलीमसस्य
भवस्य मध्ये कुटिलाः स्फुरन्त्यः।
कुर्वन्ति कान्तातडितः क्षणान्ताः
पुंसां वियोगे भृशमन्धकारम् ॥ ६० ॥
D 445 एताभिरुत्सेककुटुम्बिनीभि-
रुन्मादमूर्च्छाविषवल्लरीभिः।
स्त्रीभिर्महामोहपिशाचिकाभिः
संस्पृश्यमानः कुशली न लोकः ॥ ६१ ॥
स्वस्थास्त एते निवसन्ति सन्तः
संतोषकान्तेषु तपोवनेषु।
संतापनं स्त्रीनयनान्तशल्यं
येषां शितं चेतसि नावसन्नम् ॥ ६२ ॥

इति प्रयत्नाज्जनकेन तैस्तै-
र्विवेकवाक्यैः प्रतिबोध्यमानः।
नाबुध्यतासौ मदनान्वितेन
लावण्यपानेन विघूर्णमानः ॥ ६३ ॥
अथापरेद्युर्विहितस्वकृत्ये
मुनौ फलेध्माहरणे प्रयाते।
लीलावती लोभयितुं कुमारं
नरेन्द्रकन्या पुनराजगाम ॥ ६४ ॥
D 447 दासीगणेनानुगता लतानां
पुष्पस्मितानां श्रियमाश्रयन्ती।
साङ्गं नवानङ्गमिवैकशृङ्ग-
मासाद्य दृष्ट्वा विबभौ नताङ्गी ॥ ६५ ॥

दिव्योचितं कल्पलताग्रलम्बि-
फलाभिरामं रुचिराश्रमं मे ।
द्रष्टुं त्वमेहीत्यभिधाय सा तं
निनाय तीरं त्रिदशापगायाः ॥ ६६ ॥
स तत्र रत्नोज्ज्वलचित्रपत्र-
सुवर्णवल्लीफलपुष्परम्यम् ।
नौभिर्धृतं कृत्रिममाकलय्य
सुखाश्रमं हर्षमिवारुरोह ॥ ६७ ॥
संसारतुल्येन हृतः स तेन
सरित्प्रवाहे कपटाश्रमेण ।
अज्ञाततत्त्वोऽप्यनुरक्तवृत्ति-
र्वाराणसीं प्रीतिमिवाससाद ॥ ६८ ॥
अवाप्य काश्यस्य स राजधानीं D 449
महीमहेन्द्रस्य महार्हरत्नाम् ।
मेने मुनीन्द्रैः कथितं कथासु
स्वर्गाङ्गणं दृष्टिपथं प्रयातम् ॥ ६९ ॥
ततः प्रमोदाकुलितः क्षितीश-
स्तस्मै मृगाक्षीं विधिना विधिज्ञः ।
प्रदक्षिणावर्तविलोलहारां
ददौ सुतां पूर्णमनोरथश्रीः ॥ ७० ॥
नरेन्द्रकन्याकरसक्तपाणि-
र्विवाहहव्यावहितं हुताशम् ।
अमन्यतानन्यमतिः कुमार-
स्तत्राग्निहोत्रस्य परं प्रकारम् ॥ ७१ ॥
महोत्सवोत्साहरसाकुलेन
संपूज्यमानः प्रणयेन राज्ञा ।
स्थित्वा तपःसंयत एव तत्र
जायासखः स्वं प्रययौ वनान्तम् ॥ ७२ ॥
जायाद्वितीयं विजने भ्रमन्तं D 451
दृष्ट्वा मृगी तं जननी प्रहृष्टा ।
मुनिप्रसादाप्तमनुष्यवाचा
कुतस्तवेयं ललनेत्युवाच ॥ ७३ ॥

स तां प्रणम्य प्रणयाद्बभाषे
मातर्ममायं द्युतिमान् वयस्यः ।
प्राप्तः प्रयत्नात्स्पृहणीयरूपः
सख्येन दीप्तानलसाक्षिकेण ॥ ७४ ॥
इति ब्रुवाणं तमवेत्य मुग्धं
मृगी विवाहादिकथानभिज्ञम् ।
पतिव्रतानामथ तापसीनां
तपोवनं सा शनकैर्निनाय ॥ ७५ ॥
धर्मानुगा ते सहचारिणीयं
पत्नी त्वमस्याः पतिरित्यशेषम् ।
विवाहवृत्तं कथितं स ताभिः
श्रुत्वा प्रियामेव विवेद जायाम् ॥ ७६ ॥
D 453 पित्रा प्रहर्षादपि काश्यपेन
विवाहधर्मे विहितोपदेशः ।
प्रणम्य तं तद्वचसा जगाम
पुरीं सभार्यः श्वशुरस्य राज्ञः ॥ ७७ ॥
वृद्धेन तेन स्वपदेऽभिषिक्तः
सत्त्वोज्ज्वलं शान्तिपदं श्रितेन ।
शशास सामन्तकिरीटकोटि-
विश्रान्तपादः स महीमशेषाम् ॥ ७८ ॥
ऐश्वर्यमोहानभिभूतबुद्धि-
र्धर्मस्वभावात्स लसद्विवेकः ।
जरान्वितोऽभूद्बहुपुत्रपौत्रः
प्रव्रज्यया शान्तिपथाभिकामः ॥ ७९ ॥
योऽभूत्कुमारो मुनिरेकशृङ्गः
सोऽहं नलिन्येव यशोधरा सा ।
अद्यापि जन्मान्तरवासनास्था
विलोलनायैव ममाभियुक्ता ॥ ८० ॥
D 455 निजजन्मान्तरकथां जिनेनेत्युपवर्णिताम् ।
आकर्ण्य भिक्षवः सर्वे बभूवुस्ते सविस्मयाः ॥ ८१ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
एकशृङ्गावदानं नाम पञ्चषष्टितमः पल्लवः ॥

## ६६ कविकुमारावदानम् । D 457

नायाति कायपरिवृत्तिशतैर्विरामं
विच्छेदमेति न जवेन पलायितस्य ।
लङ्घ्या न नाम वपुषः सहचारिणीयं
छायेव कर्मसरणिः पुरुषस्य लोके ॥ १ ॥

देवदत्तशिलापातपादाङ्गुष्ठक्षतासृजः ।
कारणं भगवान् पृष्टो भिक्षुभिस्तानभाषत ॥ २ ॥
श्रूयतां येन दुर्वारवैरस्मरणजन्मना ।
मम कर्मविपाकेन पादाङ्गुष्ठः परिक्षतः ॥ ३ ॥
पञ्चालेषु महीपालः काम्पिल्ये नगरे पुरा ।
अभूत्सत्यरतो नाम संश्रयो धर्मकर्मयोः ॥ ४ ॥
बभूव लक्षणा नाम पत्नी तस्य सुलक्षणा ।
प्रजासंरक्षणार्हस्य यजनस्येव दक्षिणा ॥ ५ ॥
दैवात्तस्यामपुत्रायां पुत्रार्थी पृथिवीपतिः । D 459
सुधर्मां नाम वैदेहीमुपयेमे तयार्थितः ॥ ६ ॥
पत्यौ कृतविवाहेऽथ लक्षणासूत दारकम् ।
मिथ्यासपत्नीलाभेन पश्चात्तापमुवाह च ॥ ७ ॥
सोऽभूदलोलमन्त्राख्यः कुमारः पितुरीप्सितः ।
विद्याविनयसंपन्नः कलाशास्त्रार्थपारगः ॥ ८ ॥
सुधर्मायां सगर्भायामथ राजा व्यपद्यत ।
सर्वारम्भस्थिराशानां देहिनां नो स्थिरा तनुः ॥ ९ ॥
अमात्यैरभिषिक्तोऽथ तस्यान्ते लक्षणासुतः ।
नवाङ्कुश इवाभूद्यस्तीक्ष्णः सामन्तदन्तिनाम् ॥ १० ॥
गोविषाणाभिधस्तस्य महामात्यः प्रियोऽभवत् ।
गोशृङ्गकुटिला यस्य नीतिर्न ज्ञायते परैः ॥ ११ ॥
प्रत्यासन्ने सुधर्मायाः कालेन प्रसवावधौ ।
गर्भं नृपान्तकं प्राह निमित्तज्ञः पुरोहितः ॥ १२ ॥
अथ मन्त्रिगिरा राजा जन्मक्षणवधे शिशोः ।
तदन्तःपुररक्षार्हानादिदेशोद्यतायुधान् ॥ १३ ॥
तद्विज्ञाय सुधर्मापि संत्रस्ता शरणं ययौ । D 461
महामात्यं विधातारमिव स्वच्छन्दकारिणम् ॥ १४ ॥

प्रभुभार्येति सा तेन निर्दिष्टतनयाभिधा।
संजातं सुतमत्याक्षीत्कैवर्तानां निकेतने॥ १५॥
तत एव समानीतां तया कन्यां प्रदर्शिताम्।
ज्ञात्वा नैमित्तिकवचः सत्यं मेने न भूपतिः॥ १६॥
धीमान् कविकुमाराख्यः स कैवर्तगृहे शिशुः।
लेभे यतस्ततस्तास्ता विद्याशिल्पान्विताः कलाः॥ १७॥
स तत्र बालकैः सार्धं क्रीडानगरकृत्पथि।
राजकेलीपरिचयैर्विजहार महाभुजः॥ १८॥
यदृच्छयागतस्तत्र नैमित्तिकपुरोहितः।
तं दृष्ट्वा नृपमभ्येत्य बभाषे भक्तिसंमतः॥ १९॥
देव कैवर्तसदने मया दृष्टः कुमारकः।
य एव कथितः पूर्वं राज्यप्राणापहस्तव॥ २०॥
श्रुत्वेति नृपतिः कोपान्निर्भर्त्स्यापरमातरम्।
गोविषाणं समाहूय महामात्यमभाषत॥ २१॥
D 463 अहो बतावलेपेन भवता मम संशये।
राज्याब्धिकर्णधारेण नौरिव श्रीरुपेक्षिता॥ २२॥
त्वन्मतिन्यस्तचित्तस्य सुखं निद्राभवन्मम।
सैवाद्य प्राणसंदेहज्वरतन्द्रीपदं श्रिता॥ २३॥
गूढगर्भं परित्यज्य कैवर्तेषु मदन्तकम्।
प्रहृष्टापरमाता मे गणयत्येव वासरान्॥ २४॥
अद्यापि तद्वधोपाये त्वया यत्नो विधीयताम्।
नखच्छेद्ये कुठारोऽपि कालेनायाति कुण्ठताम्॥ २५॥
रक्षति स्वामिराष्ट्रार्थं दुर्गमित्रबलोदयम्।
अमात्यप्रकृतिस्तस्मात्प्रकृतिभ्यो गरीयसी॥ २६॥
व्यसनशमनध्यानासक्ताः सदा हितजापिनः
प्रणिधिनियतव्यक्ता भक्तिव्रताः किल मन्त्रिणः।
अभिमतफलप्राप्त्या सद्यः प्रदर्शितसिद्धयः
शुचिपरिचयोदाराः पुण्यैर्भवन्ति महीभुजाम्॥ २७॥
तूर्णं गुरुतरारम्भैर्दारकोऽसौ विदार्यताम्।
कालहीनप्रयत्नो हि पश्चात्तापाय केवलम्॥ २८॥
D 465 इति राज्ञा समादिष्टः पूर्वोपेक्षाविलक्षधीः।
गजवाजिरथानीकैरमात्यः सहितो ययौ॥ २९॥

अत्रान्तरे सुधर्मोपि गूढमाहूय पुत्रकम् ।
तन्मन्त्रितं निवेद्यास्मै गम्यतामित्युवाच तम् ॥ ३० ॥
दत्वा चूडामणिं मात्रा स विसृष्टस्त्वराकुलः ।
व्रजन् दूरादमात्येन दृष्टो रत्नविभूषितः ॥ ३१ ॥
राजपुत्रः स एवायं नूनं गूढं पलायते ।
इत्युक्त्वास्य वधायोग्रान् स सेनाग्र्यानचोदयत् ॥ ३२ ॥
जवेन धावतां तेषां मृगवेगः स दूरगः ।
चम्पकाख्यस्य नागस्य ममज्ज भवनाम्भसि ॥ ३३ ॥
दृष्टनष्टे ततस्तस्मिंस्तमन्वेष्टुं प्रयत्नवान् ।
पदकाख्यं महामात्यः पश्चाचारं विसृष्टवान् ॥ ३४ ॥
चूडामणिप्रभावेण संस्तम्भितजलं ततः ।
नागः कुमारमाश्वास्य स्थीयतामित्यभाषत ॥ ३५ ॥
विलोक्य राजपुत्रार्हपादमुद्रावतीं भुवम् ।
स्थितं नागस्य भवने पदकस्तमसूचयत् ॥ ३६ ॥
अथ नागेन्द्रभवनं परिवार्य समन्ततः । D. 467
अश्रावयन्महामात्यः पार्थिवाज्ञां फणीश्वरम् ॥ ३७ ॥
पांशुभिः पूरयाम्येष भवनं ते भुजंगम ।
जलं स्थलं स्थलं श्वभ्रं करोति कुपितः प्रभुः ॥ ३८ ॥
भुजंगीभोगविच्छेदं न चेदिच्छसि तत्क्षयम् ।
अहितं राजराजस्य राजपुत्रं परित्यज ॥ ३९ ॥
इति संतर्जितस्तेन नागस्तूर्णं क्षपाक्षणे ।
तत्याज राजतनयं भयभोग्या हि जन्तवः ॥ ४० ॥
प्रच्छन्नं राजपुत्रोऽथ रजकावसथे स्थितः ।
चरणन्यासमुद्राभिः पदकेनोपलक्षितः ॥ ४१ ॥
ततः प्राप्ते महामात्ये रजकेनापि तद्भयात् ।
वस्त्रभारान्तरगतः परित्यक्तस्तटान्तरे ॥ ४२ ॥
गूढं ततोऽपि गत्वासौ कुम्भकारनिवेशने ।
तस्थौ योद्धुं समर्थोऽपि कालाकाङ्क्षी नृपात्मजः ॥ ४३ ॥
तत्रापि गोविषाणेन पादमुद्रानुसारिणा ।
महता बलचक्रेण संनिरुद्धेषु वर्त्मसु ॥ ४४ ॥
वस्त्रैराच्छादितः पुष्पमालाङ्कः क्षितिपात्मजः । D. 469
त्यक्तः कुलालैः साक्रन्दैः शवव्याजेन निर्जने ॥ ४५ ॥

जवेन व्रजतस्तस्य विजने पदपङ्क्तिभिः ।
गतिं मत्वा महामात्यस्तूर्णं पश्चात्समाययौ ॥ ४६ ॥
असंत्यक्तः स सर्वत्र कर्मणेवानुसारिणा ।
अन्वेषणश्रमार्तेन दृष्टः क्रुद्धेन मन्त्रिणा ॥ ४७ ॥
वेगादगणितश्वभ्रः स पपात महावटे ।
लग्नचूडामणिः शुष्कलताविटपसंकटे ॥ ४८ ॥
तं दृष्ट्वा पतितं मन्त्री विषमे श्वभ्रकोटरे ।
चूडामणिं समादाय गत्वा राज्ञे न्यवेदयत् ॥ ४९ ॥
कुमारोऽप्यञ्जनाख्येन यक्षेण श्वभ्रवासिना ।
रक्षितः क्षितिमासाद्य पक्षिवन्न व्यपद्यत ॥ ५० ॥
सुधर्मा पतितं श्रुत्वा पुत्रं स्वं निधनैषिणी ।
सुतस्ते जीवतीत्युक्त्वा रक्षिता दिव्ययोषिता ॥ ५१ ॥
कुमारोऽपि खरव्याघ्रखुरक्षुण्णशिलातलम् ।
गजासृङ्मत्तशार्दूलदारुणं वनमाविशत् ॥ ५२ ॥
D 471 तत्र पिङ्गलकाख्येन लुब्धकेन निवेदितम् ।
मार्गमासाद्य पुरुषं कृत्तगात्रं व्यलोकयत् ॥ ५३ ॥
विलोक्य जातकरुणस्तं पप्रच्छ नृपात्मजः ।
केनेमां वैशसावस्थां नीतोऽसि विजने वने ॥ ५४ ॥
सोऽब्रवीन्नातिदूरेऽत्र चण्डालश्चण्डचेष्टितः ।
निवसत्यन्तकः पुंसां सुदासो नाम दुःसहः ॥ ५५ ॥
तस्य शङ्खमुखो नाम सारमेयोऽस्ति भीषणः ।
पान्थास्थिशकलाकीर्णा येनैता विहिता दिशः ॥ ५६ ॥
तद्गोचरच्युतस्येयमङ्गच्छेदसमुद्भवा ।
मुहूर्तशेषजीवस्य व्यथा मे मर्मशातिनी ॥ ५७ ॥
क्रुद्धशङ्खमुखोत्कृत्तकण्ठानां सार्थगामिनाम् ।
मध्याह्नतप्तश्चण्डालः सदा पिबति शोणितम् ॥ ५८ ॥
इति तस्य वचः श्रुत्वा राजपुत्रो निरायुधः ।
किं करोमीति कृपया प्रदध्यौ विद्धमानसः ॥ ५९ ॥
अथाजगाम चण्डालश्चण्डकोदण्डमण्डलः ।
दिक्षु क्षिपन्निव दृशा वाराहरुधिरच्छटाः ॥ ६० ॥
D 473 तत्पार्श्वे क्रकचक्रूरदशनः श्वाप्यदृश्यत ।
प्रत्यग्रशोणितासक्तनखकोटिक्षतावनिः ॥ ६१ ॥

अङ्गभङ्गः कुरङ्गाणां चमराणां गलग्रहः ।
शृगालानां कुलव्याधिः सूकराणां क्षयज्वरः ॥ ६२ ॥
मातङ्गपक्षपातेन विधिना वनवर्त्मनि ।
क्रौर्यदर्पः स सिंहानामायास इव निर्मितः ॥ ६३ ॥
तस्याध्वन्यवधूनव्यवैधव्यविधिवेधसः ।
हूंकारघर्घरारावैर्दुद्रुवुः खङ्गिधेनवः ॥ ६४ ॥
तमभिद्रुतमत्युग्रचण्डालक्षोभसंज्ञया ।
दृष्ट्वारुरोह भूपालसूनुरामलकद्रुमम् ॥ ६५ ॥
तं वीक्ष्य पादपारूढमाकर्णाकृष्टसायकः ।
क्रुद्धः शङ्खमुखं चक्रे चण्डालस्तद्वधोन्मुखम् ॥ ६६ ॥
शरश्वदंष्ट्रतीक्ष्णाभिर्वाग्भिरुद्धतवादिना ।
विद्धः क्रूरदशा तेन राजसुनुरचिन्तयत् ॥ ६७ ॥
अहो निरायुधस्यायं वेधसा मम निर्मितः ।
राजराजरणोत्साहयोग्यस्य वपुषः क्षयः ॥ ६८ ॥
न स्नेहेन न दानेन न मानेन गुणेन वा । D 475
अयं निष्कारणरिपुर्निजतामेति दुर्जनः ॥ ६९ ॥
नरकं नियतावासमस्य सज्जीकृतं पुरः ।
नरकङ्कालमालिन्यो वदन्ति वनभूमयः ॥ ७० ॥
क्व जन्म रामचन्द्रस्य वंशे क्षत्रशिरोमणेः ।
शुनश्चण्डालपुत्राद्वा निःशस्त्रस्य वधः क्व मे ॥ ७१ ॥
सर्वथा निश्चलायैव जन्मपर्यन्तशालिने ।
पुरुषार्थविरुद्धाय नमः प्राक्तनकर्मणे ॥ ७२ ॥

न च्छिद्राली न च गुणततिर्गण्यते जाल्मजाले
सर्वोन्नत्या स्वकुलशशिनस्तस्य जन्मैव मा भूत् ।
दोषं दोषप्रचयवसतिर्दर्शयत्येव दूरात्
यस्याङ्गुल्या तनुतरमतिव्यक्तमालोक्य लोकः ॥ ७३ ॥

इति चिन्तयतस्तस्य विषमे प्राणसंशये ।
अभून्मानक्षयादेव न शरीरक्षयाद्भयम् ॥ ७४ ॥
अत्रान्तरे दिव्यदशा ज्ञात्वा विद्याधरो मुनिः ।
माठरः कृपया तस्य तीव्रक्लेशवतीं दशाम् ॥ ७५ ॥
व्योममार्गेण निष्कोशखड्गपाणिः समाययौ । D 477
नभोनिंस्त्रिशयोर्मैत्रीमेकरूपां प्रदर्शयन् ॥ ७६ ॥
सोऽभ्येत्य भीषणतनुः क्रोधक्रूरतरेक्षणः ।
चण्डालसूनोश्चिच्छेद शिरः शङ्खमुखस्य च ॥ ७७ ॥

अथ स्वमाश्रमं नीत्वा तमाश्वास्य नृपात्मजम् ।
स तस्मै प्रददौ मायाविद्याः सह महर्द्धिभिः ॥ ७८ ॥
ततस्तं मुनिमामन्त्र्य मानी शत्रुजिगीषया ।
राज्यकामः शनैः प्रायात्काम्पिल्यं पार्थिवात्मजः ॥ ७९ ॥
स तत्र नर्तकीरूपं कृत्वा रतिमनोरमम् ।
ललिताभिनयैस्तैस्तैः पौरलोकमतोषयत् ॥ ८० ॥
श्रुत्वा नरपतिस्तस्य कौशलं नृत्यवाद्ययोः ।
स्वयं द्रष्टुं सहामात्यैः प्रययौ नाट्यमण्डपम् ॥ ८१ ॥
स तत्र कैशिकीलीलाललितं तं व्यलोकयत् ।
अमृताहरणायातं कान्तारूपमिवाच्युतम् ॥ ८२ ॥
तस्याभिनवसौन्दर्यं विचार्य धरणीधरः ।
शृङ्गारास्वादनक्षीबः प्रधानामात्यमब्रवीत् ॥ ८३ ॥
D 479 अहो संपूर्णलावण्या धन्या वरतनोस्तनुः ।
इयं हरति नश्चेतश्चित्राभिनयशालिनी ॥ ८४ ॥
इयं सा मेनका नूनं स्वर्गरङ्गविलासिनी ।
अन्यथा नवनेपथ्या कुतः कान्तेयमाकृतिः ॥ ८५ ॥
भावा भव्यतरस्वभावरचना वैचित्र्यचारुक्रमैः
आस्वाद्यस्य रसस्य संगततया निष्पादनायोद्यताः ।
निष्पन्नस्य मुहुः प्रसाधनविधिर्मध्ये ध्रुवा[1]गीतिभिः
संमूर्च्छन्मुरजोपरञ्जितमहो नाट्यं मनः कर्षति ॥ ८६ ॥
वाणी पाठ्यपरिग्रहे परिलसद्वीणास्वनामोदिनी
सत्त्वव्यक्तिविभक्तिकम्पतरला तालोन्मुखी मेखला ।
आहार्यं रचयत्यहार्यरुचिरं सौन्दर्यरेखासखी
तन्व्या लास्यविलासशिष्यकलनां भ्रूयुग्ममासेवते ॥ ८७ ॥
इति तद्वदनाम्भोजन्यस्तनेत्रस्य भूपतेः ।
उद्ययौ वदनखेदसिक्तो मदनपादपः ॥ ८८ ॥
दिनान्ते रत्नसंपूर्णं दत्वास्यै पारितोषिकम् ।
अन्तःपुरोदरं गत्वा तामेवाचिन्तयन्नृपः ॥ ८९ ॥
D 481 असत्यरूपा तस्यान्तर्विश्रान्ता कूटकामिनी ।
चक्रे संसारमायेव वामा मोहं महीपतेः ॥ ९० ॥
आनिनाय स तां स्वैरं सदनं मदनातुरः ।
परिणामविरोधीनि स्पृहयन्ति मुमूर्षवः ॥ ९१ ॥

---

१ ध्रुवो in printed edition against Mss.

यशःपुष्पप्रकाराणां त्रिवर्गफलशालिनाम्।
परशुर्नृपवृक्षाणामिन्द्रियाणामनिग्रहः ॥ ९२ ॥
नैवावटे पतति पातिनि यूथनाथः
संपूर्णदानपरिपूरितभृङ्गसार्थः।
सा बन्धकी यदि करोति न कुञ्जरस्य
गाढानुरागविवशस्य विमोहदीक्षाम् ॥ ९३ ॥
ततः स्वैरं गृहं राज्ञश्चेटकैः कूटकामिनी।
छन्दानुवृत्तिभिर्मूढैर्विनाशाय प्रवेशिता ॥ ९४ ॥
विविक्ते त्यक्तधैर्यस्य तस्य गाढाभिलाषिणः।
बभूव कान्तारूपेण कालः कण्ठग्रहोन्मुखः ॥ ९५ ॥
ततस्तं दीर्घनिद्रायै शय्यामारूढमादरात्।
विहाय नर्तकीरूपं कुमारः सहसाब्रवीत् ॥ ९६ ॥
भोगलुब्धेन भवता भ्रातृस्नेहानपेक्षिणा। D 483
सहभोग्यमिदं राज्यं कथमेकेन भुज्यते ॥ ९७ ॥
निर्दोषः क्लेशजलधौ क्षिप्तोऽहं विषमे त्वया।
स्वकर्मयोगादुत्तीर्णस्तत्प्रतीकारचिन्तकः ॥ ९८ ॥
उक्त्वेति बद्ध्वा नृपतिं प्राप्तं राज्यमवाप्य सः।
लुब्धप्रशमनं चक्रे जनताश्वासनेन सः ॥ ९९ ॥
स संप्राप्तपदस्तीव्रं चिन्तयन् स्वपराभवम्।
शिलां प्रभाते चिक्षेप नृपतेर्मन्युनिष्कृपः ॥ १०० ॥
तां भ्रातृवधसंसक्तरक्तसिक्तामिव श्रियम्।
भुक्त्वा कविकुमारोऽपि देहान्ते नरकं ययौ ॥ १०१ ॥
सोऽहं वर्षसहस्राणि भुक्त्वा तत्कर्मपातकम्।
प्रक्षीणकिल्बिषोऽप्यद्य पादाङ्गुष्ठे परिक्षतः ॥ १०२ ॥
जन्मावर्तक्रमपरिचयैः संततैः पच्यमानं
पश्चाद्यातं स्थलजलतरुग्रावगर्भान्तरेऽपि।
तैस्तैर्नानारसपरिकरैः कायपात्रे स्वभुक्तं
कल्पापायैरपि न पुरुषः कर्मशेषं जहाति ॥ १०३ ॥
इत्यन्यजन्मचरितं श्रुत्वा भगवतोदितम्। D 485
अलङ्घ्यां मेनिरे सर्वे भिक्षवः कर्मसंततिम् ॥ १०४ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
कविकुमारावदानं षट्षष्टितमः पल्लवः ॥

D 487

# ६७ संघरक्षितावदानम् ।

धन्यास्ते परिपूर्णपुण्यनिधयः सद्धर्मसंबोधिनः
ज्ञानोदग्रगुरूपदेशमहिमप्राप्तप्रभावोदयाः ।
गेहप्राङ्गणलीलया बहुतरक्लेशोग्रसंतापकृत्
यैः संसारविसारिमारवमहामार्गः समुल्लङ्घ्यते ॥ १ ॥

पुराभवद्गृहपतिः श्रावस्त्यां बुद्धरक्षितः ।
अर्थिसार्थोपकरणगुर्व्यो यस्य गृहश्रियः ॥ २ ॥
यः प्रसन्नमनोवृत्तिः कुशलाय प्रसादिना ।
कृतः शिक्षापदोत्सृष्टः शारिपुत्रेण भिक्षुणा ॥ ३ ॥
संघरक्षितनामाभूत्संपूर्णगुणलक्षणः ।
पुत्रस्तस्य सदाचारः सर्वविद्याविचक्षणः ॥ ४ ॥
तं कदाचिद्गृहायाते शारिपुत्रे पिताब्रवीत् ।
त्वमुपस्थायकः पुत्रो गर्भस्थोऽस्य प्रतिश्रुतः ॥ ५ ॥
D 489 तस्मात्तदधुना सत्यं कर्तुमर्हसि मे वचः ।
पुण्यैर्भवन्ति सत्पुत्राः पितुरानृण्यकारिणः ॥ ६ ॥
इति पित्रा समादिष्टः प्रहृष्टः संघरक्षितः ।
अनुगः शारिपुत्रस्य परिचर्यापरोऽभवत् ॥ ७ ॥
ततः प्रव्राजितस्तेन समुदाचारशिक्षया ।
अध्यापितः स निखिलं धर्मागमचतुष्टयम् ॥ ८ ॥
ततः कदाचिद्वणिजां मित्राणां तुल्यजन्मनाम् ।
शतैः पञ्चभिरम्भोधिगमनेन सहार्थितः ॥ ९ ॥
आरुरोह प्रवहणं तेषां कुशलचिन्तकः ।
भयेषु धैर्यजननं गृहीत्वा शासनं गुरोः ॥ १० ॥
अथाब्धिमध्ये संरुद्धे तस्मिन् प्रवहणे क्षणम् ।
साक्रन्दे वणिजां सार्थे प्रोच्चचार वचोऽम्भसः ॥ ११ ॥
यदि प्रवहणस्यास्य मुक्तिर्युष्माकमीप्सिता ।
तदेष क्षिप्यतां क्षिप्रं सलिले संघरक्षितः ॥ १२ ॥
श्रुत्वैतत्प्राणसंदेहे तेषामेकाभवन्मतिः ।
वरं निधनमेवास्तु न तु साधुसुहृद्वधः ॥ १३ ॥
D 491 विषमे संशये तेषां कृपया रक्षणोद्यतः ।
चिक्षेप स्वयमात्मानं क्षुब्धाब्धौ संघरक्षितः ॥ १४ ॥

स नागनिलयं प्राप्तस्तत्र नागैरथान्वितः।
विधाय पूर्वसंबुद्धवृद्धचैत्याभिवन्दनम्॥ १५॥
दृष्टिश्वासरदस्पर्शविषाणां चिन्तया कृशः।
सुचिराभिमतां तेषां विदधे धर्मदेशनाम्॥ १६॥
तीव्रारतिसमुद्विग्नः स्वदेशगमनोत्सुकः।
स नागैर्वणिजामेव न्यस्तः प्रवहणे क्षणात्॥ १७॥
ते प्रहृष्टाः समासाद्य परलोकादिवागतम्।
प्रत्यावृत्तप्रवहणास्तीरं प्रापुर्महोदधेः॥ १८॥
स्वगृहोत्कण्ठया तेषां व्रजतामतिसत्वरम्।
निद्रालुर्वालुकाकूले विस्मृतः संघरक्षितः॥ १९॥
गते सार्थे प्रबुद्धोऽथ प्रभाते विजना दिशः।
पश्यन् सुहृद्विरहितः प्रदध्यौ स विषण्णधीः॥ २०॥
अहो दृष्टाश्च नष्टाश्च गन्धर्वनगरोपमाः।
विमोहयन्ति विरहे सुहृद्बन्धुसमागमाः॥ २१॥
तरुणशफरोत्फाललोलाः परप्रियसंगमा D 493
विदधति नृणामास्थां मिथ्यास्थिरस्थितिबन्धनीम्।
स्वजनरहितः शेते गर्भे तथैव विपद्यते
विचरति सहासक्तैर्जन्तुः शुभाशुभकर्मभिः॥ २२॥
इति ध्यात्वा धिया धीरः स व्रजन् विषमाध्वना।
जनचिन्तामिवानन्तां प्राप शालाटवीं शनैः॥ २३॥
ततस्तत्र समुद्भूतरत्नप्रासादमन्दिरम्।
महाविहारमद्राक्षीत्स मूर्तमिव कौतुकम्॥ २४॥
स्वास्तीर्णासनपर्यङ्के तस्मिन् रुचिरचीवरम्।
ददर्श संघं भिक्षूणामक्षुण्णशमलक्षणम्॥ २५॥
ततस्तैर्विहितातिथ्यः स तत्रालंकृतासनः।
लब्धभोजनसत्कारः क्षणं विश्रान्तिमाप्तवान्॥ २६॥
भिक्षूणामथ संप्राप्ते भोजनावसरे पुरः।
सज्जीकृतानि पात्राणि स्थूलमुद्गरतां ययुः॥ २७॥
विहारेऽन्तर्हिते तस्मिंस्ते महामुद्गरायुधाः।
मिथः शिरांसि निर्भिद्य चक्रुः क्ष्मां शोणितोक्षिताम्॥ २८॥
आहारकालेऽतिक्रान्ते विहारेऽभ्युदिते पुनः। D 495
स्वस्थास्ते भिक्षवस्तस्थुस्तथैव प्रशमान्विताः॥ २९॥

स तदाश्चर्यमालोक्य तान् पप्रच्छ सविस्मयः ।
भक्तकाले कलिः कस्माद्युष्माकमयमुद्गतः ॥ ३० ॥
तमवोचत तेऽस्माभिर्विहारे पूर्वजन्मनि ।
भक्तकाले कृतं युद्धं तस्यैतत्कर्मणः फलम् ॥ ३१ ॥
ते तान् बभाषिरे मोहादागन्तूनां दुरात्मभिः ।
भक्तविघ्नः कृतोऽस्माभिर्भिक्षूणां भिक्षुभिः पुरा ॥ ३२ ॥
एतदाकर्ण्य स ततो ज्ञात्वापश्यन्नवं पुनः ।
तृतीयं रुचिरावासं विहारं भिक्षुभिर्वृतम् ॥ ३३ ॥
भिक्षुभक्तक्षणे तं च निर्दग्धं पुनरुत्थितम् ।
दृष्ट्वा तं विस्मितः संघमपृच्छद्दाहकारणम् ॥ ३४ ॥
ते तमूचुः पुरास्माभिः भिक्षुभिर्भिक्षुमत्सरात् ।
आदीपितः क्रौर्यरतैर्विहारः पूर्वजन्मनि ॥ ३५ ॥
श्रुत्वैतत्स ततो गत्वा ददर्शान्यत्र निश्चलान् ।
स्तम्भकुशहलाकारान् मार्जनीरज्जुसंनिभान् ॥ ३६ ॥
D 497 खट्वाद्युदूखलस्थूलांस्तन्तुशेषान् द्विधागतान् ।
सत्त्वान् सत्त्ववतामग्र्यान् सुप्तचैतन्यनिःसुखान् ॥ ३७ ॥
स तान् दृष्ट्वा व्रजन्नेव पुण्यं प्राप तपोवनम् ।
सेवितं तीव्रतपसां मुनीनां पञ्चभिः शतैः ॥ ३८ ॥
ते तं दूरात्समालोक्य चक्रिरे निश्चयं मिथः ।
अस्य दातव्यमस्माभिर्न स्थानं न प्रियं वचः ॥ ३९ ॥
शाक्यशिष्यो न संभाष्यो बहुजल्पः स्वभावतः ।
इति संविदमाधाय ते तस्थुर्मौनिनः परम् ॥ ४० ॥
तैरदत्ताश्रयस्तत्र स बभ्राम दिनक्षये ।
बद्धकोशैर्विनष्टाशः पङ्कजैरिव षट्पदः ॥ ४१ ॥
मुनिरेकस्तु वासाय तस्य शून्यां कुटीं ददौ ।
त्वया मौनवता रात्रौ स्थातव्यमिति संविदा ॥ ४२ ॥
तत्र तैरकृतातिथ्यं तं क्षपाक्षयकारिणम् ।
ऊचे शयानमभ्येत्य शनैराश्रमदेवता ॥ ४३ ॥
उत्तिष्ठ साधो सौजन्यात्कुरु मे धर्मदेशनाम् ।
सद्धर्मवादिनां लोके प्रथमो ह्यसि मे मतः ॥ ४४ ॥
D 499 इत्यर्थितस्तया मौनी स तां प्राह लघुस्वनः ।
मातर्निष्कासनायैव त्वं मे केनापि निर्मिता ॥ ४५ ॥

अस्मिन् मे मुनिना मौनसमयः संश्रयः कृतः।
निष्कासयति मामेष तद्व्यतिक्रमकारिणम्॥ ४६॥
इति ब्रुवाणः प्रणयाद्बहुशः स तयार्थितः।
ब्राह्मणानुमतं धर्मं वक्तुं समुपचक्रमे॥ ४७॥

नैव व्रतानि तनुशोधनसाधनानि
नो पावनानि विजनानि तपोवनानि।
पुंसां जटाजिनपरिग्रहदुर्ग्रहाणां
चेतः स्पृहापरिचितं परिशोधयन्ति॥ ४८॥
एते वने फलभुजः कपयो न मुक्ता
वृक्षाः सवल्कलपलाशजटासटाश्च।
अन्तर्जलप्रणयिनस्तिमयश्च तीर्थे
मिथ्या तपःपरिकरः प्रशमोज्झितानाम्॥ ४९॥
न भूतिधवलैरिभैः पवनपायिभिः पन्नगैः
वनव्यसनिभिर्मृगैः सललकैः स्थलीशायिभिः।
फलप्रणयिभिः शुकैरपि निरम्बरैर्लुब्धकैः
अमुक्तविषयस्पृहैरधिगता प्रशान्तिः क्वचित्॥ ५०॥

इति तद्वचनं श्रुत्वा मुनयोऽपि सविस्मयाः। D 501
तमादरोन्मुखाः सर्वे परिवार्यावतस्थिरे॥ ५१॥
सोऽचिन्तयदियं पर्षत्संसारपरिवर्तिनी।
मिथ्यैव व्रतसंतापसंततक्लेशमश्नुते॥ ५२॥
नृणामविद्या संस्कारा विज्ञानं नामरूपता।
षडायतनसंस्पर्शौ वेदना सह तृष्णया॥ ५३॥
उपादानं भवो जातिर्जरामरणदुर्गतिः।
एष दुःखमयः स्कन्धः सुमहान् परिवर्धते॥ ५४॥
अविद्यादिक्रमेणैव प्रशान्तानां मनीषिणाम्।
एकैकस्य निरोधेन लयं याति परः परः॥ ५५॥
इति निश्चित्य मनसा स तेषां तद्विधां पुरः।
सद्धर्मदेशनां कृत्वा पुनस्तानिदमब्रवीत्॥ ५६॥

तेषामशोच्यं स्पृहणीयमेव
जन्मप्रशामोचितमुन्नतानाम्।
मैत्रीपवित्राणि मनांसि येषां
सद्धर्मशुद्धानि च जीवितानि॥ ५७॥

D 503 यावन्तोऽस्यां भुवि नभसि वा भोगिनामालये वा
सत्त्वाः सन्ति प्रणयवचसा तान् सुहृत्प्रार्थयेऽहम्।
मैत्रीपात्रं कुरुत हृदयं धर्मबुद्धिं भजध्वं
धर्मादन्यस्तमसि विषमे देहिनां नास्ति दीपः ॥ ५८ ॥

इत्युक्त्वा पादपतले कृतपर्यङ्कबन्धनः।
ऋजुप्रकाशमर्हत्त्वं तत्र साक्षाच्चकार सः ॥ ५९ ॥

ते तमूचुर्भदन्तास्मान्नय शाक्यमुनेः पदम्।
स्वाख्याते धर्मविनये प्रव्रज्यामर्थयामहे ॥ ६० ॥

इति तैरर्थितः सोऽथ चीवरप्रान्तलम्बिनः।
तानादाय ययौ व्योम्ना महर्द्धिः संघरक्षितः ॥ ६१ ॥

स शास्तुः पदमासाद्य तत्पादनलिनद्वयम्।
मूर्ध्नाभिवन्द्य सानन्दस्तस्मै सर्वं न्यवेदयत् ॥ ६२ ॥

भगवान् प्रणयिप्रीत्या मुनीनामथ तद्गिरा।
मनःप्रसादजननीं चक्रे सद्धर्मदेशनाम् ॥ ६३ ॥

ते तत्प्रसादसंजातविमलप्रशमोदयाः।
सर्वक्लेशप्रहाणार्हं पूज्यमर्हत्त्वमाययुः ॥ ६४ ॥

D 505 तेषु यातेषु शास्तारमपृच्छत्संघरक्षितः।
भगवन् स्तम्भकुड्यादिरूपाः पुष्पफलोपमाः ॥ ६५ ॥

रज्ज्वाभास्तन्तुशेषाश्च दृष्टाः सत्त्वा मया पथि।
तत्तेषां कर्मणः कस्य फलं मोहानुवर्तिनाम् ॥ ६६ ॥

इति तेनादरात्पृष्टः सर्वज्ञस्तमभाषत।
बभूवुः काश्यपाख्यस्य ते शास्तुः श्रावकाः पुरा ॥ ६७ ॥

स्तम्भकुड्येषु तैः श्लेष्म प्रक्षिप्तं संघमन्दिरे।
भुक्तानि संघवृक्षेभ्यः फलपुष्पाणि चापरैः ॥ ६८ ॥

भिक्षुभोजनपानेषु द्वेषाद्विघ्नः कृतोऽपरैः।
संघलाभपरावृत्तिर्भिक्षूणामपरैः कृता ॥ ६९ ॥

ते तत्कर्मविपाकेन तत्तदाकारतां गताः।
इत्याख्यानं भगवता श्रुत्वा सोऽभूत्सविस्मयः ॥ ७० ॥

प्राप्तमर्हत्पदं दृष्ट्वा भिक्षवः संघरक्षितम्।
जिनं तत्कर्म पप्रच्छुः पृष्टः स च जगाद तान् ॥ ७१ ॥

एष प्रव्रजितः शास्तुः काश्यपाख्यस्य शासने।
पुरा विहारे संघस्य वैयापृत्यकरोऽभवत् ॥ ७२ ॥

पञ्च चास्य शतान्यासन् संगतानि विहारिणाम्। D 507
प्रणिधानं शरीरान्ते कुशलाय चकार सः ॥ ७३ ॥

तेनास्मिञ्जन्मनि प्रापदर्हत्त्वं संघरक्षितः।
तदैतत्संगतं चास्य मुनीनां शतपञ्चकम् ॥ ७४ ॥

रक्तैः शुक्लैरसितशबलैर्देहिनां कर्मसूत्रै-
श्चित्राकारं भवति बहुशः प्रावृतं जन्मवस्त्रम्।
त्यक्ते तस्मिञ्जरठभुजगम्लाननिर्मोकयुक्त्या
तत्कैवल्यं विशति कुशली यत्र शीतं न चोष्णम् ॥ ७५ ॥

इति तस्य निशम्य सादराः
कथितं तेन तथागतेन ते।
प्रशशंसुरनन्यमानसाः
चरितं सच्चरितस्य भिक्षवः ॥ ७६ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
संघरक्षितावदानं सप्तषष्टितमः पल्लवः ॥



D 509 ## ६८ पद्मावत्यवदानम् ।

कर्माणि पूर्वविहितानि हिताहितानि
श्लिष्टानि भोगसमयैरतिवाहितानि ।
गच्छन्ति जन्तुषु लसत्कुसुमोपमानि
लीनं तिलेष्विव निधाय निजाधिवासम् ॥ १ ॥

वज्रासने वज्रसमाधिबन्धा-
दथोत्थिते बुद्धसुधामयूखे ।
संवत्सरैः षड्भिरवाप्तदीप्त-
ज्ञानोदये भिक्षुगणस्तमूचे ॥ २ ॥

त्वद्वियोगाग्निसंतप्ता भगवन् कुक्षिकोटरे ।
निलीनं सुषुवे गर्भं षड्भिर्वर्षैर्यशोधरा ॥ ३ ॥
तस्मिन् राहुलकाभिख्ये जाते त्वत्सदृशे शिशौ ।
जातः कुतोऽयमित्याह राजा शुद्धोदनः क्रुधा ॥ ४ ॥
सा वध्यवसुधां नीता शासनेन महीपतेः ।
सती तवैव लेखेन प्रभावेणैव रक्षिता ॥ ५ ॥
D 511 त्वच्छायामशिलोत्सङ्गे निक्षिप्तेऽथ तया शिशौ ।
तत्सत्ययाचनेनासौ सलिले पुप्लुवे शिला ॥ ६ ॥
साध्वीव्रतपवित्रायास्तस्याः श्वशुरकोपजः ।
दुःखावमानसंतापः स पाकात्कस्य कर्मणः ॥ ७ ॥
इति भिक्षुवचः श्रुत्वा भगवान् प्रत्यभाषत ।
श्रूयतां कर्मणा येन दुःखं लेभे यशोधरा ॥ ८ ॥
काम्पिल्ये नगरे राजा ब्रह्मदत्तः पुराभवत् ।
भूतलाखण्डलः श्रीमान् कामिनीकुसुमायुधः ॥ ९ ॥
खड्गधाराधरेणाजौ भुजेन जनितः परः ।
प्रजज्वाल प्रतापाग्निर्यस्यारातितमःप्रदः ॥ १० ॥
स कदाचिद्वनं धन्वी मृगयाकेलिकौतुकी ।
विवेश दूरमेकाकी हृतोऽश्वेनातिरंहसा ॥ ११ ॥
तस्यार्ककिरणोद्भिन्नाः कपोले स्वेदबिन्दवः ।
चक्रुः कुण्डलमुक्तानां प्रतिबिम्बविडम्बनम् ॥ १२ ॥

मार्गागतेन स मुहुर्मृगशावकेन
रम्यावलोकनकुतूहलनिश्चलेन ।
D 513 हाराग्ररत्नशकलप्रतिबिम्बितेन
प्राप क्षणं सदृशरूपपदं सुधांशोः ॥ १३ ॥

तस्यानुरक्तहरिणीकरिणीप्रसक्त-
व्यामीलितेक्षणमृगद्विपसेव्यमानाः।
जह्नुः श्रमाम्बुशबरीकबरीकलाप-
पुष्पस्पृशः सुरभिमत्तवनान्तवाताः॥ १४॥
अस्मिन्नवसरे कन्यां शाण्डिल्यस्य महामुनेः।
प्रस्नावपानसंप्राप्तगर्भमुग्धमृगीसुताम्॥ १५॥
सलिलाहरणायातां लावण्यामृतवाहिनीम्।
स ददर्शाश्रमसरित्तीरे तरललोचनाम्॥ १६॥
कमलां कमलावासप्रीत्येव कमलाकरम्।
सृजन्ती चरणन्यासजातैः कमलमण्डलैः॥ १७॥
अपूर्वकौतुकवतीं तां दृष्ट्वा मनुजेश्वरः।
अमरत्वमिव प्राप निर्निमेषेक्षणः क्षणम्॥ १८॥
सोऽचिन्तयदहो कापि कान्तेयं मुनिकन्यका।
हरिणीव हरत्येव स्निग्धमुग्धैर्विलोकितैः॥ १९॥
सेवासीम्नि निवेशिता कमलिनी संवाहने पादयोः D 515
पूर्णेन्दुर्वदनस्य लक्ष्मलिखितं दासत्वमापादितः।
प्रारब्धे स्वयमेव विश्वविजये भ्रूविभ्रमैः सुभ्रुवः
कामं निर्ममकामकार्मुकलता नैर्गुण्यमालम्बते॥ २०॥
किरति वदनबिम्बं हर्षपीयूषमस्या
ललितसितमयूखोल्लेखलेखाक्रमेण।
इयमतिशयमैत्री नेत्रयोः श्रोत्रमूले
नवकुवलयलीलोत्तुङ्गकान्तिं तनोति॥ २१॥
इति संचिन्त्य स शनैरवरुह्य तुरंगमात्।
तामुवाच समभ्येत्य कौतुकालोकनोन्मुखीम्॥ २२॥
अम्लानसुकृतोदारसुरकण्ठग्रहोचिता।
विजने मणिमालेव का त्वं कुवलयेक्षणे॥ २३॥
इयमानन्दसंदोहस्यन्दिनी ललिता तव।
न कस्य कुरुते कान्तिः कौतुकाकुञ्चितं मनः॥ २४॥
ब्रूहि कस्य त्वया प्रांशुः शरच्चन्द्रावदातया।
कामसुक्तालते वंशः संभवेन विभूषितः॥ २५॥
इति तेनादरात्पृष्टा ज्ञात्वा तं मुनिपुत्रकम्।
अज्ञातकामवृत्तापि साभिलाषा जगाद सा॥ २६॥

D 517 अहं पद्मावती नाम पादोद्यत्पद्ममालिका।
मृगीगर्भसमुद्भूता शाण्डिल्यस्य सुता मुनेः ॥ २७ ॥
स्वागतं ते मुनिसुत प्रियं मे तव दर्शनम्।
मनोहरतरं चित्रं वल्कलं किमिदं व्रतम् ॥ २८ ॥
विभूषितोऽयं मायूरैः शिखण्डैरिव पञ्चभिः।
सुरार्चाकीर्णकुसुमः शोभते ते जटाभरः ॥ २९ ॥
अयमामलकस्थूलप्रालेयफलकोज्ज्वलः।
दीर्घाक्षसूत्रमालाभिः कण्ठे बहुगुणस्तव ॥ ३० ॥
आसूत्रयति ते पाणिश्चित्रैः कुशपवित्रकैः।
कुटिले वेणुदण्डेऽस्मिन् बालपल्लवमालिकाम् ॥ ३१ ॥
रमणीयव्रतवतः कथ्यतां क्व तवाश्रमः।
मनोमृगाजिनं श्रान्तं तत्र विश्रान्तिमेति मे ॥ ३२ ॥
इति मुग्धावचः स्वादु सुधार्द्रं वसुधाधिपः।
आस्वाद्य दत्वा पाथेयमोदकं तामभाषत ॥ ३३ ॥
नैवास्मिन्नुचितं सुभ्रु दर्भसूचीचयाचिते।
सुकुमारं तव वपुः शुष्यत्तरुतृणे वने ॥ ३४ ॥
D 519 इतः संभोगयोग्यश्रीर्नातिदूरे ममाश्रमः।
एवंविधा विशीर्यन्ते यस्मिन् फलपरंपराः ॥ ३५ ॥
निवासः क्रियतां तत्र चर्यतां मान्मथं तपः।
संभोगपरिचर्यासु जनोऽयं विनियुज्यताम् ॥ ३६ ॥
अभ्युत्सङ्गपतंगतां गतवतस्त्र्यक्षप्रकोपक्षणे
जीवोत्पादनमेतदेव विधिना मन्ये नवं निर्मितम्।
कान्तं ते वसुधासुधाकरकलाकोशानुकारं वपुः
लावण्यावनिपुण्यपण्यमसमं नान्यन्मनोजन्मनः ॥ ३७ ॥
इति श्रुत्वा विदग्धस्य मुग्धा भूमिपतेर्वचः।
चन्द्रावदातमास्वाद्य मोदकं तमभाषत ॥ ३८ ॥
त्वद्व्रतानुव्रतैवाहं निवसामि तवाश्रमे।
प्रतीक्षस्व क्षणं यावद्गत्वाज्ञामर्थये गुरोः ॥ ३९ ॥
इति संविदमाधाय सा गत्वा निजमाश्रमम्।
नवाभिलाषविवशा श्वसन्ती मुनिमभ्यधात् ॥ ४० ॥
दृष्टस्तात वने कोऽपि मया मुनिकुमारकः।
प्रसन्नसलिलच्छायचित्रपर्यन्तवल्कलः ॥ ४१ ॥

दिव्यं तदाश्रमोद्भूतं फलमास्वादितं मया । D 521
येनान्यफलसंभारे नियमः परिकल्पितः ॥ ४२ ॥
गच्छामि त्वदनुज्ञाता कान्तं तस्य तपोवनम् ।
तत्सौजन्यप्रसक्ता मे नान्यत्र रमते मतिः ॥ ४३ ॥
इति तद्वचनं श्रुत्वा विस्मितः स्मरसूचकम् ।
तामुवाच मुनिर्मुग्धां यौवनोन्मादशङ्कितः ॥ ४४ ॥
दृष्टस्त्वया भुजंगोऽसौ मन्ये रत्नविभूषितः ।
भवन्ति मुनयः पुत्रि न द्विजिह्वा न भोगिनः ॥ ४५ ॥
सस्नेहैर्गुरुभिः परं परिणतौ दुःखप्रदैर्मोदकै-
रापाते विषयैरिवातिमधुरैः प्रीतिं वृथा मा कृथाः ।
मुग्धे कामकलानिभानि सरसान्यायाससिक्तान्यलं
येषामेव विषोपमेन जनता स्वादेन संमूर्च्छति ॥ ४६ ॥
एहि दर्शय मे दूरात्कस्तावत्स मुनेः सुतः ।
इत्युक्त्वा तटिनीतीरं तया सह ययौ मुनिः ॥ ४७ ॥
स विलोक्य सरित्तीरे ब्रह्मदत्तं महीपतिम् ।
योग्यं गुणगणोदारं जामातरममन्यत ॥ ४८ ॥
नृपोऽपि मुनिमालोक्य वैलक्ष्यविनताननः । D 523
द्विगुणेन प्रणामेन निनायैव प्रसन्नताम् ॥ ४९ ॥
निजोचितेन विधिना मुनिना प्रतिपादिताम् ।
ततस्तां हर्षपीयूषलहरीमग्रहीन्नृपः ॥ ५० ॥
नास्याः कदाचित्कर्तव्यो मन्युः परगिरा त्वया ।
मुग्धा पाल्येयमित्युक्त्वा मुनिः प्रायात्स्वमाश्रमम् ॥ ५१ ॥
अथ हर्षमिवारुह्य हयं जायासखः क्षणात् ।
राजधानीं समासाद्य नृपश्चक्रे महोत्सवम् ॥ ५२ ॥
सर्वान्तःपुरवर्गस्य मूर्ध्नि न्यस्ता महीभुजा ।
सा ययौ शिष्यतां पत्युः कलाकौशलकेलिषु ॥ ५३ ॥
पादन्यासैः कमलकलिकां भूमिमालोक्य तस्या
देवीशब्दं नृपपरिजनस्तत्र मेने यथार्हम् ।
दिव्योत्कर्षः सुकृतसचिवः सूच्यते केतुभूतः
स्फीताश्चर्यैरतिशयमयैर्लक्षणैः पुण्यभाजाम् ॥ ५४ ॥
अन्तःपुरपुरन्ध्रीषु विमुखेन महीभुजा ।
लेभे सौभाग्यशोभां सा रममाणा घनस्तनी ॥ ५५ ॥

D 525 अथ कालेन सा गर्भमाधत्त वसुधापतेः।
चिन्ताशल्यं च संसक्तमन्तःपुरवधूजनः ॥ ५६ ॥

आसन्नप्रसवां मुग्धां ततस्तामेत्य मन्दिरे।
कौटिल्यक्रूरमात्सर्यादूचे राजाङ्गनाजनः ॥ ५७ ॥

प्रसवस्य विधिं मुग्धे न जानीषे नृपोचितम्।
जननी हि सुतं सूते पट्टेन पिहितेक्षणा ॥ ५८ ॥

इत्युक्ता सा सपत्नीभिः प्रौढगर्भभरार्दिता।
उचितं भवतीभिर्मे क्रियतामित्युवाच ताः ॥ ५९ ॥

ततस्ताभिर्निरुद्धाक्षी दृढबन्धेन वाससा।
सासूत बालयुगलं प्रतप्तकनकप्रभम् ॥ ६० ॥

धृत्वा तौ वस्त्रपिहिते मञ्जूषे गूढमुद्रिते।
गङ्गाजले निष्करुणाः कुमारौ चिक्षिपुः स्त्रियः ॥ ६१ ॥

कृत्वा रक्ताक्तवदनामूचुः पद्मावतीं च ताः।
शकलद्वयमस्पन्दं जातं ते क्षिप्तमम्भसि ॥ ६२ ॥

विपुलोत्सवसंनद्धः किं जातमिति भूपतिः।
अपृच्छदान्तःपुरिकान् पुत्रसंदर्शनोत्सुकः ॥ ६३ ॥

D 527 ते तं बभाषिरे देव सदृशं ते सुतद्वयम्।
संजातं भक्षितं देव्या पिशाच्येव किमुच्यते ॥ ६४ ॥

त्रस्तः श्रुत्वेति नृपतिर्गत्वान्तःपुरमन्दिरम्।
रक्ताक्तवदनां देवीं दृष्ट्वा सत्यममन्यत ॥ ६५ ॥

वधाय बहिरुत्सृष्टा सा क्रुद्धेन महीभुजा।
गुप्तं धृता मन्त्रिवरैः सपत्नीदोषशङ्किभिः ॥ ६६ ॥

अथ व्योम्ना समभ्येत्य शाण्डिल्याश्रमदेवता।
अन्तर्हिता जनस्याग्रे जगाद जगतीपतिम् ॥ ६७ ॥

निर्दोषां दुर्दशां यातां वधायोत्सृजतस्तव।
निर्विचारप्रवादेन मन्ये निर्मूलितं यशः ॥ ६८ ॥

पद्मावती सपत्नीभिर्मुग्धा वनमृगीसुता।
वञ्चिता स्वसुखायेति न जानीषे विशांपते ॥ ६९ ॥

विभवोग्रपिशाचेन नित्याधिष्ठितचेतसाम्।
एवंविधैव प्रायेण भवत्युन्मादिनी मतिः ॥ ७० ॥

भोगान्धाः प्रभवः स्वभावचपलाः श्रीविभ्रमोच्छृङ्खलाः
सत्यव्यत्ययभूमयो युवतयः पुण्याभिचारक्रियाः ।
स्वच्छन्दाद्भुतवादिनश्च पिशुनाः खे चित्रकर्मोद्यता D 529
यत्रैकत्र वसन्ति तत्र सरलः साधुः कथं जीवति ॥ ७१ ॥
अन्तर्हिततनोर्देव्याः श्रुत्वेति वचनं नृपः ।
कुपितस्तत्र वृत्तान्तं पप्रच्छान्तःपुराङ्गनाः ॥ ७२ ॥
क्रोधाक्रान्तस्य नृपतेस्तीव्रशासनशङ्किताः ।
ता निवेद्य यथावृत्तं बभूवुर्भयविह्वलाः ॥ ७३ ॥
निर्दोषां दयितां ज्ञात्वा सपत्नीवञ्चितां नृपः ।
वध्यभूमिसमुत्सृष्टां शुशोचानुशयाकुलः ॥ ७४ ॥
रागक्रोधकृपालज्जाशोकैस्तुल्यबलोदयैः ।
मुमोह मोहसचिवैर्भागीकृत इवाभवत् ॥ ७५ ॥
हा प्रिये हीनपुण्यस्य क्व पुनः संगमस्त्वया ।
ममेत्युक्त्वा नरपतिर्निपपात महीतले ॥ ७६ ॥
अथ गङ्गाप्रवाहाप्तं मञ्जूषं जालजीविनः ।
आदाय राजमुद्राङ्कमाययुर्धीवराः सभाम् ॥ ७७ ॥
तैर्न्यस्ते पुरतस्तस्मिन् सहसोद्घारिते नृपः ।
ददर्श बालयुगलं प्रत्यग्रकनकोज्ज्वलम् ॥ ७८ ॥
तुल्यरूपौ नृपस्येमौ सहस्रांशोरिवाश्विनौ । D 531
कुमारौ लक्षणोदारौ जाताविति जनस्वनः ॥ ७९ ॥
ततः सबाष्पस्तनयौ गृहीत्वाङ्के महीपतिः ।
प्रियाविरहशोकार्तः संतापमधिकं ययौ ॥ ८० ॥
अथ दीर्घमतिर्नाम महामात्यस्तमब्रवीत् ।
देव जीवति ते पत्नी सपत्नीजनवञ्चिता ॥ ८१ ॥
श्रुत्वैतत्सहसा राजा लब्धजीव इवोत्थितः ।
हृष्टः संदर्शयेत्युक्त्वा प्रययौ मन्त्रिमन्दिरम् ॥ ८२ ॥
तत्र तां दुःस्थितां दृष्ट्वा मन्युविस्मृतसंभ्रमाम् ।
अवमानसमुद्विग्नां जगाद जगतीपतिः ॥ ८३ ॥
यैरेष विषमः क्लेशः प्रिये तव विनिर्मितः ।
एहि पश्याधुना तेषां विचित्रवधवैशसम् ॥ ८४ ॥
प्रसीद त्यज संतापं मा मौनाभिमुखी भव ।
इत्युक्त्वा निपपातास्याः पादयोः पृथिवीपतिः ॥ ८५ ॥

D 533 सावदद्बाष्पधाराभिः सिच्यमानोन्नतस्तनी ।
नरेन्द्र मा कृथाः कोपं जने तीव्रापकारिणि ॥ ८६ ॥
सत्यं विप्रियकारिणीषु नृपते मन्युर्न मे विद्यते
वैरं हि क्षमयैव यात्युपशमं वैरेण तद्वर्धते ।
शत्रुर्नैव विभुः पराभवविधौ नैवोपकारे सुहृत्
सर्वं प्राक्तनकर्मनिर्मितमिदं दुःखादिकं देहिनाम् ॥ ८७ ॥

कृतापकारेऽपि पराभवोद्यमं
न नाम कुर्यादविचार्य बुद्धिमान् ।
क्रुधा परक्रोधविषं विवर्धते
न शान्तिमेति ज्वलितोऽग्निरग्निना ॥ ८८ ॥

दुःखसंतापिता तावत्तातस्यैव तपोवनम् ।
गच्छामि तद्वचः पूर्वं कामिन्या न कृतं मया ॥ ८९ ॥
वारितापि परं तेन मम कामफलस्पृहा ।
यौवनोन्माददोषेण न निर्वृत्ता करोमि किम् ॥ ९० ॥
इत्युक्त्वा निःश्वसन्ती सा विलिखन्ती पदा भुवम् ।
बभूवानम्रवदना क्षणं मौनावलम्बिनी ॥ ९१ ॥
प्रणामेनापि नृपतेर्न सा प्राप प्रसन्नताम् ।
प्रेम्णि शल्यतुलां धत्ते मिथ्यादोषपरिग्रहः ॥ ९२ ॥
D 535 सा धातुरक्तवसना जगाम पितुराश्रमम् ।
भुजंगकुटिलो मन्युर्मानिनीनां हि दुःसहः ॥ ९३ ॥

आलिङ्ग्यमानेव लतासखीभि-
र्भृङ्गस्वनैः स्वागतवादिनीभिः ।
प्रेम्णा मृगीभिः परिवार्यमाणा
तपोवनं सा पितुराससाद ॥ ९४ ॥

याते मुनौ पुण्यनिधौ प्रसन्नं
तपोविशेषार्जितमेव लोकम् ।
दृष्ट्वाश्रमं शून्यमधीरवृत्तिः
पद्मावती मोहहता बभूव ॥ ९५ ॥

वात्सल्यमाजन्मनिलीनमन्तः
स्वच्छप्रभावस्य पितुः स्मरन्ती ।
शून्यां त्रिलोकीमिव मन्यमाना
विषार्दितेवाहिहतेव साभूत् ॥ ९६ ॥

तदेव तस्या मुनिना विहीनं
वनं जगाम प्रियमप्रियत्वम्।
कालेन निःशेषनिपीतसारा D 537
भवन्ति भावा विरसस्वभावाः ॥ ९७ ॥

तेष्वेव देशेषु मनोहरेषु
तेष्वेव पुष्पाकरवासरेषु।
एकेन केनापि विना जनस्य
सर्वं विषादास्पदतामुपैति ॥ ९८ ॥

वेषं ततः प्रव्रजितानुरूपं
विधाय सा भूतलचन्द्ररेखा।
सुखोज्झिता दिक्षु परिभ्रमन्ती
वाराणसीं शान्तिमिवाससाद ॥ ९९ ॥

तत्राथ राज्ञा कृकिणा मृगाक्षी
सा प्रार्थ्यमानाप्यभिलाषभाजा।
तपःप्रदीप्ताग्निशिखेव तस्य
संस्पर्शयोग्या न कथंचिदासीत् ॥ १०० ॥

सा राजपत्नीभिरतिप्रयत्ना-
दभ्यर्च्यमाना त्रिदशाङ्गनेव।
तत्र स्ववृत्तानि विचिन्तयन्ती D 539
पतिव्रता कालमुवास कंचित् ॥ १०१ ॥

तां ब्रह्मदत्तोऽपि विशिष्टचार-
स्तत्र स्थितां भूमिपतिर्निशम्य।
वियोगदुःखानलदह्यमानः
समाययौ ब्राह्मणकूटवेषः ॥ १०२ ॥

अथ व्रताच्छादितचारुवेषां
विलोक्य तां शीलयशःपताकाम्।
प्रसादनाय प्रणयाभिसारी
नृपः स्वरूपं प्रकटीचकार ॥ १०३ ॥

तीव्रापराधोऽहमिति ब्रुवाणे
महीपतौ सा सुचिरं रुरोद।
मनस्विनीनामवमानमन्यु-
रुदीरणेनापि नवत्वमेति ॥ १०४ ॥

घनाश्रुधारापरिहारकारी
स्मरेन्दुरेखासफलीकृताशः।
D. 541 कान्तां शरत्काल इव प्रसाद्य
निनाय राजा निजराजधानीम् ॥ १०५ ॥

पादाम्बुजन्याससरोजपाली
वियोगकाले प्रशमं प्रयाता।
प्रादुर्बभूव प्रियसंगमेऽस्याः
संभोगलक्ष्मीरिव गाढरागा ॥ १०६ ॥

जन्मान्तरे सा किल कन्यकैव
प्रत्येकबुद्धाय विलासपद्मम्।
दत्वापि लोभात्पुनराददे तद्
विचार्य शोभां प्रददौ पुनश्च ॥ १०७ ॥

पद्मप्रदानेन बभूवुरस्याः
पादावतारेषु सरोरुहाणि।
आदानदोषाद्विरतानि काले
पुनःप्रदानात्पुनरुद्गतानि ॥ १०८ ॥

तेनैव दत्ता हरणोद्भवेन
स्वकर्मपाकेन मलीमसेन।
D. 543 पद्मावती वध्यपदं विसृष्टा
सैवाद्य कालेन यशोधरा च ॥ १०९ ॥

श्रुत्वेति सर्वे कथितां जिनेन
तां चित्रितां कर्मफलोदयस्य।
बभूवुराश्चर्यपरिग्रहेण
चित्राभिलीना इव भिक्षवस्ते ॥ ११० ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
पद्मावत्यवदानमष्टषष्टितमः पल्लवः ॥



## ६९ धर्मराजिकाप्रतिष्ठावदानम् । D 545

तेषामशेषकुशलप्रणिधानधाम्नां
शुद्धः सुखस्थितिरयं च परश्च लोकः ।
येषां विशेषरचितोन्नतलक्षणानां
चैत्याङ्किता वसुमती सुकृतं ब्रवीति ॥ १ ॥

पुरे पाटलिपुत्रेऽभूदशोकः पृथिवीपतिः ।
येनाशोकः कृतो लोकः सम्यक्पालनलालितः ॥ २ ॥
विधाय बोधिस्नपनं येन काञ्चनवर्षिणा ।
त्रिचीवराच्छादनेन भिक्षुसंघोऽभिपूजितः ॥ ३ ॥
मान्यस्यानुमते श्रीमान् यशसः स्थविरस्य यः ।
अतीतबुद्धशारीरधातूनां दीप्ततेजसाम् ॥ ४ ॥
अनर्घ्याणां च रत्नानां कृत्वा संग्रहमादरात् ।
विदधे मौक्तिकच्छन्दचारुचैत्याङ्कितां महीम् ॥ ५ ॥
नागलोकं स्वयं गत्वा सौगतं धातुसंचयम् । D 547
स नागाहृतमादाय रत्नस्तूपावलीर्व्यधात् ॥ ६ ॥
तस्याशीतिसहस्राणि चत्वारि च महीतले ।
धर्मराजिकयुक्तानां स्तूपानां निर्मितिर्बभौ ॥ ७ ॥
एकक्षणप्रतिष्ठासु पृथिव्यां स्थविरस्तदा ।
खमुत्पत्यार्कमाच्छाद्य छायासंज्ञामकल्पयत् ॥ ८ ॥
नित्यप्रवृत्ते तस्याथ वितते संघभोजने ।
शनैः प्रव्रजितः कश्चिज्जराजीर्णः समाययौ ॥ ९ ॥
राजार्हमशनं तत्र प्रेषितं स महीभुजा ।
भुञ्जानः परमां प्रीतिमाससाद सुधामिव ॥ १० ॥
तं प्राहान्यतमो भिक्षुरपि जानासि भूभुजा ।
किमर्थं स्वोचितं तुभ्यमिदं भोज्यमुपाहृतम् ॥ ११ ॥
अतिवृद्धतरात्त्वत्तः सद्धर्मं श्रोतुमुत्सुकः ।
त्वामर्चयति भूपालः सत्कारेण महीयसा ॥ १२ ॥
इति स्मितमुखेनोक्तो भिक्षुणा मौर्ख्यलज्जितः ।
शल्यविद्ध इव क्षिप्रं वृद्धभिक्षुरचिन्तयत् ॥ १३ ॥
लज्जायै किमिदं भुक्तं दुःखान्तमशनं मया । D 549
अपि गाथाचतुर्भागं न जानामि निरक्षरः ॥ १४ ॥

किं करोमि सतां मध्ये यदि पृच्छेन्महीपतिः ।
तत्किं वक्ष्यति मामेष मूकं हास्यरतिर्जनः ॥ १५ ॥

कीटैः कोटरकारिभिर्विघटितस्कन्धप्रबन्धः शनै-
रन्तःसुप्तकृशानुधूममलिनः श्वभ्रेऽपि धन्यस्तरुः ।
मूर्खः पण्डितखण्डिताननरुचिर्वैलक्ष्यलीनस्थितिः
मूकान्धप्रतिमः प्रमादवसतिर्मा मास्तु माद्दग्जनः ॥ १६ ॥

इति चिन्तापरिचितं तप्तनिःश्वासनिःसुखम् ।
बुद्धप्रसादिनी देवी समभ्येत्य जगाद तम् ॥ १७ ॥

प्रक्ष्यति त्वां यदा राजा वक्तव्यं भवता तदा ।
विस्तीर्णतरधर्मस्य संक्षेपः श्रूयतामिति ॥ १८ ॥

किंचिन्मात्रं धनमुपकृतौ कृत्यमभ्यर्थ्यमेव
प्राणाधारं तनुतरमपि स्वादनिर्मुक्तमन्नम् ।
निद्रामुद्रा क्षणमपि दृशोरिल्यशक्तोपयुक्तं
शेषं त्यक्त्वा व्रजति विपुलारम्भभोगं शरीरी ॥ १९ ॥

D 551 इति देव्या समादिष्टो वृद्धः स्पष्टतरस्वरः ।
श्रोतुं प्राप्तस्य भूभर्तुर्विदधे धर्मदेशनाम् ॥ २० ॥

राजा हृदयसंवादि श्रुत्वा तस्य सुभाषितम् ।
अचिन्तयदहो सत्यमिदमुक्तं मनीषिणा ॥ २१ ॥

मामेवैतत्समुद्दिश्य हितमाह महामतिः ।
तत्त्वसंवादसास्वादाः पुण्यप्राप्याः सतां गिरः ॥ २२ ॥

यत्कोशेषु निधीयते धनवनं तृष्णानलस्येन्धनं
कृत्यं यच्च चतुःसमुद्ररसनां व्याप्नोति विश्वंभराम् ।
आहारोऽपि विचित्रतापरिचयी निद्रापि मे भूयसी
सर्वं मोहसुखाय नान्तसमये किंचित्क्वचिद् दृश्यते ॥ २३ ॥

इति संचिन्त्य नृपतिस्तस्मै काञ्चनचार्चितम् ।
प्रणम्य प्रददौ चारुरुचि सचीवरांशुकम् ॥ २४ ॥

व्रजन्तमथ तं मार्गे राजपूजाविराजितम् ।
ध्यानाध्ययनयोगाय देवता समचोदयत् ॥ २५ ॥

ततस्तदुपदेशेन निखिलक्लेशसंक्षयात् ।
साक्षाद्विहितमर्हत्त्वं तेन ध्यानावधानिना ॥ २६ ॥

कदाचिदथ भूभर्तुर्विपुले संघभोजने । D 553
नवः समाययौ भिक्षुर्दिव्यसौरभचीवरः ॥ २७ ॥

अपूर्वगन्धलुब्धालिमालावलयितं नृपः ।
तमपृच्छत्कुतस्तावदयं ते सौरभोद्भवः ॥ २८ ॥

सोऽवदद्देवलोकेऽहं पारिजाततरोस्तले ।
उषितो वार्षिकं कालं तत्पुष्पैरधिवासितः ॥ २९ ॥

एतदाकर्ण्य नृपतिस्तत्प्रभावाधिकादरः ।
रत्नत्रयार्चनासक्तः पुण्यारामरतोऽभवत् ॥ ३० ॥

धर्मस्थितिप्रणयिनी यदि सैव वृत्तिः
सत्योपभोगसुभगा यदि सैव वाणी ।
पर्यन्तचिन्तनरता यदि सैव बुद्धि-
र्दानक्रियोपकरणं यदि सैव लक्ष्मीः ॥ ३१ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
धर्मराजिकाप्रतिष्ठावदानमूनसप्ततितमः पल्लवः ॥



D 555

# ७० माध्यन्तिकावदानम् ।

भक्तिप्रवर्तितजिनोदितवासनानां
तेषां जयत्यभिमतः सुकृताभियोगः ।
यत्कीर्तिलक्षणविशेषनिवेशनेन
पुण्यापि पुण्यतरतामुपयाति पृथ्वी ॥ १ ॥

माध्यन्तिकाभिधो भिक्षुरानन्दस्य गुरोर्गिरा ।
बुद्धशासनमाधातुं ययौ काश्मीरमण्डलम् ॥ २ ॥

तन्नागाधिष्ठितं ज्ञात्वा धीरसत्त्वः समाधिना ।
स संक्षोभं प्रणिदधे नागानां कम्पितावनिः ॥ ३ ॥

शस्त्राग्निवृष्टिरुत्सृष्टा तैरमर्षविकारिभिः ।
प्रभावेणाभवत्तस्य मूर्ध्नि पद्मोत्पलावली ॥ ४ ॥

ततस्तं जगदुर्नागास्तद्वीर्योत्कर्षविस्मिताः ।
यावान् पर्यङ्कबन्धोऽत्र देशस्तावान् वशे तव ॥ ५ ॥

उक्त्वेति तस्मै पर्यङ्कबन्धतुल्यं प्रमाणतः ।
नवद्रोणमुखायामं प्रददुः शून्यमण्डलम् ॥ ६ ॥

D 557 स तत्र नगरग्रामसंनिवेशविशेषकृत् ।
स्थितिं बबन्ध सहितः शतैः पञ्चभिरर्हताम् ॥ ७ ॥

तत्राक्षयं भगवतः स निवेश्य धर्मं
कृत्वा विहाररुचिराभरणां धरित्रीम् ।
तां गन्धमादनतटोद्धृतलब्धसारै-
र्व्याप्तां चकार नवकुङ्कुमकन्दवृन्दैः ॥ ८ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
माध्यन्तिकावदानं नाम सप्ततितमः पल्लवः ॥

## ७१ शाणवास्यवदानम् । D 559

शान्तिस्पृशां विमलशीलदुकूललीला-
शोभाजुषां विषयवेषपराङ्मुखानाम् ।
चीनांशुकैर्मलिनशीर्णपटच्चरैर्वा
नैवाभिमानकलना न च दैन्यवृत्तिः ॥ १ ॥

शाणवासी पुरा भिक्षुर्गुणवान् गुरुशासनात् ।
जिनशासनमाधातुं मथुरां प्रस्थितः पुरीम् ॥ २ ॥

स व्रजन् पथि शुश्राव मल्लयोर्वदतोर्मिथः ।
प्रसङ्गोपगतामेतामार्यामार्यस्वभावयोः ॥ ३ ॥

ये विमलशीलनिलयाः श्रुतविश्रुतचक्षुषः क्षमावन्तः ।
तानेव शाणवासी कथयति भिक्षुर्भुवि श्रमणान् ॥ ४ ॥

एतदुक्त्वाथ तेनापि तदेवोक्तं निशम्य तौ ।
तमूचतुस्त्वमेवासौ शाणवासी न संशयः ॥ ५ ॥

कस्मात्त्वं शाणवासीति सुमते दिक्षु विश्रुतः ।
गाथा गायन्ति मुनयस्तव सद्धर्मवादिनः ॥ ६ ॥

स जगाद मयान्यस्मिञ्जन्मन्यामयपीडितः । D 561
प्रत्येकसुगतः स्वास्थ्यं नीतो वैद्यचिकित्सया ॥ ७ ॥

शाणं शीर्णतरं वासस्तस्य दृष्ट्वा मयाल्पकम् ।
उपनीतं प्रणयिना राजार्हं रुचिराम्बरम् ॥ ८ ॥

सोऽब्रवीन्न सखे मह्यं रोचते रुचिरांशुकम् ।
लभ्यते प्रशमश्लाघ्या शोभा शाणेन वाससा ॥ ९ ॥

इत्यहं तद्वचः श्रुत्वा शीर्णशाणांशुकोत्सुकः ।
सत्सङ्गमाप्तवैराग्यः सद्वस्त्रविमुखोऽभवम् ॥ १० ॥

कालेन तस्य देहान्ते रुचिरार्चाविधायिना ।
मया तत्तुल्यभावाप्त्यै प्रणिधानमतिः कृता ॥ ११ ॥

तेनाहं प्रणिधानेन तत्समभ्यर्चनेन च ।
सशाणवस्त्रः संजातः शाणवासीति विश्रुतः ॥ १२ ॥

इत्युक्त्वा स शनैर्गच्छन्नवाप्य मथुरापुरीम्।
उरुमुण्डाभिधं शैलमारुरोह महोद्यमः ॥ १३ ॥

तत्रोपविश्य पर्यङ्कबन्धेनाकम्पितक्षितिः।
विलीय विषसंनद्धौ नागौ तुमुलवर्ष्मिणौ ॥ १४ ॥

D 563 मथुरावासिनौ श्रेष्ठिसुतौ नटभटाभिधौ।
आदाय सहकृत्याय स विहारं विनिर्ममे ॥ १५ ॥

रत्नोज्ज्वलः स्फटिककाञ्चनरम्यहर्म्यः
पर्यङ्कपीठरचनाशयनाभिरामः।
स्वर्गोपमः सुभगभोगनिधिर्विहारः
पुण्यस्थितिर्नटभटाभिध एव सोऽभूत् ॥ १६ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
शाणवास्यवदानमेकसप्ततितमः पल्लवः ॥



## ७२ उपगुप्तावदानम् । D 565

यैरेव याति विषयैरभिलाषभूमिं
सर्वो जनः स्मररजःपरिभूतदृष्टिः ।
तैरेव पुण्यपरिमार्जनशुद्धिभाजां
वैराग्ययोगमुपयाति मनः प्रशान्तिम् ॥ १ ॥

अभूद्गुप्ताभिधानस्य गान्धिकस्य सुतः पुरा ।
मथुरावासिनः श्रीमानुपगुप्त इति श्रुतः ॥ २ ॥
अजातः कल्पितः पित्रा स भिक्षोः शाणवासिनः ।
अनुयायीति वचनात्तद्भक्तिनिरतोऽभवत् ॥ ३ ॥
वैराग्याभिमुखे तस्मिन्नवयौवनशालिनि ।
भग्नविघ्नगणारम्भश्चितां लेभे मनोभवः ॥ ४ ॥
हरिचन्दनकस्तूरीकर्पूरागुरुविक्रयी ।
स कंचित्कालमकरोद् व्यवहारं पितुर्गिरा ॥ ५ ॥
अथ वासवदत्ताख्या गन्धक्रयविसृष्टया ।
स्वदास्या कथितं श्रुत्वा तं रूपगुणविश्रुतम् ॥ ६ ॥
संजातरागसंवेगा गणिका संगमार्थिनी । D 567
विसृज्याभिमतां दूतीं भावं तस्मै न्यवेदयत् ॥ ७ ॥
स स्वैरमर्थितो दूत्या सस्मितस्तामभाषत ।
अयं नाभिमतः कालस्तस्याः संदर्शने मम ॥ ८ ॥
अथ दूत्यां प्रयातायां सोद्वेगा गणिकाभवत् ।
नानुरागे विरागे वा नियतिर्वेशयोषिताम् ॥ ९ ॥
कदाचिन्मन्दिरे तस्याः स्थिते यूनि वणिक्सुते ।
नवः सार्थपतिः श्रीमानाजगामोत्तरापथात् ॥ १० ॥
विसृष्टे रात्रिभोगाय तेन हेम्नि सहांशुकैः ।
जनन्या सहिता लुब्धा गणिका समचिन्तयत् ॥ ११ ॥
एष तावत्स्थितो गेहे वणिक्सूनुः कृतव्ययः ।
अर्थी महाधनश्चान्यः किं करोमि न वेद्मि तत् ॥ १२ ॥
वान्तचित्तः पुनः कामी न भवत्यधिकप्रदः ।
तेन पर्युषितेनैव क्रियते निष्फलेन किम् ॥ १३ ॥
नवस्त्वभिनवौत्सुक्यात्सर्वं मुञ्चत्ययाचितः ।
अप्रियेऽपि प्रियास्वादं करोति प्रथमादरः ॥ १४ ॥
तस्मात्किमस्य क्रियतामन्तःसक्तस्य शल्यवत् । D 569
अभोगेन न यात्येष कर्मबन्ध इवानुगः ॥ १५ ॥

नास्माकमेतद्वाणिज्यं त्यज्यते यदि वित्तवान् ।
न धर्माय न कामाय वयमर्थाय निर्मिताः ॥ १६ ॥
इति संचिन्त्य सा मातुः संमते द्रविणार्थिनी ।
वरासवेन न्यवधीत्सविषेण वणिक्सुतम् ॥ १७ ॥
निक्षिप्यावस्करचये ततस्तं गतजीवितम् ।
अवाप्य विपुलं वित्तं सार्थवाहं प्रवेश्य सा ॥ १८ ॥
दृष्टः प्रविष्टो गणिकागृहं न तु विनिर्गतः ।
इति बन्धुभिरन्विष्य व्यसुः प्राप्तो वणिक्सुतः ॥ १९ ॥
ततस्तद्वधसंतप्तैः श्रावितस्तैर्महीपतिः ।
वेश्यायास्तीव्रपापार्हमादिदेशोग्रनिग्रहम् ॥ २० ॥
सा वध्यवसुधां नीता मुक्तकेशी निरम्बरा ।
निकृत्तपाणिचरणा छिन्नश्रवणनासिका ॥ २१ ॥
वेष्टयन्ती व्यथाक्रान्ता निजशोणितकर्दमे ।
निवार्यमाणक्रव्यादा दास्या चुक्रोश बन्धकी ॥ २२ ॥
उपगुप्तस्ततस्तस्याः श्रुत्वा विषमवैशसम् ।
तद्विलोकनकालोऽयमित्युक्त्वा तां भुवं ययौ ॥ २३ ॥
D 571 दास्या निवेदितं दृष्ट्वा तमायान्तं शशिद्युतिम् ।
पूर्वाभिलाषशेषेण सा लज्जाकुटिलाभवत् ॥ २४ ॥
अन्तःप्रविष्टः केनापि वासनाभ्यासवर्त्मना ।
न कस्यांचिदवस्थायां रागस्त्यजति देहिनाम् ॥ २५ ॥
जघनावरणं कृत्वा दास्या वसनपल्लवम् ।
सा स्तनन्यस्तहस्ता तं बभाषे विनतानना ॥ २६ ॥
प्रयत्नेनापि महता नायातस्त्वं मयार्थितः ।
अधुना मन्दभाग्यायास्तव संदर्शनेन किम् ॥ २७ ॥
यदा ममाभवत्कोऽपि भाग्यसौभाग्यविभ्रमः ।
न दर्शनस्य कालोऽयमित्युक्तं भवता तदा ॥ २८ ॥
कृत्ताङ्गी रुधिरादिग्धा च्युताहं क्लेशसागरे ।
कालः कमलपत्राक्ष किमयं दर्शनस्य मे ॥ २९ ॥
इति ब्रुवाणां बाष्पाम्बुप्लाव्यमानांशुकाञ्चलाम् ।
शनैरुपगुप्तस्तां सानुतापमभाषत ॥ ३० ॥
D 573 कान्तिश्चन्द्रसखी सुवर्णकदलीलावण्यचौरं वपु-
र्वक्त्रं पद्मनिमीलनं कुवलयक्लैब्यप्रदे लोचने ।
नैतन्मे दयितं मनोहरतरं किं तु प्रयत्नादहं
कामानां प्रकृतिं विचारविरसां द्रष्टुं समभ्यागतः ॥ ३१ ॥

विभूषणांशुकच्छन्ने वरसौरभवासिते ।
शोभा तवाभवत्काये स्वभावः पुनरीदृशः ॥ ३२ ॥
बत बत निहतास्ते कीर्णकेशास्थिसंस्थे
सततमनलतापोत्पच्यमानाखिलाङ्गे ।
कुणपवति रमन्ते ये जुगुप्सानिधाने
व्यसनगणनिधाने कायनाम्नि श्मशाने ॥ ३३ ॥
विस्यन्दिनि दुरामोदे विकृतच्छिद्रसंकुले ।
अहो मोहान्मनुष्याणां कायेऽपि प्रियभावना ॥ ३४ ॥
सापायः कायपर्यायमायाविषयसंश्रयः ।
दुःखस्कन्धः क्षयं याति सुगतोपासनादयम् ॥ ३५ ॥
मोहध्वान्तदिवाकरस्य सकलक्लेशावकाशच्छिदः
शास्तुः शासनसंश्रये प्रणिहितं कल्याणमित्रस्य यैः ।
नैव क्लिन्नकलङ्कपङ्ककलिते कीर्णान्त्रमालाकुले D.575
ते मज्जन्ति विकारभाजि नरके कायाभिधाने पुनः ॥ ३६ ॥
एतदाकर्ण्य गणिका दुःखोद्वेगविरागिणी ।
पुण्यं रत्नत्रयं शान्त्यै शरण्यं शरणं ययौ ॥ ३७ ॥
उपगुप्तकथावाप्तस्रोतःप्राप्तफलाथ सा ।
धर्ममार्गप्रणयिनी दृष्टसत्या व्यपद्यत ॥ ३८ ॥
तस्यां देवनिकायेऽथ संभूतायां प्रभामये ।
मथुरावासिनः श्रुत्वा चक्रुस्तद्देहसत्क्रियाम् ॥ ३९ ॥
अत्रान्तरे शाणवासी समभ्येत्य प्रसन्नधीः ।
प्रव्रज्यामुपगुप्तस्य प्राप्तकालाममन्यत ॥ ४० ॥
सोऽथ प्रव्रजितस्तेन प्राप्यार्हत्पदमुत्तमम् ।
सद्धर्मदेशनारम्भं विदधे पुरवासिनाम् ॥ ४१ ॥
धर्मं प्रदिशतस्तस्य तस्यां पर्षदि साम्प्रतम् ।
चकार मारः प्रचुरां तां तां विघ्नौघविक्रियाम् ॥ ४२ ॥
ववर्ष मौक्तिकं तत्र रुचिरं च सकाञ्चनम् ।
येन व्याक्षिप्तचित्तानां श्रोतॄणामभवद्भ्रमः ॥ ४३ ॥
स कृत्वा हार्यसौन्दर्यं ललितं नर्तकीवपुः । D.577
ननर्त सहितस्तत्र गन्धर्वाप्सरसां गणैः ॥ ४४ ॥
कान्तानृत्यविलासेन हेलापहृतचेतसाम् ।
अभूत्तत्र विनेयानां कामं काममयं मनः ॥ ४५ ॥

अविनीततरस्याथ मारस्य विनयोद्यतः ।
अचिन्तयद्विकाराहामुपगुप्तः प्रतिक्रियाम् ॥ ४६ ॥
सोऽभ्येत्य मारमवदत्तुष्टोऽहं तव कौशलात् ।
अहो नृत्यमहो गीतं दिव्यमेव किमुच्यते ॥ ४७ ॥
उक्त्वेति मालाव्याजेन बबन्धास्य शवत्रयम् ।
मस्तके सर्पकुणपं कर्णे च श्वमनुष्ययोः ॥ ४८ ॥
स्वयं मोक्तुमशक्तोऽसौ मारस्तत्कुणपत्रयम् ।
प्रययौ शरणं देवान् सेन्द्रोपेन्द्रचतुर्मुखान् ॥ ४९ ॥
तेषु मोक्तुमशक्तेषु प्रेरितः पद्मजन्मना ।
भग्नदर्पोऽथ कन्दर्पस्तमेव शरणं ययौ ॥ ५० ॥
स निपत्यातिविनयादुपगुप्तस्य पादयोः ।
प्रसाद्य मदमुत्सृज्य तमुवाच कृताञ्जलिः ॥ ५१ ॥
D 579 कृतं कृतापकारस्य त्वया यदुचितं मम ।
प्रसीद त्यज्यतां मन्युरधुनाहं त्वदाश्रयः ॥ ५२ ॥
अहं कृतापराधोऽपि सुगतेन महात्मना ।
अविनीततरः सूनुर्जनकेनेव रक्षितः ॥ ५३ ॥
बोधिमूले मया तस्य वज्रासनजुषः पुरा ।
कृता निकारनिकरा क्षान्तमेव च तेन मे ॥ ५४ ॥
नानाकारनिकारकारिणि मयि प्राकारतां बिभ्रता
तस्मिन् बोधिसमाधिसिद्धिभवने पर्यङ्कबन्धस्थितौ ।
क्षान्तिक्षालितमन्युना भगवता बुद्धेन शुद्धात्मना
तेन ध्यानपरायणेन न मनागुन्मीलितं लोचनम् ॥ ५५ ॥
भवता त्वद्य करुणामुत्सृज्याहं खलीकृतः ।
सापराधेऽपि महतां न मन्युमलिनं मनः ॥ ५६ ॥
मुञ्च मे कुणपाबन्धं स्थितोऽहं तव शासने ।
इति ब्रुवाणं प्रणयादुपगुप्तस्तमभ्यधात् ॥ ५७ ॥
न करिष्यसि चेदेवं भिक्षूणां विप्लवं पुनः ।
तदेतत्तव मुञ्चामि दृढं कुणपबन्धनम् ॥ ५८ ॥
D 581 इदं च भवता कार्यं प्रियं प्रणयिनो मम ।
अतीतसुगताकारं संदर्शयितुमर्हसि ॥ ५९ ॥
दृष्टा तव मया शक्तिर्नाट्ये सर्वानुकारिणः ।
संदर्शने भगवतः परमुत्कण्ठितो ह्यहम् ॥ ६० ॥

धर्मकायो मया दृष्टः सुगतस्य श्रुतात्मना ।
रूपकायस्तु नैवासौ नयनामृतनिर्भरः ॥ ६१ ॥
इति निर्मुक्तकुणपस्तेनोक्तः कुसुमायुधः ।
तमूचे सौगतं रूपं तुल्यं कर्तुं न शक्यते ॥ ६२ ॥
तथापि दर्शयाम्येष त्वदाज्ञाविनये स्थितः ।
प्रणम्येन प्रणम्योऽहं न त्वया सुगताकृतिः ॥ ६३ ॥
इत्युक्त्वा सुगताकारमविकारसुखप्रदम् ।
स समुत्सृष्टकनकालोककान्तमदर्शयत् ॥ ६४ ॥
दीर्घध्याननिमीललोचनयुगं निःसंभ्रमभ्रूलतं
नासावंशनिषक्तकान्तकनकच्छत्रोपमानालिकम् ।
निर्भूषायतकर्णपाशललितं व्यालम्बिबाहुद्रुमं
बौद्धं रूपमवेक्ष्य निर्वृतिरभून्निश्चेतनानामपि ॥ ६५ ॥
उपगुप्तस्तदालोक्य कान्तं भगवतो वपुः । D 583
सबाष्पपुलकाकीर्णश्चक्रे तत्पादवन्दनम् ॥ ६६ ॥
न च नाम प्रणम्योऽहमिति वादिनि मन्मथे ।
उपगुप्तस्तमवदत्प्रणम्यस्त्वं जिनाकृतिः ॥ ६७ ॥
कृत्रिमेष्वपि विम्बेषु वन्द्या भगवतस्तनुः ।
न स मृत्काष्ठधातूनां प्रणामः क्रियते बुधैः ॥ ६८ ॥
इत्युक्तमुपगुप्तेन श्रुत्वा मारः प्रसन्नधीः ।
विहाय सौगतं रूपं स्वं वपुः प्रत्यपद्यत ॥ ६९ ॥
तेनैवाथ समाहूता विनीतेन हितैषिणा ।
उपगुप्तान्तिकं पौराः सद्धर्मं श्रोतुमाययुः ॥ ७० ॥
तस्योपदेशकथया सत्यदर्शननिर्वृताः ।
लक्षाण्यष्टादश प्रापुरर्हत्त्वं पुरवासिनाम् ॥ ७१ ॥
इति सकललोकालोककल्याणकारी
व्यथिततिमिरहारी धर्ममार्गोपदेशः ।
विपुलकुशलमूलप्राप्तपुण्योदयानां
भवति किल महर्द्धिर्या परेषां हिताय ॥ ७२ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
उपगुप्तावदानं नाम द्वासप्ततितमः पल्लवः ॥

---

D 585

# ७३ नागदूतप्रेषणावदानम् ।

अखण्डितं शासनमायता श्रीः
यशस्तुषारांशुशतावदातम् ।
आश्चर्यचर्यारुचिरः प्रभावः
फलांशलेशः सुगतार्चनस्य ॥ १ ॥

राजा श्रीमानशोकोऽभूत्पुरे पाटलिपुत्रके ।
दानार्थिनामभूद्यस्य संख्याशब्ददरिद्रता ॥ २ ॥

तं कदाचित्सभासीनं वणिजो द्वीपगामिनः ।
सर्वस्वनाशशोकार्ताः सनिःश्वासा व्यजिज्ञपुः ॥ ३ ॥

देव दीर्घभुजच्छायाविश्रान्तभुवनस्य ते ।
राज्ये न दृश्यते कश्चिच्चिन्तासंतापिताशयः ॥ ४ ॥

अस्माकं तु प्रवहणं भङ्क्त्वा रत्नधनं हृतम् ।
केवलं भाग्यदौर्बल्यान्नागैः सागरवासिभिः ॥ ५ ॥

वयमन्यत्र जीवामस्तदुपेक्षा तु ते विभो ।
D 587 समुद्रयात्राविच्छेदात्कोशशोषविधायिनी ॥ ६ ॥

इति तेषां वचः श्रुत्वा राजा संक्रान्ततद्व्यथः ।
समुद्रान्तर्गतान्नागान् विचिन्त्य स्तिमितोऽभवत् ॥ ७ ॥

तं दृष्ट्वा निष्प्रतीकारकोपव्याकुलमानसम् ।
इन्द्रो नामाब्रवीद् भिक्षुः षडभिज्ञः स्थितोऽन्तिके ॥ ८ ॥

नागानां रत्नचौराणां त्वत्प्रतापाग्निसूचकः ।
ताम्रपट्टार्पितो लेखः प्रेष्यतां पृथिवीपते ॥ ९ ॥

इति भिक्षुवचः श्रुत्वा लेखं राजा विसृष्टवान् ।
क्षिप्तमेव तमम्भोधौ नागास्तीरे प्रचिक्षिपुः ॥ १० ॥

नृपस्तेनावमानेन विच्छायवदनाम्बुजः ।
चिन्तासुप्तमतिस्तस्थौ श्वसन्नासार्पिताङ्गुलिः ॥ ११ ॥

निद्रा पराङ्मुखी तस्य क्लीबस्येवाङ्गनाभवत् ।
दीर्घा तृष्णेव लुब्धस्य न च रात्रिः क्षयं ययौ ॥ १२ ॥

तं व्योमदेवताभ्येत्य परार्थोद्यतमभ्यधात्।
उपाये सति भूपाल न चिन्तां कर्तुमर्हसि ॥ १३ ॥

ये पूजयन्ति जिनमञ्जलिरञ्जितेन
मूर्ध्ना प्रणामपरिणाममहार्हपुण्याः।
तेषां सुरा अपि सुवर्णविचित्रशोभा- D 589
माज्ञास्रजं विजयिनां शिरसा वहन्ति ॥ १४ ॥

एतदाकर्ण्य नृपतिः प्रातः स्नातः शुचिव्रतः।
सिद्धौ शुद्धेन मनसा ध्यात्वा बुद्धं समभ्यधात् ॥ १५ ॥

सत्त्वस्मेरं सरसकरुणाकौमुदीपूरिताशं
शान्त्यै कान्तं सकलतमसां शुक्लपक्षे निविष्टम्।
नित्यानन्दं परमममृतं निर्विकारं सृजन्तं
वन्दे तापप्रशमसुहृदं बुद्धपूर्णेन्दुबिम्बम् ॥ १६ ॥

चित्तं सदा विषयदोषपराङ्मुखानां
येषां वशे परमपारमिताश्रयाणाम्।
ते मे परं परहिताभिनिवेशभाजः
संकल्पकल्पतरवः कुशलं दिशन्तु ॥ १७ ॥

इति भक्तिविधानेन प्रणिधानेन भूपतेः।
सहस्राण्यर्हतां षष्टिस्तूर्णं दिग्भ्यः समाययुः ॥ १८ ॥

अथेन्द्रो भिक्षुराकारं हैमं रम्यमकारयत्।
सदृशं नृपतेरेकं नागराजस्य चापरम् ॥ १९ ॥

ततः क्षितिपतेर्मूर्तिर्विननाम शनैः शनैः। D 591
उन्ननाम च नागेन्द्रमूर्तिर्विस्मयकारिणी ॥ २० ॥

यथा यथा नृपश्चक्रे सदा रत्नत्रयार्चनम्।
तथा तथा नागमूर्तिर्विननामोद्ययौ पुरा ॥ २१ ॥

अथ राज्ञा पुनर्लेखे प्रहिते नागपुंगवाः।
स्कन्धार्पिताखिलवणिग्रत्नभाराः समाययुः ॥ २२ ॥

तदशेषं नरपतिर्वितीर्य वणिजां धनम्।
विसृज्य नागानभवज्जिनशासनसादरः ॥ २३ ॥

स विधायार्हतां पूजामुपचारैर्नृपोचितैः।
बभूवानल्पसंकल्पैर्बुद्धसंदर्शनोत्सुकः ॥ २४ ॥

दुर्लभे परिनिर्वाणनिलीनजिनदर्शने ।
उपगुप्तं स शुश्राव सुगतप्रतिमं गुणैः ॥ २५ ॥

विधेयं भक्तियुक्तानां नृपः प्रणयिवत्सलः ।
उरुमुण्डस्थितं दूतैरानिनाय तमादरात् ॥ २६ ॥

तत्सपर्याप्तपर्यन्तसद्धर्मकुशलोदयः ।
बभूव सततं राजा रत्नत्रयपरायणः ॥ २७ ॥

D 593 इति जिनस्मरणेन महीपतिः
प्रसभपुण्यमहोदयसंपदा ।
विषभृतामपि मौलिषु शासनं
कुसुमदामविलासमवाप्तवान् ॥ २८ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
नागदूतप्रेषणावदानं नाम त्रिसप्ततितमः पल्लवः ॥



## ७४ पृथिवीप्रदानम् । D 595

पुण्यं प्रणामपथमेति कथं न तेषां
दानोद्यताः सपदि गामिव लीलयैव ।
पूर्णाङ्गपुण्यरुचिरां पृथुमध्यदेशां
ये गां स्ववत्ससहितां प्रतिपादयन्ति ॥ १ ॥
अथाशोकः क्षितिपतिर्दानाभ्यासेन भूयसा ।
अभ्यागतप्रणयिनां प्रययौ कल्पवृक्षताम् ॥ २ ॥
राजोचितैः स सततं भोजनाभरणाम्बरैः ।
भिक्षुलक्षत्रयं गेहे भक्तिपूजैरपूजयत् ॥ ३ ॥
हेमकोटिशतं दातुं स्थिरोऽभूद्यस्य निश्चयः ।
सत्त्वमेव स्थिरतरः कोशः कुशलशालिनाम् ॥ ४ ॥
साम्राज्ये भूरिविभवः षड्विंशद्भिः( °शत्या ) स वत्सरैः ।
हेम्नः षण्णवतिं कोटिं ददौ संघाय सत्त्वधीः ॥ ५ ॥
ततः कालेन नृपतिर्व्याधिना ग्लानिमाययौ ।
स्थिराणि सुकृतान्येव न शरीराणि देहिनाम् ॥ ६ ॥
तनुमासन्नपर्यन्तां निश्चित्य पृथिवीपतिः ।
भिक्षुभ्यः कुक्कुटारामे द्रविणं दातुमुद्ययौ ॥ ७ ॥
तत्पौत्रः संपदी नाम लोभान्धस्तस्य शासनम् । D 597
दानपुण्यप्रवृत्तस्य कोशाध्यक्षैरवारयत् ॥ ८ ॥
दाने निषिद्धे पौत्रेण संघाय पृथिवीपतिः ।
भैषज्यामलकस्यार्धं ददौ सर्वस्वतां गतम् ॥ ९ ॥
धीमतः संमतेनाथ राधगुप्तस्य मन्त्रिणः ।
ददौ संघाय निखिलां पृथिवीं पृथिवीपतिः ॥ १० ॥
गङ्गाम्बुभाररुचिरां चतुरम्बुराशि-
वेलाविलासवसनां मलयावतंसाम् ।
दत्वाखिलां वसुमतीं स समाससाद
पुण्यं प्रमाणकलनारहितं हिताय ॥ ११ ॥
प्रख्यातषण्णवतिकोटिसुवर्णदाने
याते दिवं नरपतावथ तस्य पौत्रः ।
शेषेण मन्त्रिवचसा क्षितिमाजहार
स्पष्टं क्रयी कनककोटिचतुष्टयेन ॥ १२ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
पृथिवीप्रदानं चतुःसप्ततितमः पल्लवः ॥

D 599

## ७५ प्रतीत्यसमुत्पादावदानम् ।

सर्वमविद्यामूलं संसारतरुप्रकारवैचित्र्यम् ।
ज्ञातुं वक्तुं हन्तुं कः शक्तोऽस्त्यन्यत्र सर्वज्ञात् ॥ १ ॥
श्रावस्त्यां स्वस्तिमान् पूर्वं जिनो जेतवने स्थितः ।
अशेषदर्शी भगवान् भिक्षुसंघमभाषत ॥ २ ॥
शृणुत श्रेयसे प्रज्ञालोकनिर्मलमानसाः ।
प्रतीत्यसमुत्पादं वः कथयामि यथाक्रमम् ॥ ३ ॥
अविद्यावासनैवेयं दुःखस्कन्धस्य भूयसः ।
संसारविषवृक्षस्य मूलबन्धविधायिनी ॥ ४ ॥
तत्प्रत्ययास्तु संस्काराः कायवाङ्मानसात्मकाः ।
संस्कारोत्थं तु विज्ञानं मनःषष्ठेन्द्रियात्मकम् ॥ ५ ॥
तत्प्रत्ययं नामरूपं संज्ञासंदर्शनाभिधम् ।
मनः षष्ठेन्द्रियस्थानं षडायतनमप्यतः ॥ ६ ॥
षडायतनसंश्लेषः स्पर्श इत्यभिधीयते ।
षट्स्पर्शानुभवो यश्च वेदना सा प्रकीर्तिता ॥ ७ ॥
D 601
तथा विषयसंश्लेषरागात् तृष्णा प्रजायते ।
कामादिषु तदुद्भूतमुपादानं प्रवर्तते ॥ ८ ॥
उपादानोद्भवः कामरूपारूप्यमयो भवः ।
नानायोनिपरावृत्त्या जातिर्भवसमुद्भवा ॥ ९ ॥
जरामरणशोकादिसंततिर्जातिसंश्रया ।
अविद्यादिनिरोधेन तेषां व्युपरमक्रमः ॥ १० ॥
प्रतीत्योत्पादोऽयं बहुगतिरविद्याकृतपदः
स चिन्त्यो युष्माभिर्विजनवनविश्रामशमिभिः ।
परिज्ञातः सम्यग्व्रजति किल कालेन तनुतां
तनुत्वं संप्राप्तः सुखतरनिवार्यश्च भवति ॥ ११ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
प्रतीत्यसमुत्पादावदानं पञ्चसप्ततितमः पल्लवः ॥



## ७६ विदुरावदानम् । D 603

क्रोधः संनिहितः प्रतप्तमनसामीर्ष्यावशात्कामिनां
क्रोधान्धा निपतन्ति तीव्रतिमिरश्वभ्रे मतिध्वंसिनः ।
तत्र क्रूरतरप्रकारनरकक्लेशात्प्रमूर्च्छाजुषा-
माकल्पक्षुरतल्पकल्पविषमक्षोणीक्षतानां क्षयः ॥ १ ॥

नदीमजिरवत्याख्यां श्रावस्त्यां भगवान् जिनः ।
संप्राप्तः सत्त्वमद्राक्षीदावृतं विकृतं जनैः ॥ २ ॥

महाकायं कृमिकुलैर्भक्ष्यमाणं व्रणोद्भवैः ।
सूचयन्तं व्यथारावैर्नरकस्थितिवैशसम् ॥ ३ ॥

तं दृष्ट्वा जातकरुणः सर्वज्ञस्तटिनीतटे ।
उपाविशत्पौरजनैरासने परिकल्पिते ॥ ४ ॥

सोऽवदद्विकृताकारं जात्यन्धं महिषोपमम् ।
कृत्वा जातिस्मरं सद्यस्तद्रूपेण समाधिना ॥ ५ ॥

अपि को विदुर क्रूरकर्मणो भुज्यते फलम् । D 605
अपि दौर्जन्यजननी सा मतिः स्मर्यते त्वया ॥ ६ ॥

श्रुत्वैतत्सुगतेनोक्तं स मनुष्यगिराब्रवीत् ।
तीव्रपापस्य भगवन् भुज्यते विपुलं फलम् ॥ ७ ॥

इति तस्य ब्रुवाणस्य जातिसंस्मरणात्परम् ।
किमेतदिति पप्रच्छ भिक्षुसंघं महाजनः ॥ ८ ॥

आश्चर्यवृत्तं भगवानानन्देनाथ भिक्षुणा ।
तत्कर्म कौतुकात्पृष्टः सर्वज्ञस्तमभाषत ॥ ९ ॥

उज्जयिन्यामभूत्पूर्वं विदुरो नाम भूपतिः ।
अशोक इव लोलाक्षीचरणाहतिकौतुकी ॥ १० ॥

स कदाचिद्वधूवृन्दैर्मधौ मधुपबान्धवे ।
विललासानिलालोलतालललितकानने ॥ ११ ॥

ता भूमिपालललनास्तत्र पुष्पोच्चयाकुलाः ।
विचेरुर्नूपुरारावतरंगितविहंगमाः ॥ १२ ॥

एकान्ते तत्र विश्रान्तं कान्ताः शान्तेरिवाश्रयम् ।
प्रत्येकबुद्धमर्हद्भिर्ददृशुः परिवारितम् ॥ १३ ॥

स्थितं पर्यङ्कबन्धेन ध्यानस्तिमितलोचनम् । D 607
तं दृष्ट्वा सहसैवासां प्रसन्नमभवन्मनः ॥ १४ ॥

ध्यानान्ते ता दिशन्तं तं धर्मं शुद्धमिवामृतम् ।
परिवार्योपविविशुः कृतपादाभिवन्दनाः ॥ १५ ॥
नृपस्तं देशमभ्येत्य स्त्रैणं दृष्ट्वा तदुन्मुखम् ।
शारीरं शुद्धशीलानां तासां निग्रहमादिशत् ॥ १६ ॥
तेन पापेन विपुलं कालं नरकसंकरे ।
यक्षोऽयं विकृतैः सत्त्वैर्भक्ष्यमाणो दुराकृतिः ॥ १७ ॥
आपादमस्तकानेकविकारिव्रणसंभवैः ।
कीर्णं कृमिकुलैः कायं पश्यतास्य जुगुप्सितम् ॥ १८ ॥
कल्पान्ते नरकं भुक्त्वा चण्डालत्वमुपागतः ।
प्रत्येकबुद्धं मृगयाशीलोऽयं निहनिष्यति ॥ १९ ॥
पुनर्नरकसंक्लेशशीर्यमाणायताकृतिः ।
संख्यातीतेन कालेन प्रयास्यति मनुष्यताम् ॥ २० ॥
शास्तुरुत्तरसंज्ञस्य ततः क्षपितकिल्बिषः ।
दीर्घक्लेशानलोद्विग्नः शासने प्रव्रजिष्यति ॥ २१ ॥
D 609 उद्याने काशिराजस्य कान्ताभिः पूजितस्ततः ।
ईर्ष्याकोपेन शारीरमवाप्स्यत्युग्रनिग्रहम् ॥ २२ ॥
ततोऽस्य तीव्रदुःखाग्नेरवसानं भविष्यति ।
इति शास्तुर्वचः श्रुत्वा सर्वे वैराग्यमाययुः ॥ २३ ॥

उद्विग्नानामथ भवभयक्लेशचिन्तातुराणां
शास्तुः पूर्णैरमृतविसरैर्वाङ्मयैस्तत्र तेषाम् ।
सक्ताह्लादैः कुशलसलिलैः प्लाव्यमानाशयानां
तापः क्वापि प्रशमकुसुमारामभाजां जगाम ॥ २४ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
विदुरावदानं षट्सप्ततितमः पल्लवः ॥

# ७७ कैनेयकावदानम् । D 611

खलोत्कर्षेण सर्वस्य गुणग्लानिः प्रजायते ।
भवत्यभ्युदयायैव प्रभावस्तु महात्मनाम् ॥ १ ॥

आह मायावनोपान्ते भगवान् सुगतः पुरा ।
सूतागारगुहागर्भे तस्थौ ध्यानपरायणः ॥ २ ॥

तत्र तीव्राशनिस्फोटनिष्पिष्टवृषकर्षकः ।
तेन ध्यानविलीनेन घनशब्दोऽपि न श्रुतः ॥ ३ ॥

ध्यानान्तेऽथ प्रवचनं शास्तुर्मन्दाकिनीतटे ।
चत्वारः श्रोतुमाजग्मुर्महाराजाभिधाः सुराः ॥ ४ ॥

धृतराष्ट्र-विरूढाख्य-विरूपाक्ष-धनाधिपाः ।
ते कीर्णरत्नकुसुमास्तस्य पादौ ववन्दिरे ॥ ५ ॥

तेषां त्वाचार्यजातीयौ धृतराष्ट्रविरूढकौ ।
द्वावन्यौ क्रूरजातीयौ तेषां स्वोचितभाषया ॥ ६ ॥

सद्धर्मदेशनां चक्रे भगवान् भूतभावनः ।
येन शासनधर्मेषु बभूवुस्ते विशारदाः ॥ ७ ॥

शिक्षापदप्रणयिनस्ते रत्नत्रयमाश्रिताः ।
नत्वा भगवतः पादौ विमानैस्त्रिदिवं ययुः ॥ ८ ॥

तेषु यातेषु भगवान् भिक्षुभिर्जातविस्मयैः । D 613
प्राक्पुण्यसंचयं तेषां पृष्टः प्रोवाच सर्ववित् ॥ ९ ॥

अल्पाश्वासमहाश्वासौ पुरा नागौ बभूवतुः ।
तद्द्वेषिणौ सुपर्णौ च चूडिर्मिटिस्वरस्तथा ॥ १० ॥

नागौ काश्यपसंज्ञस्य शास्तुः संप्राप्य शासनम् ।
सुपर्णयोरप्रधृष्टावभूतां बलशालिनौ ॥ ११ ॥

द्वेषस्पर्धाभिमानेन सुपर्णावपि काश्यपात् ।
गृहीत्वा शासनं रत्नत्रयं शरणमापतुः ॥ १२ ॥

तौ नागाचार्यजातीयौ धृतराष्ट्रविरूढकौ ।
क्रूरौ सुपर्णौ तावेतौ विरूपाक्षधनाधिपौ ॥ १३ ॥

जिनस्येति ब्रुवाणस्य पुण्यं सुवचनामृतम् ।
तद्वनोपान्तनिलयः श्रुत्वा कैनेयको मुनिः ॥ १४ ॥

विस्मितस्तत्प्रभावेण तमेव शरणं गतः।
अनागामिफलास्याभूत्सत्यदर्शननिर्वृतः॥ १५॥

तद्भागिनेयः शैलोऽपि तथैव विनयाश्रितः।
अनागामिफलोदारं सत्यदर्शनमाप्तवान्॥ १६॥

D 615 तौ सानुगौ भगवतः प्रसन्नौ धर्मशासने।
प्रव्रज्यां समुपादाय श्लाघ्यमर्हत्त्वमापतुः॥ १७॥

ततस्तदवशिष्टानां चक्रुः सुगतशासनात्।
कफिणः शारिपुत्रश्च मौद्गल्यश्चापि देशनाम्॥ १८॥

मनःप्रसादमालोक्य परं कैनेयशैलयोः।
तत्पूर्वपुण्यं भगवान् पृष्टो भिक्षुभिरभ्यधात्॥ १९॥

एतौ गृहपती पूर्वजन्मन्यङ्गाङ्गनाभिधौ।
सुहृदौ धर्मनिरतौ वाराणस्यां बभूवतुः॥ २०॥
चरितब्रह्मचर्यौ तौ काश्यपस्यान्तिके गुरोः।
पर्यन्तप्रणिधानेन प्राप्तावद्य प्रशान्तताम्॥ २१॥

कथितमिति तथागतेन पुण्यं
मुनिवरयोः प्रणिधानजं निशम्य।
अभवदवहितः प्रशान्तियुक्त्या
भवभुजगाभिभवाय भिक्षुसंघः॥ २२॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
कैनेयकावदानं सप्तसप्ततितमः पल्लवः॥



## ७८ शक्रच्यवनावदानम् । D 617

उत्तुङ्गशृङ्गमधिरोहति कौतुकस्य
तेषां प्रभावमहिमा महतां महार्हः ।
ये पातयन्त्यशिरसं शमनप्रगल्भां
दृष्टिं दयाप्रणयिनीं त्रिदशेश्वरेऽपि ॥ १ ॥

समासीनः पुरा शक्रः त्रिदिवच्युतिलक्षणैः ।
स्पृष्टः सिंहासनोत्सङ्गे न रतिं प्रत्यपद्यत ॥ २ ॥
सुवर्णरुचिरा तस्य मौलौ मन्दारमालिका ।
अपुण्योत्सन्नतारुण्या श्रीरिव म्लानतां ययौ ॥ ३ ॥
यशःशुभ्रे विलोपाय तिलके तस्य चक्रिरे ।
अपवादा इव नवाः पदं स्वेदोदबिन्दवः ॥ ४ ॥
आसन्नपतनस्याथ चिन्तासंसक्तचेतसः ।
ईर्ष्यारुष्टेव प्रययौ तस्य दूरतरं धृतिः ॥ ५ ॥
शुचः परिचितं दृष्ट्वा तमूचे चकिता शची ।
आसन्नेऽस्मिन्निपतने चिन्त्यतामवलम्बनम् ॥ ६ ॥
अलङ्घ्यं नास्ति लोकेषु विपदामिति निश्चयः ।
तवापि जगतां पत्युर्यदिमाः क्लेशविप्लुषः ॥ ७ ॥
सर्वथा खलवैमुख्यादन्विष्यान्विष्य यत्नतः । D 619
महद्भिः सङ्गमिच्छन्ति गुणलुब्धा इवापदः ॥ ८ ॥
अवतीर्य स्वयं तावज्जम्बुद्वीपं त्वया विभो ।
मृग्यतां श्रमणः कश्चिद्व्यसने रक्षणक्षमः ॥ ९ ॥
प्रभावविपुलोत्कर्षाः श्रूयन्ते श्रमणाः किल ।
युज्यन्ते कुशलैरेव येषां कुशलगामिनः ॥ १० ॥
इति प्रियावचः श्रुत्वा तथेत्युक्त्वा मरुत्पतिः ।
क्षितिमभ्येत्य पप्रच्छ श्रमणान् क्लेशसंक्षयम् ॥ ११ ॥
शक्रप्रणयमात्रेण ते प्रभावाभिमानिनः ।
बभूवुरञ्जलिव्यग्रास्तत्प्रणामनताननाः ॥ १२ ॥
ते कुर्वन्ति कथं रक्षां मामेव प्रणमन्ति ये ।
पतिर्ध्यात्वेति मरुतां भग्नाशः स्वपदं ययौ ॥ १३ ॥
ततः स सुगतं ज्ञात्वा संप्राप्तपरमामृतम् ।
प्रत्यासन्ने निपतने परित्राणममन्यत ॥ १४ ॥
इन्द्रमालगुहागर्भस्थितं सोऽथ तथागतम् ।
तेजोधातुसमापन्नं ययौ द्रष्टुं सहानुगैः ॥ १५ ॥

D 621 गुहान्तिकमथासाद्य ससहायः शचीपतिः।
ऊचे पञ्चशिखं नाम गन्धर्वसुतमादरात्॥ १६॥
तेजोधातुसमापन्नं भगवन्तं तथागतम्।
स्वकलाकौशलेन त्वं प्रबोधयितुमर्हसि॥ १७॥
उपसर्पत्यकाले यः प्रविशत्यनिवेदितः।
अनाशयज्ञः स सतामवमानस्य भाजनम्॥ १८॥
इत्युक्तः सुरराजेन धीमान् गन्धर्वदारकः।
वैदूर्यदण्डामकरोद्वीणां सुस्वरसारणाम्॥ १९॥
स्वभावमधुरोदाररम्याभिः स्तुतिगीतिभिः।
स विबोध्य जिनं चक्रे दर्शनावसरं हरेः॥ २०॥
ततः प्रविश्य सुगतं देवैः सह शतक्रतुः।
ददर्श हर्षजननं वर्षन्तं प्रशमामृतम्॥ २१॥
स प्रणामानतः शास्तुर्नखदर्पणमार्जनम्।
चकार मौलिमन्दारमकरन्देन पादयोः॥ २२॥
ततस्तस्य प्रविष्टस्य प्रसादं विदधे जिनः।
सत्यसंदर्शनाद्येन धर्मचक्षुर्बभूव सः॥ २३॥
D 623 परिच्युतः स सहसा स्वमेवासनमाप्तवान्।
तेन पुण्यप्रभावेण प्रशान्तश्च्युतिलक्षणः॥ २४॥
यावज्जीवं स सुगतं शरण्यं शरणं गतः।
अतिक्रान्तोऽहमित्युक्त्वा तमामन्त्र्य ययौ दिवम्॥ २५॥
ललितां तुम्बुरुसुतां ददौ पञ्चशिखाय सः।
ऋणवत्कुरुते चिन्तामुपकारकृणः सताम्॥ २६॥
शक्रस्य कुशलावाप्त्या प्रत्ययोद्भूतविस्मयैः।
भिक्षुभिर्भगवान् पृष्टः सर्वज्ञस्तानभाषत॥ २७॥
शोभावत्यां पुरि पुरा शोभाख्यः पृथिवीपतिः।
क्रकुच्छन्दस्य शारीरं स्तूपं शास्तुरकारयत्॥ २८॥
तत्पूर्वपुण्यप्रणिधानयोगात्
प्राप्तः स राजा त्रिदशेश्वरत्वम्।
धर्मानुबद्धां भगवान् विभूति-
मुक्त्वेति वाणीमनयत्प्रशान्तिम्॥ २९॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
शक्रच्यवनावदानमष्टसप्ततितमः पल्लवः॥

———

## ७९ महेन्द्रसेनावदानम् । D 625

स्त्रीभिर्विमोहितमतेर्गृहराक्षसीभि-
विंत्तप्रवृत्तमनसः सुखवाञ्छयैव ।
क्लेशाः पतन्ति परुषाः पुरुषस्य देहे
गच्छन्ति नाम न विना प्रशमं शमं ये ॥ १ ॥

श्रावस्त्यां ब्राह्मणः पूर्वं जीवशर्माभिधोऽभवत् ।
वयसोऽर्धं श्रुताध्यायी ब्रह्मचर्यं चचार सः ॥ २ ॥

स जराशबलश्मश्रुः स्नेहाद्बन्धुभिरर्थितः ।
धर्ममार्गानुरोधेन विदधे दारसंग्रहम् ॥ ३ ॥

पत्नी तरलिका नाम तरुणी तरलेक्षणा ।
नैव संभोगलुब्धस्य तस्यातिदयिताभवत् ॥ ४ ॥

तस्या ज्वरोऽयमेतस्मिन्नरुचिः सुतरामभूत् ।
अभक्तरक्ताः संसक्तविरक्ता एव योषितः ॥ ५ ॥

साचिन्तयदनर्होऽयं जरासारशिरोरुहः ।
मम यौवनदर्पेऽस्मिन्नपुण्योपनतः पतिः ॥ ६ ॥

वृद्धस्य तरुणीभोगः शरीरक्षयसूचकः । D 627
केशग्रहेण जरया वात्सल्येनेव वार्यते ॥ ७ ॥

किंचित्संकोचकुटिलः प्रयाति स्थविरः शनैः ।
हारितं यौवनमणिं वीक्षमाण इवावनौ ॥ ८ ॥

वृद्धेन परलोकार्थमानीता यदि धीमता ।
परभोगप्रणयिनी तत्तदेव करोम्यहम् ॥ ९ ॥

अन्तर्गृहगते त्वस्मिन्न शक्यं चौरकामिभिः ।
प्रेमनिर्दयसंभोगनिर्गलसुखं मया ॥ १० ॥

इति संचिन्त्य साभ्येत्य शनैः पतिमभाषत ।
लज्जमानेव विनयादाभिजात्यानुकारिणी ॥ ११ ॥

गृहसक्तेन भवता निर्व्यापारसुखैषिणा ।
हस्तेनाकृष्य दारिद्र्यमानीतं बत दुःसहम् ॥ १२ ॥

उद्योगद्वेषिणस्तीव्रमालस्यं यस्य वल्लभम् ।
बहुव्ययप्रवाहार्हं विवाहं स करोति किम् ॥ १३ ॥

यस्यालस्याद्गृहपतिर्गृहकोणं न मुञ्चति ।
धनार्जनाय निर्यान्तु मुग्धास्तत्र किमङ्गनाः ॥ १४ ॥

D 629 सोत्साहः पुरुषो यत्र व्यवहाररतिर्बहिः।
गृहव्यापारसक्ता स्त्री सर्वास्तत्र सुसंपदः॥ १५॥

अभूषणमनम्बरं मलिनकोणलीनाङ्गनं
विशीर्णशयनासनं स्फुटितवारिधानीघटम्।
अदासमनुपस्करं चिरनिवृत्तमन्थस्वनं
गृहं विरतकर्मणां भवति भग्नभोगोत्सवम्॥ १६॥

इत्युक्तः स तया विप्रः प्रतस्थे द्रविणोन्मुखः।
पतन्ति विषयश्वभ्रे ह्यपि योषिद्वशीकृताः॥ १७॥

स सागरान्तां वसुधां भ्रान्त्वा लब्धप्रतिग्रहः।
कालेन स्वपुरीं प्राप संपूर्णकनकाम्बरः॥ १८॥

गृहोत्कण्ठोत्कराक्रान्तः पुरीपर्यन्तकानने।
शरीरमात्रशेषोऽभूद्दस्युभिर्मुषितोऽथ सः॥ १९॥

अनर्थोपार्जितोऽप्यर्थः सामर्थ्येन सुखार्थिना।
करोत्यनिच्छया धातुर्मरुवारिकणायितम्॥ २०॥

सोऽचिन्तयदहो यत्नादपि वित्तं मयार्जितम्।
अभाग्ययोगाद्यातं मे स्वप्नदर्शनतुल्यताम्॥ २१॥

D 631 शून्यपाणिर्धनार्थिन्याः पत्न्याः प्राप्याहमन्तिकम्।
न जीवाम्यवमानोग्रविषैः परुषभाषितैः॥ २२॥

तस्मादिहैव मे सद्यः पाशेनोद्बन्धनं हितम्।
दारिद्र्योपद्रवक्रूरं स्त्रीशस्त्रं न सहे गृहम्॥ २३॥

इति संचिन्त्य स लतापाशं कण्ठे न्यवेशयत्।
तीव्रक्लेशविषाणानां निधनं बन्धुसंगमः॥ २४॥

अत्रान्तरे कृपासिन्धुर्भगवान् भूतभावनः।
दुःखं ज्ञात्वास्य सर्वज्ञस्तदर्थं वनमाययौ॥ २५॥

दययाश्वासितस्तेन त्यक्त्वा पाशमथ द्विजः।
तद्दत्तं निधिमादाय तं प्रणम्य ययौ गृहम्॥ २६॥

तस्य भार्या धनेनापि न जगामानुकूलताम्।
परसंस्पर्शरागिण्यस्तुष्यन्त्यर्थेन न स्त्रियः॥ २७॥

स कालेन महारम्भभोगेऽप्युद्विग्नमानसः।
अचिन्तयदहो नास्ति संसारे तत्त्वतः सुखम्॥ २८॥

दारिद्र्यतुल्यं किमिहास्ति दुःखं
धनार्जनं दुःखतरं ततोऽपि ।
धनोपभोगः सुखलेशदिग्धः D 633
पदे पदे दुःखशतानि सूते ॥ २९ ॥

विरक्तश्चिन्तयित्वेति स गत्वा जेतकाननम् ।
भगवन्तं भवोच्छित्त्यै शास्तारं शरणं ययौ ॥ ३० ॥

तस्याशयं सानुशयं धातुं ज्ञात्वा गतिं तथा ।
भगवान् धर्मभैषज्यं भवरोगभिषग्ददौ ॥ ३१ ॥

स दृष्टसत्यः प्रव्रज्यां समादाय प्रसादिना ।
सर्वक्लेशप्रहाणार्हमर्हत्त्वं समवाप्तवान् ॥ ३२ ॥

तस्य तामद्भुतां सिद्धिं दृष्ट्वा विपुलविस्मयैः ।
भिक्षुभिर्भगवान् पृष्टस्तद्वृत्तान्तमभाषत ॥ ३३ ॥

पुरा महेन्द्रसंज्ञोऽभूद्वाराणस्यां नरेश्वरः ।
यस्याग्र्या सर्वसत्त्वेषु दयेव दयिताभवत् ॥ ३४ ॥

यं जनः परदेशेभ्यस्तीव्रं कुगतितापितः ।
छायावृक्षमिवाभ्येत्य सन्मार्गस्थमशिश्रियत् ॥ ३५ ॥

कदाचित्प्रतिसामन्तैर्निरुद्धनगरोऽपि सः ।
अक्रोधः सर्वनिधने न युद्धे विदधे धियम् ॥ ३६ ॥

तं विज्ञाय निरुत्साहं विरक्ताः सर्वमन्त्रिणः । D 635
लुब्धा द्रविणमादाय बभूवुः शत्रुसंश्रयाः ॥ ३७ ॥

अथ प्राणिवधोद्वेगत्यक्तराज्यः स भूपतिः ।
अलक्षितः क्षमाक्षेत्रमेकाकी काननं ययौ ॥ ३८ ॥

प्रभुभक्तिं समुत्सृज्य सत्त्वं लज्जां च दुर्जनाः ।
अमात्याः प्रतिसामन्तं लोभान्धाश्चक्रिरे नृपम् ॥ ३९ ॥

नवस्य नृपतेः पार्श्वे नवा एव जजृम्भिरे ।
स्वस्वामित्यागिनां लग्नमनौचित्यं तु केवलम् ॥ ४० ॥

ते नवस्य क्षितिपतेर्द्वारस्थैर्वारिताश्चिरम् ।
खेदादात्मानमुद्दिश्य जगुर्निःश्वस्य लज्जिताः ॥ ४१ ॥

महेन्द्रसेनं संत्यज्य पेशलं सुलभं प्रभुम् ।
परद्वारि वयं पापाः शापतापं सहामहे ॥ ४२ ॥

त्यक्तः श्रीजनकः सुरासुरवरव्याकीर्णरत्नोत्करः
स स्वच्छः पयसां निधिः पृथुतरः शून्याशयेन त्वया।
हे नीचोन्मुख शङ्ख मूर्ख कुपतेर्द्वारेऽधुना लम्बसे
तूष्णीमास्ख खले न मत्कृतमुखस्तारं किमाक्रन्दसि ॥ ४३ ॥

D 637 नवराज्यातपे तीव्रे मन्त्रिणामिति शोचताम्।
महेन्द्रसेनचन्द्रस्य स्पृहा संदर्शनेऽभवत् ॥ ४४ ॥

अस्मिन्नवसरे राज्ञः शमारामवनस्थितेः।
समीपं कौशिको नाम ब्राह्मणोऽर्थी समाययौ ॥ ४५ ॥

स विश्रान्तः कृतातिथ्यः फलमूलैर्महीभुजा।
पृष्टः प्रोवाच विनयात्तत्रागमनकारणम् ॥ ४६ ॥

सर्वार्थिसार्थसंकल्पकल्पवृक्षमहाफलम्।
महेन्द्रसेनं गच्छामि दारिद्र्याद्याचितुं नृपम् ॥ ४७ ॥

एतदाकर्ण्य नृपतिस्तमभाषत दुःखितः।
आशागतार्थिवैमुख्यतापोष्णं निःश्वसन् मुहुः ॥ ४८ ॥

ब्रह्मन् महेन्द्रसेनोऽहं धिङ्मां विरहितं श्रिया।
वैमुख्याद्यस्य संतापमर्थी त्वं दातुमागतः ॥ ४९ ॥

किं निष्फलेन वपुषा शुष्कवृक्षोपमस्य मे।
आशाभङ्गपरिम्लानं मुखं पश्यन्ति येऽर्थिनः ॥ ५० ॥

इति राजवचः श्रुत्वा द्विजश्छिन्नमनोरथः।
चिरेण संज्ञामासाद्य शिलाहत इवाब्रवीत् ॥ ५१ ॥

D 639 अभाग्यैर्मम भूपाल भवान् विभववर्जितः।
सुलभस्त्वद्विधो दाता भुवने लभ्यते कुतः ॥ ५२ ॥

राज्यादभ्यधिका शोभा संतोषाभरणस्य ते।
अपुण्यान्यर्थिनामेव येषामन्योऽस्ति नाश्रयः ॥ ५३ ॥

त्यक्तस्य चञ्चलतया सहसैव लक्ष्म्या
रत्नाकरस्य न मनागपि हीनताभूत्।
लक्ष्मीस्तु नीचखललुब्धगृहावसन्ना
नाद्यापि सत्पुरुषसंश्रयहर्षमेति ॥ ५४ ॥

इत्युक्त्वा नृपमामन्त्र्य स नैराश्यविषातुरः ।
कलत्रवृत्तिविच्छेदविषादान्मर्तुमुद्ययौ ॥ ५५ ॥

तस्य कण्ठगतं पाशमपनीय स भूपतिः ।
तमूचे करुणासिन्धुर्बन्धुः स्निग्धतरोऽर्थिनाम् ॥ ५६ ॥

बद्ध्वा मां प्रतिपक्षस्य नय भूमिपतेः पुरीम् ।
मद्वधी स हि ते वित्तं दास्यत्यभिमताधिकम् ॥ ५७ ॥

इत्युक्तः पार्थिवेन्द्रेण लज्जमान इव द्विजः ।
तमर्थिबान्धवं बद्ध्वा निनाय धनतृष्णया ॥ ५८ ॥

तं दृष्ट्वा प्रतिसामन्तस्तेनानीतं महीपतिम् । D 641
तद्वृत्तान्तं च विज्ञाय विस्मितः प्रशशंस तम् ॥ ५९ ॥

स विप्राय धनं दत्वा स्वपदे पृथिवीपतिम् ।
चरणालीनमुकुटस्तं प्रसाद्य न्यवेदयत् ॥ ६० ॥

मनुजपतिरहं महेन्द्रसेनो
धनविरहितस्तु य एष कौशिकोऽर्थी ।
पुनरपि च स एव जीवशर्मा
चरितमिति समुदाहृतं जिनेन ॥ ६१ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
महेन्द्रसेनावदानमूनाशीतितमः पल्लवः ॥

D 643 ## ८० सुभद्रावदानम् ।

नोद्वेगमायान्ति कदर्थ्यमानाः
शिखाग्रहेणापि हितं वदन्ति ।
परोपकारेषु हठप्रवृत्ताः
सन्तः सहन्ते भृशमात्मपीडाः ॥ १ ॥

पुरा पुरंदरः श्रीमान् प्रियस्य प्रियकाम्यया ।
साधुर्गन्धर्वराजस्य सुप्रियस्य गृहं ययौ ॥ २ ॥
स तत्र पूजितस्तेन बहुमानेन भूयसा ।
आत्तासनस्तमवदद्देवः प्रणयिवत्सलः ॥ ३ ॥
एहि सुप्रिय गच्छावः पृथिवीं पृथिवीपतिः ।
जातः शुद्धोदनाख्यस्य पुत्रः पुण्यमहोदधिः ॥ ४ ॥
प्राप्तं शमामृतं तेन जगतां कुशलाय सः ।
तत्संविभागं कुरुते करिष्यत्यावयोरपि ॥ ५ ॥
मया संप्रति वीणायां योजिता गीतसारणा ।
कथं गच्छामि पश्चान्मे दुष्करैषा भविष्यति ॥ ६ ॥
D 645 इत्युक्तस्तेन मघवा विमनाः स्वपदं ययौ ।
विषयासक्तचित्तानां कुशलाभिरतिः कुतः ॥ ७ ॥
अत्रान्तरे मर्त्यलोके कुशिपुर्यां सरस्तटे ।
उदुम्बरवने तस्थौ सुभद्राख्यो यतिव्रतः ॥ ८ ॥
व्याप्तान्नवैर्मुकुलितैः स दृष्ट्वोदुम्बरद्रुमान् ।
विस्मयोत्फुल्लनयनः सुचिरं समचिन्तयत् ॥ ९ ॥
जिनजन्मनि जायन्ते चक्रवर्त्युद्भवेऽपि वा ।
अस्मिन्नुदुम्बरवने नान्यथा मुकुलश्रियः ॥ १० ॥
ममैव पुण्यैरथवा संजातमिदमद्भुतम् ।
सुभद्रश्चिन्तयित्वेति बभूवानन्दनिर्भरः ॥ ११ ॥
अथामर्त्यपतिर्गत्वा सुप्रियं पुनरब्रवीत् ।
निजकार्याधिकोद्योगाः परकार्येषु साधवः ॥ १२ ॥
एहि सुप्रिय गच्छावः क्षितिं क्षितितलेन्दुना ।
सद्देशनांशुभिर्विश्वं सुगतेन प्रकाशितम् ॥ १३ ॥
तं सुप्रियोऽवदद् देव वीणायां गीतिसारणा ।
योजितेयं मया पश्चात्सुकरा न भविष्यति ॥ १४ ॥

इत्याकर्ण्यामरपतिर्ययौ म्लानमनोरथः। D 647
प्रयत्नोपनतं हीनपुण्यः पिबति नामृतम्॥ १५॥
उत्फुल्लकुसुमामोदसंपूरितदिगन्तरम्।
कालेनोदुम्बरवनं सुभद्रोऽपि व्यलोकयत्॥ १६॥
सोऽचिन्तयद्भवत्येतद्विकाशिकुसुमं वनम्।
धर्मप्रवर्तने शास्तुर्जये वा चक्रवर्तिनः॥ १७॥
सत्पुण्यानां प्रभावाद्वा निखिलं पुष्पितं वनम्।
इति चिन्तयतस्तस्य दर्पप्रीतिरजायत॥ १८॥
अथ चुन्दाभिधोऽभ्येत्य श्रवणार्हत्वमागतः।
ऋद्ध्या चक्रे पराजित्य तं प्रशान्तमदोदयम्॥ १९॥
जगत्कार्यं ततः कृत्वा कालेन भगवाञ्जिनः।
कलयन् परिनिर्वाणं पश्चिमे शयने स्थितः॥ २०॥
प्रदध्यौ विनये तावद्विनयाविनिवेशितः।
अवशिष्टः सुभद्रो मे गन्धर्वः स च सुप्रियः॥ २१॥
अक्लेशेन सुभद्रस्तु विनयं प्रतिपद्यते।
कृच्छ्रानुशास्यो गन्धर्वस्तारुण्यविभवोन्मदः॥ २२॥
इति संचिन्त्य गन्धर्वपुरं गत्वा तथागतः। D 649
गन्धर्वराजमपरं निर्ममेऽभ्यधिकद्युतिम्॥ २३॥
सहस्रतन्त्रीं वैदूर्यदण्डां वीणामवादयत्।
सुप्रियस्य मदोच्छेदं स्पर्धया कर्तुमुद्ययौ॥ २४॥
क्रमेण तन्त्रीच्छेदेऽपि तौ सर्वस्वरमूर्छनाः।
दर्शयन्तौ प्रभावेण निर्विशेषौ बभूवतुः॥ २५॥
छेदेन सर्वतन्त्रीणामपि गन्धर्वनायकः।
अदर्शयत्पणज्ञोऽपि न शशाक च सुप्रियः॥ २६॥
संत्यक्तमानदर्पस्य तस्याथ भगवाञ्जिनः।
प्रत्यक्षविग्रहश्चक्रे शुद्धसद्धर्मदेशनाम्॥ २७॥
ज्ञानवज्रेण सत्कायदृष्टिशैले विदारिते।
स्रोतःप्राप्तिफलं साक्षात्स चकार प्रशान्तये॥ २८॥
कालेनोदुम्बरवने रम्यः कुसुमसंचयः।
संभोग इव वृद्धस्य शनकैर्म्लानिमाययौ॥ २९॥
ग्लानपुष्पं सदालोक्य सुभद्रः शोकमुद्रितः।
अचिन्तयदपुण्यानां नूतनोद्भवमात्मनः॥ ३०॥

D 651 तच्चिन्तानलसंतप्तमुदुम्बरवनश्रिया ।
उवाच देवताभ्येत्य विषादं मा कृथा वृथा ॥ ३१ ॥
नेदं तव प्रभावार्द्रैः पुण्यैः कुसुमितं वनम् ।
न च म्लानं तवापुण्यैः श्रूयतामत्र कारणम् ॥ ३२ ॥
पुष्पाण्येतानि जायन्ते सुगतस्यैव जन्मनि ।
अनुत्तरज्ञानलाभे विकसन्ति समन्ततः ॥ ३३ ॥
आसन्ने परिनिर्वाणे म्लायन्ति निपतन्ति च ।
इह ते परिनिर्वाणं कुशिपुर्यां तथागतः ॥ ३४ ॥
एतदाकर्ण्य वचनं सुभद्रः काननश्रियः ।
दीर्घमुष्णं विनिःश्वस्य सुचिरं समचिन्तयत् ॥ ३५ ॥
यास्यामि धर्मविनये शास्तुर्भाजनतामहम् ।
इत्येष हृदये नित्यमाशाबन्धो ममाभवत् ॥ ३६ ॥
धन्यास्ते विरतक्लेशाः संपूर्णकुशलोद्भवाः ।
धर्मप्रवचने शास्तुर्यैर्दृष्टं वदनाम्बुजम् ॥ ३७ ॥
कस्येदानीं वदनशशिनः संप्रवृत्ताः प्रवृद्ध-
ज्ञानालोकप्रसररुचिराः पुण्यपीयूषधाराः ।
D 653 लोकः शोकप्रशमसुहृदस्तीव्रतृष्णार्तबन्धो-
र्वाचस्तप्ते भवमरुतटे पास्यति श्रोत्रपात्रैः ॥ ३८ ॥
गच्छाम्यहं कुशिपुरं यत्रास्ते भगवाञ्जिनः ।
प्राप्स्यामि सुलभं तस्य पश्चिमं यदि दर्शनम् ॥ ३९ ॥
इति संचिन्त्य सोत्साहः सोऽन्तर्हिततनुः क्षणात् ।
मल्लाश्रयां कुशिपुरीमाससाद मनोजवः ॥ ४० ॥
वैनेयमर्कशालाख्ये कुसुमारामशायिनः ।
जिनस्य द्वाःस्थमानन्दं स प्रवेशमयाचत ॥ ४१ ॥
आनन्दस्तं जगादाथ मन्दमन्दस्वनः शनैः ।
निवारयन् प्रवेशाशामुन्नताङ्गुलिदोलया ॥ ४२ ॥
सुभद्रावसरो नायं प्रश्नव्याकरणे तव ।
विश्राम्यति परिश्रान्तः कायशान्त्यै तथागतः ॥ ४३ ॥
न चिन्तयत्यवसरं सर्वथैव यथा तथा ।
परव्यथानभिज्ञोऽयं स्वार्थमर्थयते जनः ॥ ४४ ॥
देशं कालमविज्ञाय याति यः सहसार्थिताम् ।
स समाहितमुत्सृज्य लज्जामादाय गच्छति ॥ ४५ ॥

D 655

वेगं विहाय विनताः सरितः प्रयान्ति
वान्ति प्रसह्य चतुरं न तथा समीराः ।
एतेऽपि नैव तनुसंशमने जिनस्य
संतप्तपल्लवलतातरवश्चलन्ति ॥ ४६ ॥
आनन्देनेति यत्नेन वार्यमाणः पुनः पुनः ।
आशाभङ्गसमुद्भ्रान्तः सुभद्रस्तमभाषत ॥ ४७ ॥
जानात्यवसरं नार्तः प्रसीद दययार्थिनः ।
सुलभं दर्शय जिनं मा मैवं भव निष्ठुरः ॥ ४८ ॥
छायायामुपविश्य शीतलतया लब्धप्रमोदोत्सवै-
रारुह्यात्तफलैः सदा नवनवैः संपीडितस्याध्वगैः ।
जानात्याश्रितवत्सलस्य सुलभाधारस्य सर्वार्थिना
शाखाभञ्जनमोटनप्रसरणक्लेशावलीं कस्तरोः ॥ ४९ ॥
इति यत्नात्सुभद्रेण याचितोऽपि पुनः पुनः ।
तं निरानन्दमानन्दः प्रतिषेधं गतेर्व्यधात् ॥ ५० ॥
भगवानपि सर्वज्ञः शय्यां प्राप्य सुरालयात् ।
उच्चैरानन्दमवदत्सुभद्रः प्रविशत्विति ॥ ५१ ॥
लब्धप्रवेशः सुगतं दृष्ट्वा निधिमिवाधनः । D 657
जगाद साश्रुवदनः सुभद्रः प्रणिपत्य तम् ॥ ५२ ॥
भगवन् भुवनस्यास्य केयं भाग्यदरिद्रता ।
संत्यक्तस्याद्य भवता निरालोकस्य का गतिः ॥ ५३ ॥
को नाम त्वां विना मित्रं ज्ञानालोकैः करिष्यति ।
मोहनिद्राप्तमुद्रस्य जगत्पद्मस्य बोधनम् ॥ ५४ ॥
कृत्वा समस्तजगतामुपकारमकारणम् ।
प्रयासि सर्वसुलभः कथं दुर्लभतां मम ॥ ५५ ॥
इत्युक्तः प्रणयात्तेन समुन्नाम्य मुखाम्बुजम् ।
प्रसन्नकान्तिर्भगवान् सस्मितस्तमभाषत ॥ ५६ ॥
इमां वत्स न वेत्सि त्वं किं तु नित्यामनित्यताम् ।
क्षणिकाः सर्वसंस्काराः कोऽयं देहग्रहाग्रहः ॥ ५७ ॥
दूरं प्रयान्ति दिनकृद्भ्रमनिर्गतानि
यानि क्षपाशबलितानि सदा दिनानि ।
एतानि तानि निपतत्पृथुकालचक्र-
संशातितानि शकलानि नृजीवितानाम् ॥ ५८ ॥

D 659 दलन्त्येते शैला जलधिवलयः शुष्यति परं
'सहोद्भूतैर्भूतैर्भुवनसरणिर्भ्रश्यतितराम्।
असारे संसारे चकितहरिणीलोचनचले
चिरस्थायी नायं बहुपरिचयः कायनिचयः ॥ ५९ ॥

अभिधायेति भगवान् सुभद्रस्य प्रशान्तये।
प्रसादानन्दिनीं चक्रे व्यक्तसत्यपथां कथाम् ॥ ६० ॥
त्रिदण्डकुण्डीसंभारं त्यक्त्वा भारमिवाध्वगः।
प्रव्रज्यां शासने शास्तुः सुभद्रोऽप्याददे ततः ॥ ६१ ॥
अर्हत्पदमथासाद्य स सर्वक्लेशसंक्षयात्।
अचिन्तयदहो नेयमुचिता शिष्यता मम ॥ ६२ ॥
पश्यामि परिनिर्वाणमग्रे भगवतः कथम्।
तस्मात्पूर्वमहं देहं विहाय स्वपदं भजे ॥ ६३ ॥
इति संचिन्त्य स शनैः पञ्चाधिष्ठानसंश्रयः।
फणिनिर्मोककलया परिनिर्वृतिमाप्तवान् ॥ ६४ ॥
तस्याथ देहसत्कारे भिक्षूणां सह तीर्थिकैः।
कस्य स ब्रह्मचारीति विवादः समजायत ॥ ६५ ॥
D 661 तस्याथ शिबिकां वोढुमशक्तेषु क्रियाविधौ।
तीर्थिकेषु प्रयातेषु सर्वभिक्षुगणोऽभ्यधात् ॥ ६६ ॥
शरीरनिचये स्तूपं कृत्वा तस्याथ भिक्षवः।
पप्रच्छुः सुगतं पूर्वं परिनिर्वाणकारणम् ॥ ६७ ॥
स तानुवाच विप्रोऽसौ वाराणस्यामभूत्पुरा।
अशोकः काश्यपाख्यस्य शास्तुः प्राणसमः सुहृत् ॥ ६८ ॥
स तस्माद्धर्मविनयं पर्यन्तशयनस्थितेः।
देवताप्रापितं प्राग्र्यं श्लाघ्यमर्हत्त्वमाप्तवान् ॥ ६९ ॥
स भक्तिशीलः स्वगुरोरग्रे विग्रहमत्यजत्।
तं दृष्ट्वा देवता तत्र प्रणिधानमथाकरोत् ॥ ७० ॥
यथायं काश्यपस्याग्रे सुकृती परिनिर्वृतः।
तथाहमपि भूयासं गुरोरग्रेऽग्रगामिनी ॥ ७१ ॥
सा देवता सुभद्रोऽयं ममाग्रे त्यक्तविग्रहः।
तेन श्रद्धाविशुद्धेन प्रणिधानेन सत्कृतः ॥ ७२ ॥
क्रकुच्छन्दस्य शास्तुश्च पश्चिमे शयने पुरा।
प्राप्तार्हत्पदमालोक्य मुनीनां शतपञ्चकम् ॥ ७३ ॥

स्वयं देवतयानीतं भक्त्याग्रे त्यक्तविग्रहम् । D 663
तद्विधप्रणिधानेन सैव याता सुभद्रताम् ॥ ७४ ॥
देहे स्वभावजामेतां पर्यन्तायतनां व्यथाम् ।
मया प्रसहमानेन निर्व्यथः प्रापितः पदम् ॥ ७५ ॥
ब्रह्मदत्तो नृपः सोऽभूदहमश्वश्च संशये ।
स मया शत्रुवित्रस्तश्छिन्नाङ्घ्रिणापि तारितः ॥ ७६ ॥
कन्यकुब्जवने पूर्वमभवं मृगयूथपः ।
अभूत्सुभद्रश्च मृगो यूथमध्ये मृगानुगः ॥ ७७ ॥
मृगयाप्तेन संरुद्धे वने कर्णेन भूभुजा ।
त्रस्तानां तटिनीतीरे मृगाणां नागतिर्भवेत् ॥ ७८ ॥
अवतीर्य सरिन्मध्ये निश्चलेन मया ततः ।
मत्पृष्ठन्यस्तचरणास्ते भीतास्तारिता मृगाः ॥ ७९ ॥
तत्खुराघातदलिते याते मयि मुमूर्षताम् ।
एकः स एव हरिणः प्लवन्नेवं तदाप्तवान् ॥ ८० ॥
तमहं त्रासतरलं व्यथां संस्तभ्य दुःसहाम् ।
तूर्णं संतार्य कारुण्यात्पुलिने निधनं गतः ॥ ८१ ॥
स एव सव्यथेनाद्य सुभद्रस्तारितो मया । D 665
इत्युक्त्वा भगवान् मौनमालम्ब्य शमोन्मुखः ॥ ८२ ॥
भिक्षुभिः कुशलावाप्तौ सुप्रियस्यापि कारणम् ।
पृष्टः प्रोवाच सर्वज्ञः शनैः प्रणयिवत्सलः ॥ ८३ ॥
काश्यपस्य सुधीर्नाम शास्तुरासीदुपासकः ।
तत्प्रसादाप्तपर्याप्तशिक्षापदप्रसन्नधीः ॥ ८४ ॥
स दृष्ट्वा गीतिकुशलं गान्धर्विकगणोत्तमम् ।
प्रणिधानं प्रविदधे गन्धर्वाधिपतिं प्रति ॥ ८५ ॥
स तेन प्रणिधानेन सुप्रियत्वमुपागतः ।
संप्राप्तधर्मविनयः शिक्षापदपरिग्रहात् ॥ ८६ ॥
सुभद्रसुप्रियावेतौ कृतौ कुशलिनौ मया ।
पराभिमतक्लेशेषु निर्व्यथाः सर्वथा वयम् ॥ ८७ ॥
अजितोदयसंज्ञेऽभून्नगरे स्वर्गसंनिभे ।
शतक्रतुरिव श्रीमान् विजयन्ताभिधो नृपः ॥ ८८ ॥
तस्य पुण्यप्रवृत्तस्य धर्म्यमार्गानुयायिभिः ।
व्रजद्भिस्त्रिदिवं पौरैः पूरिताः सुरभूमयः ॥ ८९ ॥

D 667 राज्ञः पुण्यानुभावेन स्वर्गमापूरितं नरैः ।
दृष्ट्वा युक्तिं चकारास्य सत्त्वं ज्ञातुं सुरेश्वरः ॥ ९० ॥

ततस्तन्निर्मिताः क्रूरसत्त्वास्तं पृथिवीपतिम् ।
मांसं शरीरनिष्कृत्तं रुधिरं च ययाचिरे ॥ ९१ ॥

निर्विकारमतिस्तेभ्यः स दत्वाभिमतं नृपः ।
अस्थिशेषं प्रविदधे प्रणिधानं महायशाः ॥ ९२ ॥

शरीरदानपुण्येन तारणाय शरीरिणाम् ।
एतेनानुत्तरां सम्यक्संबोधिमहमाप्नुयाम् ॥ ९३ ॥

ऊचे शक्रस्तमेत्याथ राजन् प्रव्यथितस्य ते ।
अपि देहप्रदानेऽभूद्विकारः सत्यमुच्यताम् ॥ ९४ ॥

इति पृष्टः सुरेन्द्रेण नरेन्द्रस्तमभाषत ।
अर्थिसंपूरणोद्भूतप्रहर्षोत्फुल्ललोचनः ॥ ९५ ॥

व्यथायां निर्विकारोऽहं यदि सत्येन तेन मे ।
संरूढव्रणसच्छायः स्वस्थ एवास्तु विग्रहः ॥ ९६ ॥

इत्युदीरितमात्रेण कान्तं स्वस्थमभूद्वपुः ।
तस्य मेघविनिर्मुक्तं बिम्बं तारापतेरिव ॥ ९७ ॥

D 669 विजयन्तो नृपः सोऽहं परकार्येषु निर्व्यथः ।
इत्युक्त्वा भगवान् ध्याननिलीननयनोऽभवत् ॥ ९८ ॥

अचलचलनैर्मन्थक्लेशच्छटाममृताम्बुधिः
सुरगणकृते तां तां सेहे प्रसह्य महाशयः ।
विमलमनसां कायापायक्षणेऽप्यविकारिणां
परहितविधौ संबद्धानां व्यथापि सुखायते ॥ ९९ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
सुभद्रावदानमशीतितमः पल्लवः ॥



## ८१ हेतूत्तमावदानम् । D 671

क्षेत्रे सुकृष्टेऽल्पतरं यदुप्तं
कृतं कृतज्ञस्य हिताय यच्च ।
समर्पितं यच्च गुणोन्नताय
शाखासहस्रैस्तदुपैति वृद्धिम् ॥ १ ॥
श्रावस्त्यां भगवान् भव्ये पुरा जेतवने जिनः ।
कथाप्रबन्धोपगतं भिक्षुसंघमभाषत ॥ २ ॥
विफलं सर्वमेवैतत्स्वभोगाय यदर्ज्यते ।
तदेव सफलं लोके यत्समर्पितमर्हते ॥ ३ ॥
दक्षिणा दक्षिणतया सत्पात्रप्रतिपादिता ।
असंख्यगुणतामेति सत्संगतिरिवाक्षया ॥ ४ ॥
पुरा पाटलिपुत्रीया वणिजश्चन्दनार्थिनः ।
महाप्रवहणारूढाश्चन्दनद्वीपमाययुः ॥ ५ ॥
गोशीर्षचन्दनचयं समादाय ततस्ततः ।
हृष्टाः प्रतिनिवृत्तास्ते प्रापुर्मध्यं महोदधेः ॥ ६ ॥
विपुलाकालवातालीवलितोर्मिबलैरभूत् । D 673
तत्र प्रवहणं कालदोलाकेलिविशृङ्खलम् ॥ ७ ॥
त्राणार्थिनि वणिक्चक्रे त्रिदशस्तोत्रकारिणि ।
अभज्यत प्रवहणं सहसार्थमनोरथम् ॥ ८ ॥
पुण्यसेनाभिधस्तत्र विषमे प्राणसंशये ।
अचिन्तयत्परित्राणं साकम्पः सार्थनायकः ॥ ९ ॥
अस्ति मद्वेश्मनिकटे धर्मत्रोधिरुपासकः ।
हेतूत्तमं क्लेशकाले स्तौति शास्तारमेव सः ॥ १० ॥
इति संचिन्त्य मनसा तमेव शरणं गतः ।
ऊचे सार्थपतिः सास्रः साध्वसायासगद्गदः ॥ ११ ॥
हेतूत्तमाय महते संबुद्धायार्हते नमः ।
कल्याणकल्पवृक्षाय सकलक्लेशशर्मणे ॥ १२ ॥
इत्युक्ते तेन सहसा समभ्येत्याग्निदेवता ।
सार्थं प्रत्यागतप्राणं चिक्षेप जलधेस्तटे ॥ १३ ॥
तस्मान्महाभयान्मुक्तास्ते स्वदेशमुपागताः ।
हेतूत्तमनमस्कारनिरताः सर्वदाभवन् ॥ १४ ॥
तस्मिन्नवसरे शास्तुः कर्मशेषेण केनचित् । D 675
गात्रे हेतूत्तमस्याभूत्तीव्रतापस्थितिज्वरः ॥ १५ ॥
ये स्वस्थतां भवमहाभयभेषजेन
कुर्वन्ति सर्वजगतामवलोकनेन ।

तेऽपि प्रसक्तनिजकर्मलतावशेषे
शेषाधिवासकलनां न परित्यजन्ति ॥ १६ ॥
गोशीर्षचन्दनं तस्य तीव्रसंतापशान्तये ।
राजा चन्द्रावलोकाख्यः सर्वत्रान्वेष्टुमाययौ ॥ १७ ॥
लक्षैश्चतुर्भिर्भूपेन स सार्थपतिरर्थितः ।
गोशीर्षचन्दनमलं न ददौ भुवि दुर्लभम् ॥ १८ ॥
भक्त्या स्वयं समभ्येत्य स्मृतिमात्रोपकारिणः ।
शास्तुः सार्थपतिश्चक्रे वपुश्चन्दनचर्चितम् ॥ १९ ॥
तेन हारतुषारौघशशिशैत्योपहासिना ।
स्वस्थः स्वकीर्तिशुभ्रेण चन्दनेनाभवज्जिनः ॥ २० ॥
तेन पुण्यानुभावेन पुण्यसेनः शशिप्रभः ।
श्रीमान् बभूव सर्वाङ्गप्रोद्भूताद्भुतसौरभः ॥ २१ ॥
D 677 तस्य चन्दनरक्तादिच्युतं यत्सागराम्भसि ।
तत्सर्वं स्वगृहोपान्तकूपमध्यात्समुद्गतम् ॥ २२ ॥
निजं निजं स मत्वा च वणिजां चन्दनादिकम् ।
भोज्यरत्नाम्बरैर्गेहे भिक्षुसंघमपूजयत् ॥ २३ ॥
अथ सार्थपतेर्दिव्यप्रभावाभरणां श्रियम् ।
दृष्ट्वोपस्थापकेनाग्रे पृष्टस्तत्सुकृतं जिनः ॥ २४ ॥
हेतूत्तमोऽथ भगवान् सस्मितस्तमभाषत ।
प्राप्ता श्रीः सार्थवाहेन लिम्पता चन्दनेन माम् ॥ २५ ॥
कृतं सुकृतशीलेन पुण्यसेनेन कर्म तत् ।
अमृतत्वमवाप्तस्य यस्यैता लेशविप्रुषः ॥ २६ ॥
पाके कुशलमूलानामेष जन्मनि पश्चिमे ।
प्रव्रज्यानुत्तरां सम्यक्संबोधिं समवाप्स्यति ॥ २७ ॥
चन्दनश्रीरिति ख्यातः पुण्यचन्दनशाखिनः ।
एवं मूले विशालस्य भविष्यति तथागतः ॥ २८ ॥
इति हेतूत्तमः प्राह भगवान् ज्ञानलोचनः ।
इत्युक्ते शाक्यमुनिना भिक्षवो विस्मयं ययुः ॥ २९ ॥
D 679 अर्हत्क्षेत्रसमर्पणात्परिणतौ वैराग्यलक्ष्मीफलः
श्रद्धादानकणाङ्कुरः सुकृतिनां शाखाशतैर्वर्धते ।
यस्यैतास्त्रिदशाधिपत्यविशदच्छत्रोदयाः संपदः
पुण्यामोदमदप्रमोदसुहृदः प्रत्यग्रपुष्पोद्भवाः ॥ ३० ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
हेतूत्तमावदानमेकाशीतितमः पल्लवः ॥

## ८२ मारकपूर्विकावदानम् । D 681

लोकः किं परलोकधीः प्रकुरुते पुत्राय मिथ्यास्पृहां
तत्पुण्यं क्रियते स्वयं यदुचितं नान्यैः कृतं भुज्यते ।
पुत्रस्तद्विदधाति कश्चिदसमक्रूरक्रियाकोविदः
पापाद्येन निपातभग्नवदनः सीदत्यशेषान्वयः ॥ १ ॥
पुराभवद्गृहपतेः श्रावस्त्यां श्रुतवर्मणः ।
जायायां जयसेनायां भववर्माभिधः सुतः ॥ २ ॥
तौ दम्पती शिशौ तस्मिन् वर्धमाने शनैः शनैः ।
वंशोत्कर्षविशेषाशाविनिवेशं प्रचक्रतुः ॥ ३ ॥
कालेन कालवशगे जनके भववर्मणः ।
जननी स्नेहमोहार्ता संवर्धनपराभवत् ॥ ४ ॥
प्रातिवेश्यवयस्येन सह लीलाविशृङ्खलः ।
यौवनस्थः स बभ्राम निरङ्कुश इव द्विपः ॥ ५ ॥
व्रजन्तं राजमार्गेण भुजंगसुभटाङ्गना ।
ददर्श सुन्दरी नाम तं हर्म्यशिखरस्थिता ॥ ६ ॥
सा तेन साभिलाषेण सविलासं विलोकिता । D 683
उत्ससर्ज स्मरसखीं तन्मूर्ध्नि कुसुमस्रजम् ॥ ७ ॥
तयोः सविभ्रमाकूतं स दृष्ट्वा प्रातिवेशिकः ।
संभोगसूचकं सर्वं स संकेतममन्यत ॥ ८ ॥
स गत्वा चकितः प्राह जननीं भवशर्मणः ।
सुहृदः स्नेहसंतप्तः शङ्कमानः पराभवम् ॥ ९ ॥
पुत्रस्ते कृतसंकेतः स्पष्टं सुभटयोषिता ।
रजन्यामविनीतोऽद्य स्वैरचारी गमिष्यति ॥ १० ॥
चरन्तः संसारव्यसनगहनेऽस्मिन्नरमृगा
भृशं भोगव्यग्रा निखिलसुखशस्यप्रणयिनः ।
विनाशव्यापारस्मरशबरपाशे निपतिता
लभन्ते पर्यन्ते विषयशितशस्त्रैर्विशसनम् ॥ ११ ॥
वासरे रक्षितस्तावन्मयायं चपलाशयः ।
रक्षणीयस्त्वया रात्रावित्युक्त्वा प्रययौ सुहृत् ॥ १२ ॥
अथान्तर्गृहसुप्तस्य पुत्रस्य द्वारशायिनी ।
माता निशि प्रबुद्धैव संरक्षणपराभवत् ॥ १३ ॥
वारिशौचापदेशेन याचमानस्य निर्गमम् । D 685
न निर्गन्तुं ददौ तस्य जननी स्नेहमोहिता ॥ १४ ॥

सोऽचिन्तयदहो रम्यरामारत्नसमागमे ।
केनेयं विघ्नजननी जननी मम निर्मिता ॥ १५ ॥
भाग्यैर्मे जनकस्तावद्यौवने निधनं गतः ।
इयं त्वपुण्यैः कङ्काली कालव्याली गृहे स्थिता ॥ १६ ॥
गच्छाम्येनां समुल्लङ्घ्य निद्राविरहितां यदि ।
तदस्याः कलहालापैर्जनोऽपि प्रतिबुध्यते ॥ १७ ॥
प्रायः क्षपा परिक्षीणा दूरे कान्ता करोमि किम् ।
सुलभा भाग्यहीनस्य कथं सा सुभगा मम ॥ १८ ॥
हर्म्योत्सङ्गगता विलोकनरसान्नम्राननाम्भोरुहा
स्रस्तस्य श्रवणोत्पलस्य नयनच्छायां दिशन्ती पदे ।
ताटङ्कद्युतिभिः कपोलयुगले पत्रावलीं बिभ्रती
भाग्यैर्भोगभुवं प्रयाति सुभगा भव्यस्य सा सुन्दरी ॥ १९ ॥
इति चिन्तातुरं द्वारं याचमानं पुनः पुनः ।
अत्रैव क्रियतां शौचमिति माता तमब्रवीत् ॥ २० ॥
D 687 अथ मातुः शिरश्छित्त्वा खड्गेन स ययौ जवात् ।
रागोपदिष्टपापानां किमकार्यं दुरात्मनाम् ॥ २१ ॥
रात्रावगणितायासः स गत्वा सुन्दरीगृहम् ।
रहःसंभोगसंनद्धां विदग्धामाससाद ताम् ॥ २२ ॥
स तस्यै स्वकृतं पापमादराय न्यवेदयत् ।
तेनैव मूर्खाः श्लाघन्ते येनैवायान्ति निन्द्यताम् ॥ २३ ॥
तस्य मातृवधक्रूरपापश्रवणकम्पिता ।
श्वपाकस्येव संस्पर्शे विमुखी साभवत्परम् ॥ २४ ॥
हर्म्याधिरोहणव्याजात्सा जगाम तदन्तिकात् ।
साभिलाषोऽपि पापानामाचारेण विरज्यति ॥ २५ ॥
उच्चहर्म्यसमारूढा प्रौढपापपराङ्मुखी ।
चौरश्चौरोऽयमित्युच्चैश्चुक्रोश चकितेव सा ॥ २६ ॥
प्रधाविते परिजने भयदिग्धः स विद्रुतः ।
ययौ जवान्निजगृहं कृतकोलाहलः श्वभिः ॥ २७ ॥
हता मे जननी चौरैरिति तारप्रलापवान् ।
प्रभाते विदधे मातुः स शरीरादिसत्क्रियाम् ॥ २८ ॥
D 689 प्रच्छन्नपापसंतापदह्यमानः स चिन्तयन् ।
सुतीव्रनरकापातं बभ्राम भुवि भूतवत् ॥ २९ ॥

प्रायश्चित्तं द्विजास्तेन पृष्टाः पातकवादिना ।
ऊचुर्मातृवधक्रूरपातके नास्ति निष्कृतिः ॥ ३० ॥
अथ जेतवनं गत्वा तत्र भिक्षुगणोदितम् ।
शुश्राव धर्माध्ययनं सर्वपापप्रणाशनम् ॥ ३१ ॥
धीमान् प्रव्रजितस्तत्र स्वाध्यायनिरतः परम् ।
ततस्त्रिपिटकाध्यायी स धर्मकथिकोऽभवत् ॥ ३२ ॥
सर्वज्ञोऽभ्येत्य भगवान् भिक्षुसंघमथाब्रवीत् ।
किं भवद्भिः सपापाय प्रव्रज्यास्मै समर्पिता ॥ ३३ ॥
तेन मातृवधक्रूरकिल्बिषेण प्रमादिनः ।
प्रत्यासन्नास्य पर्यन्ते तप्तावीचौ चिरस्थितिः ॥ ३४ ॥
उक्ते तथागतेनेति सोऽप्युपाध्यायतां गतः ।
कालेन कालपर्यन्ते घोरं नरकमाप्तवान् ॥ ३५ ॥
तत्रावीचिचयोदञ्चत्तीव्रवह्निशिखाशतैः ।
पच्यमानश्चिरं चक्रे स खेदं नरकौकसाम् ॥ ३६ ॥
कोपान्नरकपालेन मुद्गराघातचूर्णितः । D 691
स चिरात्प्राप पाकाग्निपरिपक्वतनुः क्षयम् ॥ ३७ ॥
चातुर्महाराजिकेषु सोऽथ देवेष्वजायत ।
प्रव्रज्यायाः प्रभावेण दिव्याभरणभूषितः ॥ ३८ ॥
अथ स विमलमालामौलिकेयूरहार-
प्रसृतमणिमयूखोल्लिख्यमानाद्भुतश्रीः ।
अगमदमरवन्द्यो वन्दनायेन्दुकान्तिः
सुगतमनुगताभिर्भ्राजमानः प्रभाभिः ॥ ३९ ॥
तत्पादपद्मयुगमादरवन्दनोद्य-
दानन्दसुन्दरविबुद्धमुखारविन्दः ।
धर्मोपदेशकथयैव बभूव शास्तु-
रुन्मृष्टमानस इवाश्रुतदृष्टसत्यः ॥ ४० ॥
दीर्घोपभोगचलितव्यसनस्य काले
पापप्रदोषतिमिरोपरमे जनस्य ।
इत्यातनोति विमला सुकृतप्रभाव-
वेलाविशालकुशलातिशयप्रकाशम् ॥ ४१ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
मारकपूर्विकावदानं द्व्यशीतितमः पल्लवः ॥

---

D 693 ## ८३ राहुलकर्मप्लुत्यवदानम् ।

गर्भस्थितस्य निसृतस्य ततः शिशोश्च
यूनः शनैः स्थविरतामथ संश्रितस्य ।
नासौ चलत्यतुलकालगजोद्धृतस्य
जन्तोर्मृणालकलया किल कर्मतन्तुः ॥ १ ॥

शुद्धोदनेन भगवान् भक्त्या भोक्तुं निमन्त्रितः ।
भिक्षुभिः सहितश्चक्रे तस्य भोज्यप्रतिग्रहम् ॥ २ ॥
भुक्तोत्तरमथासीनः प्रसन्नः पृथिवीपतेः ।
अनुग्रहेण विदधे स शुद्धां धर्मदेशनाम् ॥ ३ ॥
तत्र तत्क्षणदृष्टोऽपि शिशुना राहुलेन सः ।
भिक्षुमध्ये परिज्ञाय मोदकेनार्चितः पिता ॥ ४ ॥
भगवन्तं क्षणे तस्मिन् प्रणताः सर्वभिक्षवः ।
बालप्रणयमालोक्य पप्रच्छुः सकुतूहलाः ॥ ५ ॥
षड्भिर्वर्षैरयं जातः शिशुः कुक्षिनिपीडितः ।
केन कर्मविपाकेन प्रतिबिम्बवपुस्तव ॥ ६ ॥
D 695 भूयसा गर्भभारेण परिभूता दिवानिशम् ।
पीडां चिरतरं सेहे कस्माद्देवी यशोधरा ॥ ७ ॥
सर्वज्ञो भगवान् पृष्टः प्रणयादिति भिक्षुभिः ।
तानुवाच क्षणं ध्यात्वा श्रूयतामत्र कारणम् ॥ ८ ॥
मिथिलायां विदेहेषु पुष्पदेवस्य भूपतेः ।
सूर्यचन्द्राभिधौ पुत्रौ पुण्यशीलौ बभूवतुः ॥ ९ ॥
पितरि त्रिदिवं याते तौ तपोवनसस्पृहौ ।
साम्राज्यभारग्रहणे मिथश्चक्रतुरर्थनाम् ॥ १० ॥
राज्यं सूर्येण वैराग्यात्सर्वथैव समुज्झितम् ।
चन्द्रः कथंचित्तत्राह ज्येष्ठशासनयन्त्रितः ॥ ११ ॥
सूर्यस्तु गत्वा राजर्षिः शमश्लाघ्यं तपोवनम् ।
संतोषराज्यसुखितश्चक्रे चिरतरं तपः ॥ १२ ॥
स कदाचित्परिश्रान्तः संतप्तस्तीव्रतृष्णया ।
कमण्डलुजलं मोहादनुक्त्वैव पपौ मुनेः ॥ १३ ॥
स संजातमतिर्विद्वानदत्तादानपातकम् ।
कलयन् म्लानवदनः पश्चात्तापादचिन्तयत् ॥ १४ ॥

कर्मपाशसमाकर्षविवशैः समवाप्यते । D 697
अनिच्छयैव सुकृतं दुष्कृतं वा शरीरिभिः ॥ १५ ॥
जनः शुभ्रेऽप्यस्मिन् सुकृतचरिते दुष्कृतकणा-
न्निधत्ते येनासौ मलिनवदनः शोचतितराम् ।
स्पृहानिक्षिप्तानां क्षणभवसुखे दुःखनिचये
प्रविश्यान्तःशोषं दिशति शतशाखो ह्यनुशयः ॥ १६ ॥
गच्छामि नृपतेरग्रे पापमावेदयाम्यहम् ।
राजशासनशुद्धानामनृणो धर्मसंचयः ॥ १७ ॥
शास्त्रं धर्मप्रवृत्तानां रोगार्तानां चिकित्सकः ।
वर्णाश्रमगुरुर्नेता नृपतिः पापकर्मणाम् ॥ १८ ॥
स विचिन्त्येति संतापाद्भूपतेर्भ्रातुरन्तिकम् ।
गत्वा न्यवेदयत्तूर्णमदत्तादानपातकम् ॥ १९ ॥
ज्येष्ठभ्रातरमभ्यर्च्य तं भूमिपतिरब्रवीत् ।
आजन्मशुद्धभावस्य न पापं विद्यते तव ॥ २० ॥
सुसूक्ष्ममपि यः कृत्वा दैवात्किंचिदसांप्रतम् ।
पश्चात्तापं वहत्यन्तस्तस्य सैव विशुद्धता ॥ २१ ॥
इति क्षितिपतेर्वाक्यं श्रुत्वा सूर्यस्तमभ्यधात् । D 699
कलङ्कशेषं न सहे सद्धर्मधवलांशुके ॥ २२ ॥
दण्डमेवार्थये राजन् सुविचार्य विधीयताम् ।
पूयते पावकेनेव राजदण्डेन किल्बिषम् ॥ २३ ॥
इत्याग्रहेण बहुशो याचमानं स्वशासनम् ।
तमुवाचानुजो राजा प्रातः कर्तास्मि यत्क्षमम् ॥ २४ ॥
अस्मिन् प्रतीक्ष्यतां तावद्भवानुद्यानकानने ।
इत्युक्त्वा पौरकार्याय निर्ययौ पृथिवीपतिः ॥ २५ ॥
तत्र प्रतीक्षमाणेऽथ मुनौ नियमनिश्चले ।
राजा विस्मृततत्कृत्यः षड्भिरभ्याययौ दिनैः ॥ २६ ॥
कृशाकारं निराहारमथ दृष्ट्वाग्रजं नृपः ।
निन्दन् स्वबुद्धिसंमोहं चक्रे तस्य प्रसादनम् ॥ २७ ॥
ब्राह्मणैः सहितः कृत्वा स तत्पापप्रमार्जनम् ।
षड्दिनक्लेशदानेन याते तस्मिन्नतप्यत ॥ २८ ॥
अहं स सूर्यो राजर्षिश्चन्द्रो राजाप्ययं शिशुः ।
जातः संवत्सरैः षड्भिः षड्दिनक्लेशकृन्मुनेः ॥ २९ ॥

D 701 आभीरभार्या भद्राख्या हरिण्या सुतया सह।
नगराभिमुखी भद्रा तक्रं विक्रेतुमाययौ॥ ३०॥

तत्सुता तरुणी भारं निजं गुरुतरं घटम्।
दत्वा जनन्यै वृद्धायै लघुं जग्राह तद्धटम्॥ ३१॥

वाहिता योजनं सार्धं जननी जरती कृशा।
सा दुहित्रा पुरोपान्ते परिश्रान्ततराभवत्॥ ३२॥

आभीरतरुणी सेयं मातुः क्लेशाद्यशोधरा।
षट्क्रोशतुल्यवर्षेण गर्भभारेण पीडिता॥ ३३॥

दिवि भुवि फणिलोके शैशवे यौवने वा
जरसि निधनकाले गर्भशय्याश्रये वा।
सहगमनसहिष्णोः सर्वथा देहभाजां
न हि भवति विनाशः कर्मणः प्राक्तनस्य॥ ३४॥

इति राहुलपूर्वकर्मयुक्तां
कथितां चित्रकथां तथागतेन।
अवधार्य बभूव भिक्षुसंघः
क्षितिपालः स जनश्च विस्मयाढ्यः॥ ३५॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
राहुलकर्मप्लुत्यवदानं त्र्यशीतितमः पल्लवः॥



## ८४ मधुरस्वरावदानम् । D 703

औचित्येन करोति यः सुमनसामानन्दसान्द्रं मनः
क्रूराणामपि शीर्यते परिचितं यस्यानुभावोत्तमः ।
एकः कोऽपि स जायते जितजगन्नाथप्रभावोद्भवः
पुण्यं यस्य न याति मानकलनां निःसंख्यसंख्यापदैः ॥ १ ॥

श्रीमान् पुरा सुधीरस्य श्रावस्त्यां गृहमेधिनः ।
जायायामीक्षितः सूनुः सुनेत्रायामजायत ॥ २ ॥

जातमात्रः समुद्भूते दिव्यरत्नविभूषिते ।
उपविष्टः स्वपुण्याङ्के यः पर्यङ्के व्यरोचत ॥ ३ ॥

तस्य जन्मनि रत्नानि पुष्पैः सह पयोधराः ।
मधुरस्निग्धनिर्घोषा ववृषुर्मधुवर्षिणः ॥ ४ ॥

पूर्णः कुमारः कौबेरैः स निधानशतैर्वृतः ।
मधुवृष्टिप्रपतनान्मधुरस्वर इत्यभूत् ॥ ५ ॥

तेनादरिद्रतां नीते भुवने रत्नवर्षिणा ।
श्वेतकाक इव क्वापि नैवादृश्यत याचकः ॥ ६ ॥

स कदाचिद्गृहायातं प्रशान्तेर्यापथस्थितम् । D 705
आनन्दं भिक्षुमालोक्य पप्रच्छ पितरं पुरः ॥ ७ ॥

तात व्रतविशेषोऽस्य कोऽयं वैमल्यशालिनः ।
यस्य संदर्शनेनैव मनः सद्यः प्रसीदति ॥ ८ ॥

पुत्रस्येति वचः श्रुत्वा सुधीरस्तमभाषत ।
पुत्र सत्त्वप्रकाशोऽयं शान्तिव्रतपरिग्रहः ॥ ९ ॥

यः सेतुः सरलः समस्तजगतां संसारघोरार्णवे
क्रोधव्याधिचिकित्सकः शमसुधासारेण तृष्णापहः ।
दोषोत्सिक्ततमोविरामतरणिर्बुद्धः प्रबुद्धद्युतिः
तस्य श्रावक एष शान्तमनसामानन्दनामाग्रणीः ॥ १० ॥

अभिधानं भगवतः श्रुत्वैव मधुरस्वरः ।
बभूवोद्भूतरोमाञ्चः प्राग्जन्मकुशलोदयात् ॥ ११ ॥

आनन्दमथ सानन्दः प्रणम्य प्रणयोन्मुखः ।
स भिक्षुसंघैः सहितं सर्वभोगैरपूजयत् ॥ १२ ॥

औत्सुक्यात्सह तेनैव गत्वा जेतवनं ततः ।
ददर्श स त्विषां राशिं भगवन्तं तथागतम् ॥ १३ ॥

D 707 फुल्लपद्मपलाशाक्षं दिव्यलक्षणलक्षितम्।
लावण्यललिताकारं हेमतालमिवोन्नतम्॥ १४॥
लिम्पन्तममृतेनेव तं दृष्ट्वा हर्षनिर्भरः।
मालामिवाददे मूर्ध्नि स तत्पादनखद्युतिम्॥ १५॥
प्रणयार्थनया तस्य प्रीत्यै प्रणयिवत्सलः।
गत्वा चकार भगवान् गृहे भोगपरिग्रहम्॥ १६॥
अभ्यर्चिते भगवति प्रयाते जेतकाननम्।
जनतां रत्नसंपूर्णां चकार मधुरस्वरः॥ १७॥
निजैरपुण्यैर्निःस्वानां रत्नराशिर्गृहे गृहे।
तद्वितीर्णः क्षणेनैव जगामाङ्गारराशिताम्॥ १८॥
तद्वृत्तान्तमथाकर्ण्य दुःखितो मधुरस्वरः।
तामुवाच पुरा नैव भवद्भिः सुकृतं कृतम्॥ १९॥
अदत्वा दयया दानमकृत्वा संघभोजनम्।
भगवन्तमनभ्यर्च्य न लभ्यन्ते विभूतयः॥ २०॥
सुगतप्रमुखः संघस्तस्माद्युष्माभिरर्च्यताम्।
सर्वोपभोगसामग्रीमहं संपादयामि वः॥ २१॥
D 709 इति ते प्रेषितास्तेन संभारैस्तदुपाहृतैः।
ससंघमंहसः शान्त्यै भगवन्तमपूजयन्॥ २२॥
ततस्ते कृतकल्याणास्तत्क्षणक्षीणकल्मषाः।
ददृशुः स्वगृहं दीप्तैः संपूर्णं रत्नराशिभिः॥ २३॥
ततः प्रवृद्धवैराग्यः प्रशान्त्यै मधुरस्वरः।
प्रव्रज्यामाददे धीमान् गत्वा भगवतोऽन्तिकम्॥ २४॥
स शास्तुः शासनात्त्यक्त्वा श्रावस्तीं नियतव्रतः।
जगाम जनपर्यन्तं विहारं कर्वटाश्रयम्॥ २५॥
दत्तशिक्षापदस्तेन तत्र कार्वटिको जनः।
रत्नत्रयं क्लेशविषप्रशान्त्यै शरणं ययौ॥ २६॥
अस्मिन्नवसरे चौराः काननान्तनिवासिनः।
उक्तं दुर्गोपहाराय नरमन्वेष्टुमाययुः॥ २७॥
ते तं विहारमासाद्य पिशुनेन प्रदर्शितम्।
बबन्धुर्भिक्षुसंघातं गण्डीशब्दसमागतम्॥ २८॥
एक एवोपहाराय भिक्षुरस्माकमीप्सितः।
इत्युक्ते चोरचक्रेण जगदुर्भिक्षवः क्रमात्॥ २९॥

मामादायोपहारार्थं मुच्यन्तां सर्वभिक्षवः । D 711
उक्तो वृद्धैः क्रमेणेति प्रोवाच मधुरस्वरः ॥ ३० ॥
अहमेवोपहारार्हः संघः सर्वो विमुच्यताम् ।
इत्याकर्ण्य वराकारं ते समादाय तं ययुः ॥ ३१ ॥
बद्धः स वधसंनद्धैर्नीतस्तैर्निर्विकारधीः ।
दुर्गायतनमत्युग्रं ददर्श गहनोदरे ॥ ३२ ॥
बलिसज्जीकृतैः स्थूलशकलैर्माहिषैश्च तत् ।
कल्पान्तमेघैः स्रुतोपहारैरिव पूजितम् ॥ ३३ ॥
व्याप्तं वादशिलासक्तरुरुरक्तच्छटाशतैः ।
स्रग्दामभिर्भटोत्सृष्टैर्बन्धुजीवमयैरिव ॥ ३४ ॥
घण्टाग्रालम्बिभिर्वीरशिरोभिः परिवारितम् ।
कृतद्वारार्चनं फुल्लकमलैरिव मृत्युना ॥ ३५ ॥
प्रत्यग्रनररक्ताक्तैः सोपानैररुणप्रभम् ।
शबरीचरणन्यासससंसक्तालक्तकैरिव ॥ ३६ ॥
असंप्राप्तोपहाराभिः किरातस्त्रीभिरादरात् ।
स्वशिशूत्कृत्तहृत्पद्मकीर्णप्राङ्गणवेदिकम् ॥ ३७ ॥
स दृष्ट्वा प्राणिसंघातं वैशसायासदुःसहम् । D 713
उद्वेगसारं संसारं प्रदध्यौ मधुरस्वरः ॥ ३८ ॥
ततः साक्षात्कृतार्हत्त्वः सर्वक्लेशपरिक्षयात् ।
त्रैधातुको वीतरागः सोऽभूत्तुल्यप्रियाप्रियः ॥ ३९ ॥
सोऽचिन्तयदहो शास्तुः प्रभावोऽयं भवच्छिदः ।
प्राप्तोऽयं यत्प्रसादेन निःसंसारसुखां भुवम् ॥ ४० ॥
मोहश्छिन्नो निबिडनिगडः खण्डिता दृष्टिशैलाः
  तीर्णा तृष्णा विषयतटिनी प्रोद्धृता जन्मवृक्षाः ।
प्राप्तं धाम व्यसनशमनं तत्प्रसादेन शास्तुः
  यस्मिन् बाष्पं दधति न पुनः शोचनालोचनानि ॥ ४१ ॥
इति ध्यात्वा स सत्त्वाब्धिस्तस्थौ शैल इवाचलः ।
निबद्धवध्यमालाङ्कैश्चौरैः क्रोधोद्यतायुधैः ॥ ४२ ॥
तैस्तस्यापहृते वस्त्रे गात्रात्काञ्चनरोचिषः ।
अन्यदन्यदभूद्वासस्तैश्च राशिः पुरोऽभवत् ॥ ४३ ॥
अत्रान्तरे समुद्भूतैर्भूतानां पञ्चभिः शतैः ।
सा देवी निश्चलं चक्रे तच्चौरशतपञ्चकम् ॥ ४४ ॥

D 715 च्युते तदायुधचये पुष्पवृष्टिर्नभस्तलात्।
पपात रत्नरुचिरा मधुरस्वरमूर्धनि ॥ ४५ ॥
गाहमानमथ व्योम तं विलोक्य च दस्यवः।
स्पृष्टास्तस्यानुभावेन तमेव शरणं ययुः ॥ ४६ ॥
सोऽवतीर्य ततः शान्त्यै चरणन्यस्तमस्तकान्।
धर्मे रमध्वं संत्यज्य दुष्कृतानीत्युवाच तान् ॥ ४७ ॥
अथ ते जातवैराग्याः प्रव्रज्यां वृजिनोज्झिताः।
आदायार्हत्पदं प्रापुः संसारास्रवशान्तये ॥ ४८ ॥
ततस्तैः सहितोऽर्हद्भिस्तैश्च कर्वटवासिभिः।
ययौ जेतवनं द्रष्टुं शास्तारं मधुरस्वरः ॥ ४९ ॥
तत्र दिव्यजनानीतैर्भोगैस्त्रिदशसाधितैः।
स सुधारससंस्कारैर्भगवन्तमपूजयत् ॥ ५० ॥
शुद्धप्रसादजननीं भगवान् धर्मदेशनाम्।
हिताय विदधे तेषां मोक्षमार्गाग्रदूतिकाम् ॥ ५१ ॥
सुधीरोऽप्यमृतप्राप्त्यै ज्ञात्वा पुत्रस्य पात्रताम्।
हेमाब्जं सुकृतोत्पन्नं प्राप्य जेतवनं ययौ ॥ ५२ ॥
D 717 स तेनाभ्यर्च्य सुगतं चरणालीनशेखरः।
दृशा तस्य प्रसादिन्या स संमृष्ट इवाभवत् ॥ ५३ ॥
ततस्तमूचे भगवानासन्नकुशलोदयम्।
पादन्यासोदितस्वर्णकमलस्त्वं भविष्यसि ॥ ५४ ॥
पद्मोत्तर इति ख्यातः सम्यक्संबुद्धतां गतः।
सत्त्वसंतारणं कृत्वा परिनिर्वाणमेष्यसि ॥ ५५ ॥
सर्वज्ञेनेत्यभिहितः सुधीरः सत्यदर्शिना।
जगत्कल्याणकलनामनोरथमथाददे ॥ ५६ ॥
भक्त्या यैर्भवभेदिनो भगवतः पुण्यप्रणामक्षणे
शास्तुः स्वस्ति कृतं कृतं सुकृतिभिः पादोपधानं शिरः।
अङ्के ते जननीजनस्य न पुनस्तृप्तिप्रयुक्ताः स्तन-
स्तन्योत्तानितदन्तशून्यवदनाः कुर्वन्ति मूढस्मितम् ॥ ५७ ॥

इति श्रीक्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
मधुरस्वरावदानं चतुरशीतितमः पल्लवः ॥



## ८५ हितैष्यवदानम् । D 719

ये रागरोगं नयनानुबन्धं
विद्वेषशूलं हृदयप्रसक्तम् ।
सर्वाङ्गसंसर्पितपापकुष्ठं
हरन्ति तेभ्योऽस्तु नमो भिषग्भ्यः ॥ १ ॥

तपोवनान्तविश्रान्तं कथान्तेऽथ तथागतम् ।
भिक्षवः कौतुकाक्षिप्ताः पप्रच्छुः स्वच्छमानसम् ॥ २ ॥
भगवन् भवतः सर्वलोकशोकापहारिणः ।
भवार्तिभिषजः कस्माद्रोगिणोऽप्यधिकं प्रियाः ॥ ३ ॥
स तानुवाच सत्यं मे रोगिणोऽधिकवल्लभाः ।
कायपीडासमः पुंसां नास्त्यन्यः शोकसंचयः ॥ ४ ॥
जन्मान्तरेष्वपि परं प्रकृत्या दैन्यभूमिषु ।
आतुरेष्वेव सततं पक्षपातो ममाभवत् ॥ ५ ॥
नगर्यां शिखिघोषायां शिबिर्नामाभवन्नृपः ।
प्रविष्टः सत्त्वचिन्तासु सद्बान्धव इवार्थिनाम् ॥ ६ ॥
सर्वे सर्वत्र रोगार्ताश्चिकित्स्याः सर्वथा मया । D 721
इत्यभूत्सततं तस्य सत्यसत्त्वस्य निश्चयः ॥ ७ ॥
कदाचिदातुरः पौरैश्चिररोगनिपीडितः ।
तं ययाचे समभ्येत्य चिकित्सामार्तवत्सलम् ॥ ८ ॥
स्वास्थ्याय तस्य भिषजः पृष्टाः सर्वे महीभुजा ।
प्रवृद्धव्याधिवैधुर्यं विचार्य चिरमूचिरे ॥ ९ ॥
दुर्लभं भेषजं राजन् रोगस्यास्य गरीयसः ।
आजन्मक्षमिणः पुंसः शोणितेनैष शाम्यति ॥ १० ॥
एतदाकर्ण्य नृपतिः करुणाकीर्णमानसः ।
अचिन्तयत्तदादिष्टं स्वास्थ्याय चिररोगिणः ॥ ११ ॥
बालस्यापि न मे कोपः कदाचिदभवत्क्वचित् ।
मयि गर्भस्थितेऽप्यासीज्जननी क्रोधवर्जिता ॥ १२ ॥
तस्मादक्रोधनः कश्चिल्लोकेऽस्मिन्नास्ति मद्विधः ।
ममैव रक्तपूरेण व्याधिरस्य प्रशाम्यति ॥ १३ ॥
इत्युद्यतमतिः सर्वैर्वार्यमाणोऽनुजीविभिः ।
सदा शिरोद्भवं तस्मै ददौ राजा स्वशोणितम् ॥ १४ ॥

D.723 रक्तेन स्वास्थ्यमायातः षड्भिर्मासैरथातुरः ।
जगाम परिपूर्णाशः कृशमामन्त्र्य भूपतिम् ॥ १५ ॥
ततः कदाचिद्भूपालसूनोर्व्यायामशीलनात् ।
पार्श्वशोकक्षयाशंसी प्रादुरासीद्धितैषिणः ॥ १६ ॥
विपरीतस्वभावोऽयं विपाकः पुण्यकर्मणाम् ।
स्वस्थानामशनं नास्ति श्रीमतां रोगसंगतिः ॥ १७ ॥
उपदिष्टं ततस्तस्य स्वास्थ्याय भिषजां वरैः ।
सहस्रपाकसंसिद्धं सर्वसाराभिधं घृतम् ॥ १८ ॥
सर्वद्रव्यात्तसारेण जीवंजीवस्य पक्षिणः ।
स्नानाम्बुक्वाथयोगेन घृतं यत्नेन भूयसा ॥ १९ ॥
सिद्धं द्वादशभिर्वर्षैः कुमारे पातुमुद्यते ।
प्रत्येकबुद्धः शोकार्तस्तद्याचितुमथाययौ ॥ २० ॥
सर्वैर्निवार्यमाणोऽपि कुमारः सत्त्वसागरः ।
भङ्क्त्वा सर्वं ददौ तस्मै सर्वसारघृतं हितम् ॥ २१ ॥
स्वस्थः प्रत्येकबुद्धोऽथ प्रसन्नः प्रणिधानवान् ।
कुमारं विदधे स्वस्थममृतं साधुसेवनम् ॥ २२ ॥
D 725 हितैषी राजपुत्रोऽसावहमेव तदाभवम् ।
रोगिणामार्तिशमनं स्वभावेनैव मे प्रियम् ॥ २३ ॥
इति श्रुत्वा जिनं सर्वे पप्रच्छुर्भिक्षवः पुनः ।
कर्मणा केन तौ तुल्यरोगौ स्वास्थ्यमुपागतौ ॥ २४ ॥
इति तैर्भगवान् पृष्टः सर्वज्ञस्तानभाषत ।
ब्रह्मदत्तः क्षितिपतिर्वाराणस्यामभूत्पुरा ॥ २५ ॥
नन्दोपनन्दनामानौ तस्य पुत्रौ बभूवतुः ।
ज्येष्ठः कीर्तिविशेषार्थी राज्यकामस्तथापरः ॥ २६ ॥
उपनन्दस्ततः प्राह पुरोहितसुतं रहः ।
आथर्वयोगकुशलं वयस्यं कुहनाभिधम् ॥ २७ ॥
एष ज्येष्ठो मम भ्राता जनरञ्जनतत्परः ।
जनात्कीर्तिप्रवादेन राज्यमासादयिष्यति ॥ २८ ॥
निरंशोऽहं भविष्यामि ध्वस्तः सर्वजनोज्झितः ।
विजने निधनं श्लाघ्यं नावधूतस्य जीवितम् ॥ २९ ॥
ज्येष्ठस्यैव तव भ्रातुः पौरोहित्यं क्रमागतम् ।
अरण्यगमनं युक्तमावयोः समदुःखयोः ॥ ३० ॥

श्रुत्वेति राजपुत्रस्य वचः शोकप्रलापिनः । D 727.
हितं तव करोमीति पुरोहितसुतोऽब्रवीत् ॥ ३१ ॥
सोऽथ द्रव्यप्रयोगेन व्यङ्गं तस्याग्रजं व्यधात् ।
येनासौ जनकस्यान्ते कनीयान् राज्यमाप्तवान् ॥ ३२ ॥
प्राप्तराज्यः स कालेन दृष्ट्वा भ्रातरमग्रजम् ।
व्यङ्गं यष्टीकरालम्बं पश्चात्तापं समाययौ ॥ ३३ ॥
पुरोहितसुतं सोऽथ पौरोहित्यनिवेशितम् ।
उवाचोष्णं विनिःश्वस्य गूढं पातकशङ्कितम् ॥ ३४ ॥
अहो नु राज्यलोभेन मया धर्ममजानता ।
ज्येष्ठो भ्राता पितृसमः प्रापितः कुदशामिमाम् ॥ ३५ ॥
क्षणक्षयिसुखाक्षिप्ताः पापं कृत्वा क्षयेष्वहो ।
क्षिपन्ति दुःखेष्वात्मानमसमीक्षितकारिणः ॥ ३६ ॥
इति तस्य वचः श्रुत्वा जाततापः पुरोहितः ।
तमुवाच ममाप्येष राजन्ननुशयज्वरः ॥ ३७ ॥
तं पुनर्द्रव्ययोगेन स्वस्थं चक्रे नृपात्मजम् ।
स्वस्थाय प्रददौ तस्मै निजराज्यं स चानुजः ॥ ३८ ॥
उपनन्दोऽथ कालेन पुरोहितसुतश्च सः । D 729
कारां प्रत्येकबुद्धाय कृत्वा देहान्तमापतुः ॥ ३९ ॥
शिबेर्भूमिपतेः प्राप राजपुत्रः स पुत्रताम् ।
प्रत्येकबुद्धतां लेभे पुरोहितसुतश्च सः ॥ ४० ॥
तेन तौ गूढपापेन तुल्यरोगौ बभूवतुः ।
व्यङ्गस्य स्वास्थ्यकरणाद् युगपत्स्वास्थ्यमागतौ ॥ ४१ ॥

इत्याकर्ण्यातीतजन्मानुबद्ध-
मापन्नार्तित्राणबन्धोर्जिनस्य ।
नित्यासक्तं सत्त्वकारुण्यवृत्तं
हृष्टाः प्रापुर्निर्वृतिं भिक्षवस्ते ॥ ४२ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
हितैष्यवदानं पञ्चाशीतितमः पल्लवः ॥



D 731 ## ८६ कपिंजलावदानम् ।

वन्दन्ते स्थविरक्रमेण नियतं ये धर्मशिक्षाविदः
पूज्यान् पूज्यगुणाः प्रणामविनयैस्ते प्राप्नुवन्त्युन्नतिम् ।
दर्पानुद्धतया विशृङ्खलधिया मोहादधःपातिनां
ज्येष्ठातिक्रमिणामयं स च परो लोकः सशोकः सदा ॥ १ ॥

ज्येष्ठपूजाप्रसङ्गेन भिक्षुभिर्भगवान् पुनः ।
यथावृद्धविधिं पृष्टः सर्वज्ञः पुनरब्रवीत् ॥ २ ॥

ब्रह्मदत्ताभिधः पूर्वं वाराणस्यामभून्नृपः ।
यस्य पुण्यानुभावेन धर्मारण्यमभूज्जगत् ॥ ३ ॥

तस्य काले पुरोपान्तवने प्राक्पुण्यलक्षणात् ।
प्रवृत्तमानुषालापाश्चत्वारः प्राणिनोऽभवन् ॥ ४ ॥

कपिंजलोऽथ शशकः कपिर्गजवरस्तथा ।
ते बभूवुः सदाचाराः स्नेहबद्धाः परस्परम् ॥ ५ ॥

कदाचित्सुखसक्तास्ते कथान्ते जगदुर्मिथः ।
ज्येष्ठक्रमं विनास्माकं कथं पूजा प्रवर्तताम् ॥ ६ ॥

D 733 यथावृद्धिकया सद्भिः सत्कारोऽथ प्रवर्तितः ।
कलयन् किल कल्याणं कुशलायैव कल्पते ॥ ७ ॥

ज्येष्ठः कस्तावदस्माकं योऽर्च्यः स्थविरगौरवात् ।
इति तेषां ब्रुवाणानां जगाद गजयूथपः ॥ ८ ॥

योऽयं जीर्णमहाशाखः पुराणो दृश्यते वटः ।
तुल्यमेनं स्वकायस्य स्मरामि नवपल्लवम् ॥ ९ ॥

मर्कटोऽप्यथ तानूचे वने विचरता मया ।
स्वकायतुल्य एवायं दृष्टः स्वल्पतरो वटः ॥ १० ॥

शशकोऽप्यवदत्पूर्वं मया पत्रद्वयाङ्कितः ।
अवश्यायलवार्द्रोऽयं लीढः पञ्चाङ्गुलो वटः ॥ ११ ॥

तैः क्रमेणेति कथिते पश्चात्प्राह कपिंजलः ।
ममैवायं शकृद्बीजाज्जातः प्राज्यतरो वटः ॥ १२ ॥

अथ ज्येष्ठक्रमं ज्ञात्वा ते सदा गौरवोचिताम् ।
स्नेहानुवृत्तिनिरताः पूजां चक्रुः परस्परम् ॥ १३ ॥

प्राणापहरणाच्चौर्यादगम्यागमनात्तथा ।
असत्यान्मद्यतुल्याम्लफलसंभक्षणाच्च ते ॥ १४ ॥

विरताः सुकृतासक्ताः स्वपदाचारशिक्षया। D 735
चक्रुः पुण्यानुभावेन तुल्यवृत्तान् वनौकसः ॥ १५ ॥
अथ तेषां प्रभावेण नित्यपुष्पफलद्रुमाः।
स्फीतशस्याभवद्भूमिः कालवर्षी च वारिदः ॥ १६ ॥
तद्दृष्ट्वा महदाश्चर्यं भुवः स कृतलक्षणम्।
मेने स्वपुण्यजं सर्वं ब्रह्मदत्तो महीपतिः ॥ १७ ॥
तं मिथ्यामानसं तुष्टं पञ्चाभिज्ञो मुनिर्नृपम्।
उवाच त्वत्प्रभावेण नायं पुष्पफलोदयः ॥ १८ ॥
कानने कपिना सार्धं शशद्विपकपिंजलाः।
स्थिताः सद्धर्मशीलानां तेषामेष गुणोदयः ॥ १९ ॥
ते व्रतैः पञ्चभिः शुद्धा यथास्थविरपूजकाः।
कपिंजलगिरा सर्वे सद्धर्मसमयं श्रिताः ॥ २० ॥
इति श्रुत्वा मुनेर्वाक्यं राजा जातादरः परम्।
सपौरान्तःपुरामात्यस्तद्भेजे व्रतपञ्चकम् ॥ २१ ॥
कपिंजलोऽहमेवासौ शारिपुत्रः शशोऽभवत्।
कपिश्च मुद्गरापल्य आनन्दो गजयूथपः ॥ २२ ॥
ते प्रापुर्धर्मवैमल्यं यथाज्येष्ठक्रमार्चनात्। D 737
तस्मात्प्रणामपूजासु द्रष्टव्यः स्थविरक्रमः ॥ २३ ॥

श्रुत्वेति शास्तुर्विनयोपदेशं
ज्येष्ठार्चनं प्राप्य तपोविशेषम्।
सगौरवां पर्षदि भिक्षवस्ते
पूजां यथावृद्धिकयैव चक्रुः ॥ २४ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
कपिंजलावदानं षडशीतितमः पल्लवः ॥

D 739 ## ८७ पद्मकावदानम् ।

यत्सार्पं परिसर्पि दर्पविषमं क्रूरं च यन्मारकं
यच्चात्युत्कटकालकूटविकटाटोपस्थिरस्थावरम् ।
यान्यन्यानि चितानि दुःसहविषाण्येकीकृतानि स्फुटं
वाक्पारुष्यविषस्य तैक्ष्ण्यतुलया नायान्ति लेशोपमाम् ॥ १ ॥
श्रावस्त्यां मानसाख्यस्य पद्मगर्भनिभप्रभः ।
अभूद्गृहपतेः सूनुर्गुणवान् पद्मकाभिधः ॥ २ ॥
सुशीलस्येव नियमः साधोरिव गुणादरः ।
सोऽवर्धत गृहे तस्य विवेक इव धीमतः ॥ ३ ॥
स नवे यौवनारम्भे रूपकन्दर्पहासिनि ।
भोगोद्योगविरागेण वैराग्याभिमुखोऽभवत् ॥ ४ ॥
उपसेनाभिधानस्य स भिक्षोः क्षान्तिचेतसः ।
शासने प्रशमश्लाघ्यां प्रव्रज्यां समुपाददे ॥ ५ ॥
स पात्रपाणिः संसक्तचीवरः शुशुभे परम् ।
संसारे क्षणवैराग्याद्विरक्त इव चन्द्रमाः ॥ ६ ॥
D 741 ततः कदाचिदेकाकी जनचारिकया व्रजन् ।
विहारारामरुचिरां मथुरामाससाद सः ॥ ७ ॥
स तत्र पिण्डपातार्थी नवत्वादनभिज्ञया ।
वेश्यायाः शशिलेखायाः प्रविवेश गृहाङ्गणम् ॥ ८ ॥
सा तस्यासनसत्कारं कृत्वा कुवलयेक्षणा ।
तं जगादादरवती रूपालोकनविस्मिता ॥ ९ ॥
इयं ते ललिता मूर्तिर्नवयौवनशालिनी ।
करोत्यमृतसंभोगदीक्षां कस्य न चक्षुषोः ॥ १० ॥
अस्मिन् वयसि रूपेऽस्मिन् केन कामविरोधिना ।
कष्टं समुपदिष्टं ते वैराग्यं स्थविरोचितम् ॥ ११ ॥
ललनावसनोत्कर्षकुचस्पर्शसुखोचिते ।
पाणौ संभोगपात्रस्य पात्रं तव न शोभते ॥ १२ ॥
अहं कुचभराक्रान्ता त्वं तारुण्यतरंगितः ।
उचितेवावयोः प्रीतिः संप्रति क्षमतां व्रतम् ॥ १३ ॥
उत्सृज्यायतलोचनाधरदलस्वादप्रमोदोत्सवं
संभोगामृतनिःस्पृहः शमदमाभ्यासेन शापादिव ।

यः कान्ताकुचकुङ्कुमाङ्कितरुचिर्धत्ते न रागं हृदि D 743
क्लेशक्लिन्नतृणाशिने जनवने दान्ताय तस्मै नमः ॥ १४ ॥
यदि मे प्रीतिलुब्धाया वचनं न करिष्यसि ।
तदेतत्ते बलात्कान्तं पास्यामि वदनाम्बुजम् ॥ १५ ॥
एतदाकर्ण्य संत्रस्त इव कर्णौ पिधाय सः ।
तामूचे नोचितं मातर्मम शासनदूषणम् ॥ १६ ॥
उत्तंसतामुपगतं सुगतव्रतस्य
सत्त्वश्रियः शुचितया तिलकायमानम् ।
सर्वात्मना सुचरिताभरणस्य पुंसः
शीलोपमं न हि विभूषणमस्ति किंचित् ॥ १७ ॥
इत्युक्त्वा संयतः शून्यपात्र एव जगाम सः ।
अपायशल्यविषमां पूजामुत्सृज्य सत्वरम् ॥ १८ ॥
अथ मन्त्रबलां नाम चण्डालीं वेशकामिनीम् ।
वश्याकर्षादिनिर्यन्त्रमन्त्रतन्त्रादितत्पराम् ॥ १९ ॥
आहूय विनिवेद्यास्यै निजं स्मरपराभवम् ।
ययाचे धनसंतुष्टां रागार्तो प्रियसंगमम् ॥ २० ॥
अथ मन्त्रबलाकृष्टस्तथा सपदि पद्मकः ।
विवशस्तां समभ्येत्य किं करोमीत्यभाषत ॥ २१ ॥
सा तमूचे शशिमुखीं भज प्रणयिनीमिमाम् । D 745
पुण्यैरुपनतां कान्तां दीप्तं वा वह्निमाविश ॥ २२ ॥
तां पद्मकोऽवदद् दृष्ट्वा ज्वलितं पावकं पुरः ।
जातसज्जः समुत्सृज्य वस्त्रं सत्त्वसितांशुकः ॥ २३ ॥
विशामि पावकं दीप्तं रागाग्निं न त्वपावकम् ।
पुंसां मदनदग्धानां दाहो जन्मशतानुगः ॥ २४ ॥
इति तस्य वचः श्रुत्वा चण्डाली खण्डिताशया ।
अकार्यकरणोद्विग्ना पश्चात्तापं समाययौ ॥ २५ ॥
स तया क्षान्तिनिलयः प्रणयेन प्रसादितः ।
वेश्यया च सवैराग्यशमशीतलया धिया ॥ २६ ॥
विदधे जन्मसंशुद्ध्यै तयोः सद्धर्मदेशनाम् ।
ते सर्वक्लेशशमनाद्ययार्हत्त्वमवापतुः ॥ २७ ॥
स्वयं चार्हत्त्वमासाद्य भगवन्तं तथागतम् ।
पद्मकः प्रययौ द्रष्टुं श्रावस्तीं स्वस्तिमान् पुरीम् ॥ २८ ॥

D 747 जिनं जेतवनासीनं तत्र दृष्ट्वा प्रणम्य सः ।
कृतकृत्यः स्ववृत्तान्तं भिक्षूणामब्रवीत्पुरः ॥ २९ ॥
भिक्षुभिर्भगवान् पृष्टस्तत्पुण्योदयविस्मयात् ।
वेश्यापद्मकचण्डालीप्राग्वृत्तमवदज्जिनः ॥ ३० ॥
पुरा भगवतः शास्तुः काश्यपाख्यस्य शासने ।
मित्रनामा गृहपतिः प्रव्रज्यां समुपाददे ॥ ३१ ॥
तस्य नन्दा सुनन्दा च भार्ये प्रव्रजिते पुनः ।
भर्तृतुल्यानुभावेन विहारे चक्रतुः स्थितिम् ॥ ३२ ॥
वाक्पारुष्येण महता कलहे भिक्षुणीगणः ।
ताभ्यामुद्वेजितस्तत्र स्वभावः किल दुस्त्यजः ॥ ३३ ॥
चण्डालीवचनेनैका वेश्यावादेन चापरा ।
भिक्षुणीनामधिक्षेपं कृत्वा पापमवापतुः ॥ ३४ ॥
वाग्दोषात्सैव चण्डाली जाता वेश्या तथापरा ।
प्रव्रज्यायाः प्रभावेण पुनः कुशलमाश्रिते ॥ ३५ ॥
स तु मित्रो गृहपतिः पद्मकोऽयं दृढव्रतः ।
विभात्यर्हत्पदावाप्त्या शुचिशीलविभूषणः ॥ ३६ ॥
D 749 पौष्पिकः पुष्पसेनाख्यः पद्मकोऽप्यन्यजन्मनि ।
बभूव पुष्पनिचयैः पूरितार्थिजनः सदा ॥ ३७ ॥
प्रत्येकबुद्धं सोऽभ्यर्च्य भोगेनाच्छाद्य वाससा ।
कमलोत्पलकह्लारकुसुमैः समवाकिरत् ॥ ३८ ॥
तेन पुण्येन जातोऽयं पद्मगर्भनिभप्रभः ।
पद्मकः शासनार्हो मे सुकृतोदारसौरभः ॥ ३९ ॥
रूपं शीलविभूषणं शुचि यशश्चन्द्रावदातं कुलं
चेतः पक्वविवेकनिर्मलतरं संसारवामः शमः ।
एतत्पुण्यमहोदयस्य कृतिनां दृष्टिक्षमं लक्षणं
जातिर्निन्द्यतमा मनश्च मलिनं दुष्कर्मचिह्नं नृणाम् ॥ ४० ॥
इति सर्वज्ञकथितैः कर्मपाककथाद्भुतैः ।
बभूव हर्षसंस्पर्शी भिक्षूणां विस्मयोदयः ॥ ४१ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
पद्मकावदानं सप्ताशीतितमः पल्लवः ॥

## ८८ चित्रहस्तिशय्यातिपुत्रावदानम् । D 751

दृष्ट्या तीव्रतरं हरन्ति नियमं नैव क्षमन्ते शमं
कर्म क्षिप्रमनोरमं हिमसमं पर्यन्तदाहक्षमम् ।
एता बिभ्रति सर्वमेव विषमं स्वप्नोपमं विभ्रमं
त्यक्त्वा कार्यभियः प्रवर्तनधियः संसारसख्यः स्त्रियः ॥ १ ॥

बिम्बिसारस्य नृपतेः पुरे राजगृहे पुरा ।
चित्राख्यो हस्तिशय्यातिपुत्रोऽभूद्गजसैन्यपः ॥ २ ॥
स राजतुल्यं विभवं गृहं च सपरिच्छदम् ।
त्यक्त्वा युवैव प्रव्रज्यां वैराग्याभिमुखोऽग्रहीत् ॥ ३ ॥
पत्नी तस्य सुरूपाख्या प्रभूतविभवे गृहे ।
भर्तृसंभोगरहिता चिरं चिन्तातुराभवत् ॥ ४ ॥
अथ कालेन पर्यन्तचारी परिचितादरात् ।
स चित्रो हस्तिशय्यातिपुत्रः स्वपुरमाययौ ॥ ५ ॥
अभ्यागतस्य तस्याथ सानुगम्य निमन्त्रणम् ।
पूजापुरःसरं चक्रे पत्नी प्रणयशालिनी ॥ ६ ॥
साचिन्तयत्तमालोक्य दूराध्वश्रमनिःसुखम् ।
अहो बतास्य लावण्यं यौवनेनैव धार्यते ॥ ७ ॥ D 753
अस्मिन् वयसि भोगार्हे परित्यज्य गृहश्रियम् ।
मिथ्यैव किमनेनात्मा निर्विचारेण पीडितः ॥ ८ ॥
स्नेहशेषोऽस्य नाद्यापि जाने शान्तस्तपस्विनः ।
गेहं सपक्षपातेन चक्षुषा यन्निरीक्षते ॥ ९ ॥
अथवा धैर्यमेवादौ परीक्ष्य स्थैर्यकारणम् ।
अस्य जानामि वैराग्यं चलं विश्रान्तमेव वा ॥ १० ॥
गृहे भोगगणैस्तृप्तः सर्वः काननमीहते ।
विजने तु सुखभ्रष्टमात्मानमनुशोचति ॥ ११ ॥
इति संचिन्त्य सा तस्य भोजनावसरे पुरः ।
स्वयं तत्याज हर्म्याग्रात्सशब्दं ताम्रभाजनम् ॥ १२ ॥
तेन शब्देन संत्रस्त इवालोक्य दिशः क्षणम् ।
किमेतदिति पप्रच्छ चित्रस्तां संभ्रमोन्मुखः ॥ १३ ॥
ततः स्मितमुखी किंचित्पतितं ताम्रभाजनम् ।
प्रौढा निवेद्य सा तस्मै हर्षात्पुनरचिन्तयत् ॥ १४ ॥

D 755 अयं तावदसंप्राप्तनिर्विकारपदस्थितिः ।
शिथिलं लीलयैवास्य तूर्णमाकृष्यते मनः ॥ १५ ॥
यः पात्रशब्दमात्रेण संत्रासाकुलतां गतः ।
किं किं न क्रियते तस्य विषयैरविमर्षिणः ॥ १६ ॥
सर्वः प्रणश्यति पयोमुचशब्दमात्र-
संत्रासलुप्तधृतिबन्धन एव हंसः ।
ते सन्ति केऽपि कमलासनराजहंसा
ये पुष्कराभ्रगुरुगर्जितनिष्प्रकम्पाः ॥ १७ ॥
इति निश्चित्य मनसा सा शनैर्मृदुवादिनी ।
तमुवाच समभ्येत्य भ्रूलतालास्यलीलया ॥ १८ ॥
तृणवन्मां परित्यज्य त्वयि दूरतरं गते ।
सपत्नीभिरिवाक्रान्तं विपद्भिः पश्य मे गृहम् ॥ १९ ॥
अस्मिन्नपि महारम्भविभवे भोगवर्जिता ।
त्वद्दर्शनाशयैवाहं धृता सख्येव निःसुखा ॥ २० ॥
यदप्यनुचितं वक्तुं दुःखात्तदिदमुच्यते ।
वदन्ती मौनकामेयं जाने जिह्वापि लज्जते ॥ २१ ॥
D 757 नूनं गृहाधिपतिना पत्न्याः शीलस्य विप्लवः ।
दृष्टोऽस्य जातं वैराग्यमकाले कथमन्यथा ॥ २२ ॥
इति स्थितमुखः सर्वः परस्परविलोकनैः ।
वदत्यन्यगुणग्लानिगणनानिपुणो जनः ॥ २३ ॥
वियोगतप्तां मां लोकः स्वस्थचित्तेति मन्यते ।
क्लेशेऽप्यक्लिष्टरूपाहं तारुण्यस्य करोमि किम् ॥ २४ ॥
गृहे परिजनश्चायं ममोच्छृङ्खलतां गतः ।
अस्वामिकानां नारीणामग्रे श्वापि प्रगल्भते ॥ २५ ॥
दाससूनुर्मयैवायमुत्सृष्टेन विवर्धितः ।
पश्याज्ञादानकोपान्मे केशाकर्षणमीहते ॥ २६ ॥
इत्युक्त्वा कृतसंकेता तदा दासपराभवम् ।
भर्तुश्चित्तविकाराय सा प्रत्यक्षमदर्शयत् ॥ २७ ॥
स्पृहामक्लिष्टरूपेति वैक्लव्यं निःसुखेति च ।
ईर्ष्यां जातापवादेति क्रूरं दासार्दितेत्यपि ॥ २८ ॥
स तां विलोकयन् प्राप्य संत्यक्तव्रतयन्त्रणः ।
तुल्यं संसारदोषाणां सर्वेषां वशमाययौ ॥ २९ ॥

पात्रचीवरमुत्सृज्य खड्गमाकृष्य भीषणम्। D 759
प्रियानिकारक्रौर्येण स दासं हन्तुमुद्ययौ ॥ ३० ॥
प्रणयाद्वारितः पत्न्या सद्यः स वधवैशसात्।
लीनं पुनर्गृहसुखं भोजनेन जिगीषया ॥ ३१ ॥
सोऽभूद्भोगपरिग्रहेण ललनासंभोगसौभाग्यभू-
र्नानाकारनिकारकारणकथानृत्येषु कोपाकुलः।
कामः कर्षति संयमं क्षपयति क्रोधः क्षणेन क्षमां
नो मिथ्याव्रतशोषितेन मनसा वैराग्यमासाद्यते ॥ ३२ ॥
अथ हस्तिमहामात्रपदं राज्ञार्पितं पुनः।
आसाद्य विभवोदारः सोऽभूदभ्यधिकोद्भवः ॥ ३३ ॥
अत्रान्तरे पिण्डपातमादाय नगरान्तरात्।
भगवन्तं वनासीनं जिनमभ्येत्य भिक्षवः ॥ ३४ ॥
विषण्णवदनास्तस्मै प्रणिपत्य न्यवेदयन्।
चित्रस्य हस्तिशय्यातिपुत्रस्यानुचितं व्रतम् ॥ ३५ ॥
भगवानथ सर्वज्ञः सस्मितस्तानभाषत।
अपक्वकुशलेनैव कृतस्तेन व्रतग्रहः ॥ ३६ ॥
ये निष्पन्नविवेकपापकलनानिःशेषिताशालता- D 761
स्ते नायान्ति पुनः पुराणविषयास्वादस्मृतेर्वश्यताम्।
ये त्वर्थप्रतिषिद्धगर्वशिथिलत्यक्तप्रसक्तादरा-
स्तेषामन्तरसीम्नि कामसमयो दोलायमानं मनः ॥ ३७ ॥
जन्माभ्यासनिषक्त एष विषयस्पर्शाभिलाषः परं
विद्वांसोऽपि परित्यजन्ति नियमं येनावटे पातिताः।
रागोदग्रविषा विशन्ति विषमध्वान्तां भुवं भोगिनः
कामः कस्य करोति कीर्णविशिखासारे विकारे क्षमाम् ॥ ३८ ॥
इत्युक्त्वा भगवान् गत्वा चित्रस्य भवनं जिनः।
देहप्रभाभिस्तिमिरं बाह्यमुन्मूलयन् पुरः ॥ ३९ ॥
अनुग्रहप्रकाशेन कृत्वास्य विमलं मनः।
कृतप्रणामसत्कारं तं निनाय निजाश्रमम् ॥ ४० ॥
पुनस्तत्रास्य निर्व्याजप्रव्रज्यावर्जनाजुषः।
जिनः प्रविदधे सिद्ध्यै शुद्धसद्धर्मदेशनाम् ॥ ४१ ॥
स प्राप्तार्हत्पदे तस्मिन् सकलक्लेशसंक्षयात्।
तत्पूर्ववृत्तं भगवान् पृष्टो भिक्षुभिरभ्यधात् ॥ ४२ ॥

D 763 जन्मान्तरे पुरा तेन भक्त्या सततमर्चितः।
प्रत्येकबुद्धश्चैत्यं च तस्यान्ते विहितं महत् ॥ ४३ ॥
तत्पुण्यप्रणिधानेन धन्योऽयं मम शासने।
प्रव्रज्यां समुपादाय चित्रोऽर्हत्पदमाश्रितः ॥ ४४ ॥
कारणं श्रूयतामस्य पुनः कामप्रवर्तने।
एष प्रतारितः पत्न्या पूर्वस्मिन्नपि जन्मनि ॥ ४५ ॥
बभूव ब्रह्मदत्तस्य वाराणस्यां महीपतेः।
परिपूर्णगुणः श्रीमान् हरिदत्तः पुरोहितः ॥ ४६ ॥
निष्पन्नविद्याविनयौ पुत्रौ तस्य बभूवतुः।
हरिद्रायण इत्येकस्तथा हरिशिखोऽपरः ॥ ४७ ॥
तौ विवेकाप्तवैराग्यौ भवभोगपराङ्मुखौ।
तपोवने परिव्रज्य पञ्चाभिज्ञत्वमापतुः ॥ ४८ ॥
तौ व्योमचारिणौ राज्ञा पूज्यमानौ जनेन च।
प्रापतुः प्रशमश्लाघ्यौ मुनीनामपि मान्यताम् ॥ ४९ ॥
कदाचिद्भूपभवनं स्थिते हरिशिखे नृपः।
कन्यां लावण्यवत्याख्यामूचे दिग्विजयोन्मुखः ॥ ५० ॥
D 765 वत्से त्वया मुनेरस्य गौरवेण गरीयसा।
पूज्यस्य पूजनं कार्यं सत्कारार्हो ह्ययं मम ॥ ५१ ॥
सुतामिति समादिश्य प्रयाते पृथिवीपतौ।
राजपुत्री सदैवाभूत्पूजाप्रणयिनी मुनेः ॥ ५२ ॥

हेमच्छेदच्छविपरिचितां कान्तिमङ्गे दधानं
तं पश्यन्ती कमलनयनं साभिलाषाभवत्सा।
कामः कामं रुचिरविषयालम्बनः सङ्गमाशां
प्रत्यासत्त्या किमपि हृदये बद्धमूलां करोति ॥ ५३ ॥

सा निःश्वसन्ती स्मरसंभ्रमेण
बालानिलेनाकुलिता लतेव।
अङ्गैरनङ्गस्य मुनेश्चकार
सानन्दमालिङ्गनमानताङ्गी ॥ ५४ ॥

नवकुचमुखलग्नेनाङ्गरागेण तस्या
हृदि मदननृपाज्ञालेख्यमुद्रां दधानः।
मुनिरभवदकाण्डे संयमालानभङ्गा-
दभिमतनवलीलोच्छृङ्खलस्तत्क्षणेन ॥ ५५ ॥

वृषव्यपायान्मिथुनक्रियायां
समुद्यतः कर्कटदुर्ग्रहेण ।
स राजसिंहस्य गृहेऽर्कतुल्य- D 767
स्तापाय कन्यागमनोत्सुकोऽभूत् ॥ ५६ ॥
न मन्त्रैरुत्सार्यं न च रुचिमयैः शास्त्रमणिभि-
र्न योगैर्न ध्यानैर्न च शमविशेषौषधिरसैः ।
मुहुर्मूर्च्छामोहप्रणयमयमालिङ्गनविधौ
भुजंगीनां नूनं विषमविषमङ्गे निवसति ॥ ५७ ॥
निपातितः प्रीतिमये मृगाक्ष्या
स चौर्यसंभोगरसे ममज्ज ।
मनीषिणामप्यविवेकजन्मा
धैर्यान्तकृन्मन्मथसंनिपातः ॥ ५८ ॥
रागः सङ्गपराङ्मुखे हृदि जपाधारेऽधरे चुम्बनं
ध्यानालम्बिविलोचने प्रणयिनीलावण्यपानोत्सवः ।
पाणौ पात्रपवित्रिते कुचयुगं पुष्पायुधाराधने
तस्याः संयमदीक्षयैव नवतां सर्वं जगाम व्रतम् ॥ ५९ ॥
तस्याभूद्भूपतिसुता भुजपञ्जरवर्तिनी ।
दीप्ता सेर्ष्येव सहसा तपःसिद्धिपराङ्मुखी ॥ ६० ॥
न तं विज्ञातवृत्तोऽपि भीत्यान्तःपुरिको जनः । D 769
महत्यविनये तस्मिन् कश्चिन्नोवाच किंचन ॥ ६१ ॥
चिरप्रत्यागतस्याथ भूपतेर्विजयोत्सवः ।
बभूवाद्भुतसंभारप्रभूतविभवोद्भवः ॥ ६२ ॥
स पूर्वं भक्तिविनतः स्वयं हरिशिखं मुनिः ।
भूपतिं भूमिपालार्हैः सर्वभोगैरपूजयत् ॥ ६३ ॥
भुञ्जानस्य क्षितिपतौ प्रणयात्पुरतः स्थिते ।
मुनेर्लावण्यवत्यग्रे परिचर्यापराभवत् ॥ ६४ ॥
ततस्तां हेमभृङ्गारव्यग्रपाणियुगां मुनिः ।
एहीति विस्मृतधृतिः प्रसार्य भुजमब्रवीत् ॥ ६५ ॥
तस्य स्मरविकारं तं दृष्ट्वैव कुपितो नृपः ।
पापप्रतिक्रियायोगे निग्रहे विदधे मतिम् ॥ ६६ ॥
क्रूरकोपं पितुर्वक्त्रं दृष्ट्वा लावण्यवत्यपि ।
कण्ठलग्नं मुनेर्भक्ष्यमित्युक्त्वास्य ददौ पयः ॥ ६७ ॥

पापापह्नववैचित्र्यप्रत्युत्पन्नगिरः परम् ।
मायामये विनिमये बृहस्पतिधियः स्त्रियः ॥ ६८ ॥

D 771 दुहितुर्वचसा तेन सहसैव प्रसन्नताम् ।
नृपः कतकचूर्णेन जलाशय इवाययौ ॥ ६९ ॥

अत्रान्तरे मुनेस्तस्य ज्येष्ठो भ्राता वनस्थितिः ।
विनष्टां दिव्यधीर्ज्ञात्वा लुप्तर्द्धेर्गगने गतिम् ॥ ७० ॥

दुःखितः स्वयमभ्येत्य तं नीत्वा निजमाश्रमम् ।
पञ्चाभिज्ञं पुनश्चक्रे चतुर्ध्यानपरायणम् ॥ ७१ ॥

नरपतिरपि ज्ञात्वा रागोदधौ पतितं मुनिं
विषमविषयक्लेशावर्तात्पुनश्च विनिर्गतम् ।
बहुतरतपस्तेजोदग्धस्मरस्मृतिपातकं
रुषमुपचितां त्यक्त्वा धीमान् प्रसादमुपाययौ ॥ ७२ ॥

हरिहायनसंज्ञोऽसावहमेव तदाभवम् ।
चित्रो हरिशिखश्चाभूत्तत्पत्नी च नृपात्मजा ॥ ७३ ॥

अवितथां प्रथितां स्वकथामिमां
कथितवानिति तत्र तथागतः ।
प्रसभमेव भवाभिभवे मतिः
किमपि भिक्षुगणस्य ययाभवत् ॥ ७४ ॥

इति श्रीक्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
चित्रहस्तिशय्यातिपुत्रावदानमष्टाशीतितमः पल्लवः ॥



## ८९ धर्मरुच्यवदानम् । D 773

उद्भूतभैरवघनानिलनिर्मितोर्मि-
संपूरिताखिलदिगन्तरघोरघोषः ।
दुर्वारवारिविकृतिर्मकराकरोऽपि
सौम्यत्वमेति सुगतस्मरणेन पुंसाम् ॥ १ ॥

श्रावस्त्यां स्वस्तये सर्वजगतां सततोद्यते ।
जिने जेतवनारामविहारनिरते पुरा ॥ २ ॥
विपुलद्वीपयात्रायामुत्साहेन कृतक्षणः ।
रत्नार्थी वणिजां सार्थस्तीरं प्राप महोदधेः ॥ ३ ॥
ततः प्रवहणारूढे सार्थे गुरुतरं भरम् ।
विचिन्त्य कर्णधारस्तानूचे मज्जनशङ्कितः ॥ ४ ॥
केयं युष्माकमौत्सुक्यादारोहणपरंपरा ।
तुङ्गत्तरंगशृङ्गोऽयं न गृहाङ्गणमम्बुधिः ॥ ५ ॥
सर्वस्तावत्प्रवहणे भवद्भिः क्रियतां भरः ।
रत्नराशिर्न कस्येष्टः किं त्वब्धिर्बहुविप्लवः ॥ ६ ॥
अन्यत्रोर्मिप्रबन्धः खरमकरकुलव्याकुलोऽन्यत्र वेगः D 775
कीर्णोऽन्यत्रान्तराद्रिस्थिरशिखरघनोद्घातसंपाकतोयः ।
अन्यत्रोद्यत्कृतान्तश्वसिततरमरुत्संनिपातभ्रमोऽब्धे-
श्चण्डोऽन्यत्रास्त्यकाण्डक्षयनिबिडशिखामण्डलो वाडवाग्निः ॥ ७ ॥
श्रुत्वेति कर्णधारेण कथितं रूपमम्बुधेः ।
अवरुह्य ययुः केचित्तस्थुः केचिन्महाशयाः ॥ ८ ॥
रत्नद्वीपमथासाद्य याते सार्थे कृतार्थताम् ।
अनुकूलानिले काले प्रत्यावृत्ते शनैः शनैः ॥ ९ ॥
ददृशुर्वणिजः सर्वे पुरः संपूरिताम्बरम् ।
विसारितास्यकुहरं मन्दराद्रिमिवोद्गतम् ॥ १० ॥
सकूर्ममीनमकरः सलीलः सकलोऽम्बुधिः ।
तस्यैवाभिमुखं वेगात्प्रस्थितः श्वभ्रपातवत् ॥ ११ ॥
कृतान्तवक्त्रकुहरासन्ने प्रवहणे ततः ।
पप्रच्छुर्वणिजः कर्णधारं विप्लवविह्वलाः ॥ १२ ॥
अभूतपूर्वमुद्भूतं भूतं किमिदमद्भुतम् ।
उदितं मूर्ध्नि चण्डांशुयुगलं यत्र दृश्यते ॥ १३ ॥

D 777 अस्याभिमुखमेतत्किं सलिलं परिसर्पति।
कृष्यमाणं प्रवहणं यस्य वेगेन घूर्णते ॥ १४ ॥
इत्यकाण्डक्षयारम्भभयसंभ्रमकातरैः।
वणिग्भिः संशये पृष्टः कर्णधारः समभ्यधात् ॥ १५ ॥
तिमिंगिलगिलिर्मत्स्यः सत्त्वसंहारकृन्महान्।
संमोह इव संसारे निवसत्येष सागरे ॥ १६ ॥
अस्य कल्पान्तघोरस्य नेत्रयुग्मं प्रदृश्यते।
द्वादशार्कोदयारम्भे सूर्यद्वयमिवोदितम् ॥ १७ ॥
अस्यास्यश्वभ्रपर्यन्ते शुभ्राभ्रपरिवारिता।
महाद्रिशृङ्गमालेव लक्ष्यते दशनावली ॥ १८ ॥
प्रवाहेण प्रवहणं कृष्टमस्यास्यपातिना।
विषयाभिमुखं चित्तमिव धर्तुं न शक्यते ॥ १९ ॥
स्मर्यतां दैवतं किंचिज्जन्मान्तरशुभप्रदम्।
प्रतिक्रियास्मिन्नास्त्येव निधने कर्मनिर्मिते ॥ २० ॥
इत्युक्तं कर्णधारेण श्रुत्वा सर्वे वणिङ्नराः।
नमो बुद्धाय बुद्धायेत्यूचुः साक्रन्दनादिनः ॥ २१ ॥
D 779 नादं तेषां भयार्तानां भगवान् भूतभावनः।
दिव्यश्रोत्रेण शुश्राव जिनो जेतवने स्थितः ॥ २२ ॥
बुद्धाभिधानं श्रुत्वैव तमःप्रशमनं तिमिः।
शनैर्निमीलयन् वक्त्रं सत्त्वोपप्लवशान्तये ॥ २३ ॥
संवृतास्ये शनैस्तस्मिन् प्रतिवेगौघविप्लवात्।
कालवक्त्रात्प्रवहणं मुक्तं सततमाययौ ॥ २४ ॥
ततः कुशलिनः सर्वे तीर्णास्तीव्रतराद्भयात्।
श्रावस्तीं रत्नसंपूर्णां विविशुर्विश्रुतश्रियः ॥ २५ ॥
ते गत्वा भक्तिसंयुक्ता व्यसनत्राणकारिणम्।
जिनं जेतवनासीनं भगवन्तं ववन्दिरे ॥ २६ ॥
ते तस्य दर्शनेनैव छिन्नसंसारबन्धनाः।
सद्यः प्रसादमासाद्य प्रव्रज्यार्हत्त्वमाययुः ॥ २७ ॥
अभवन् काश्यपाख्यस्य शास्तुः शासनवर्तिनः।
एते जन्मनि पूर्वस्मिन् प्रोवाच भगवानिति ॥ २८ ॥
तिमिंगिलगिलिस्त्वब्धौ विरतः सत्त्वसंहृतेः।
प्राप क्षणेन तीक्ष्णाग्निक्षुत्क्षतः प्राणसंशयम् ॥ २९ ॥

क्लिन्नं कलेवरं तस्य दुरामोदासहिष्णुभिः । D 781
सोद्वेगैर्बलिभिर्नागैः क्षिप्तं जलनिधेस्तटे ॥ ३० ॥
स शुष्कास्थिमयः कायः कालेन क्षालितोऽम्बुभिः ।
तुषारराशिसंछन्नः शैलकूट इवाबभौ ॥ ३१ ॥
श्रावस्त्यां ब्राह्मणस्याथ सुमतेः पुत्रतां गतः ।
मातुः स चक्रे गर्भस्थस्तीव्रां क्षुद्दुःखवेदनाम् ॥ ३२ ॥
स जातः स्त्रीशतस्तन्यैस्तृप्तिं न क्षुधितो ययौ ।
स शनैर्वर्धमानश्च संभृतैर्भूरिभोजनैः ॥ ३३ ॥
अतृप्त्या परमुद्विग्नः स गत्वा भिक्षुसंगमम् ।
प्रव्रज्यां समुपादाय तृप्तिं न प्राप पिण्डकैः ॥ ३४ ॥
बहुभुग्विश्रुतः सोऽथ विपुलैः संघभोजनैः ।
श्रद्धानिमन्त्रणैस्तैस्तैर्न क्वचित्तृप्तिमाययौ ॥ ३५ ॥
अत्रान्तरे गृहपतिः श्रीमान् दानव्रताभिधः ।
निमन्त्रणाय भिक्षूणां श्रद्धया समुपाययौ ॥ ३६ ॥
संघेऽन्यत्र गते भोक्तुं तमेव बहुभोजनम् ।
एकमेव स संप्राप्य भोज्यं तस्मै न्यवेदयत् ॥ ३७ ॥
तस्मिन् क्षणेन भुञ्जाने प्रभूतपुरुषाशनम् । D 783
ददौ गृहपतिस्तस्मै समस्तं संघभोजनम् ॥ ३८ ॥
अन्धसां शकटे तेन भुक्ते विस्मयकारिणा ।
भीत्या गृहपतिर्भूतशङ्कार्तः समचिन्तयत् ॥ ३९ ॥
अहो मयायं संप्राप्तः सुकुमारोऽल्पकाशनः ।
निःशेषं भुक्तमेकेन येन संघस्य भोजनम् ॥ ४० ॥
प्रसङ्गेन न यक्षोऽयं यावन्मामपि खादति ।
दत्वास्मै दक्षिणां तावज्जवादपसराम्यहम् ॥ ४१ ॥
इति संचिन्त्य साशङ्कस्तस्मै दत्वा स दक्षिणाम् ।
पश्चादागमनत्रासाद् ययौ विवलिताननः ॥ ४२ ॥
गत्वा भगवते सर्वं तद्वृत्तान्तं निवेद्य सः ।
कोऽसौ यक्षो नु रक्षो वेत्यपृच्छत्सुगतं पुरः ॥ ४३ ॥
भगवानपि तं प्राह नासौ यक्षो न राक्षसः ।
एष धर्मरुचिर्नाम भिक्षुरर्हत्त्वमेष्यति ॥ ४४ ॥
अथ धर्मरुचिं शास्ता स्वयं नीत्वा विहायसा ।
अदर्शयन्निजं तस्य विकरालं कलेवरम् ॥ ४५ ॥

D 785 तदपर्यन्तमालोक्य संसारमिव भीषणम् ।
किमेतदिति पप्रच्छ खेदाद्धर्मरुचिर्जिनम् ॥ ४६ ॥
तमवोचत्स सर्वज्ञः किंचित्स्मितसितानन: ।
अयं भयंकरः कायः शुष्कः स्थूलास्थिपञ्जरः ॥ ४७ ॥
भज धर्मरुचे शान्तिं त्यज भावपरिग्रहम् ।
स्थवीयसी तवैवेयं पृष्ठस्थूणास्थिशृङ्खला ॥ ४८ ॥
श्रुत्वैतत्सुगतेनोक्तं कलयन् स्वकलेवरम् ।
भवभ्रमे धर्मरुचिः परं निर्वेदमाययौ ॥ ४९ ॥
सोऽचिन्तयदहो मोहमार्गे संसरतां नृणाम् ।
क्षणप्रतिश्रये काये पान्थानां निजवासना ॥ ५० ॥
विसंस्थास्थिस्थूणः प्रकटदशनश्रेणिविकटः
प्रनष्टः कायोऽयं कृमिकुलचितच्छिद्रनलकः ।
इमास्ताः सापायाः प्रलयभयमायाप्रणयिणां
नृणां रोहत्स्नेहाः सरसविषयास्वादनभुवः ॥ ५१ ॥
इति संजातवैराग्यं स्वकलेवरदर्शनात् ।
व्योम्ना जिनस्तमादाय ययौ जेतवनं पुनः ॥ ५२ ॥
D 787 तत्रास्य चक्रे भगवान् दयया देशनां यया ।
स्रोतःसकृदनागामि स यदर्हत्त्वमाप्तवान् ॥ ५३ ॥
सर्वक्लेशविनिर्मुक्तः स प्रणम्य तथागतम् ।
प्राग्जन्मनिचयस्मृत्या प्रययौ सस्मिताननः ॥ ५४ ॥
ततः कदाचिदायातं तं भिक्षुगणसंनिधौ ।
जगाद भगवान् प्रीत्या सर्वज्ञश्छिन्नबन्धनम् ॥ ५५ ॥
चिरस्य किं धर्मरुचे महता सुचिरेण च ।
क्लेशाध्वविपुले काले चिराच्चिरतरेण च ॥ ५६ ॥
वद धर्मरुचे कच्चिच्चिरसंचारसंचितैः ।
तैरपारपरिक्लेशैर्न श्रान्तोऽसि निरन्तरैः ॥ ५७ ॥
इति धर्मरुचिः पृष्टः सर्वज्ञेन सतां पुरः ।
प्राग्जन्मस्मृतिदातारं भगवन्तमभाषत ॥ ५८ ॥
चिरस्य तावद्भगवन् महता सुचिरेण च ।
क्लेशाध्वविपुले काले चिराच्चिरतरेण च ॥ ५९ ॥
नानाकारैर्गुरुतरभरैर्गर्भशय्यामलाङ्कैः
भ्रान्तः श्रान्तश्चिरतरधृतैः कायकन्थासमूहैः ।

त्वां लब्ध्वाहं व्यसनकरुणाबान्धवं दुःखितानां D 789
प्राप्तः सर्वावरणरहितां हन्त विश्रान्तिमेताम् ॥ ६० ॥
इति धर्मरुचेस्तत्र जिनस्य च कथान्तरे ।
कौतुकाद्भिक्षुभिः पृष्टस्तद्वृत्तं सुगतोऽभ्यधात् ॥ ६१ ॥
पूर्वस्मिन् भगवान् कल्पे क्षेमनाम्नि महीपतौ ।
क्षेमंकराख्यः सुगतः क्षेमवत्यामभूत्पुरि ॥ ६२ ॥
तस्य काले गृहपतिर्धर्मशीलाभिधोऽभवत् ।
समुद्रयात्रासंरब्धरत्नैर्वैश्रवणोपमः ॥ ६३ ॥
कृत्वा सर्वं जगत्कार्यं तस्मिन्नथ तथागते ।
निर्वाणधातुसंलीने कालेनामिततेजसि ॥ ६४ ॥
धर्मशीलो गृहपतिस्तद्वियोगाग्नितापितः ।
भक्त्या भगवतस्तस्य स्तूपं कर्तुं समुद्ययौ ॥ ६५ ॥
मणिकाञ्चनसंभारं स्तूपारम्भे महात्मनः ।
जिनशासनविद्वेषाद्विप्रास्तस्य न्यवारयन् ॥ ६६ ॥
विप्राणां धर्मविघ्नानां राज्ञो वृत्तं निवेद्य सः ।
तद्दत्तं सुभटं प्राप्य प्रतिषेधकवारणम् ॥ ६७ ॥
नाम्ना सहस्रयोधीति स राजसुभटः कृती । D 791
निर्भर्त्स्य विदधे विप्रान् दण्डत्रासपराङ्मुखान् ॥ ६८ ॥
हेमस्तूपं गृहपतिर्निचितं मणिमौक्तिकैः ।
वीतविघ्नं ततः कृत्वा प्रणिधानं समादधे ॥ ६९ ॥
सत्त्वसंतारणासक्तां सुधासिक्तामनुत्तराम् ।
अनेन कुशलेनाहं सम्यक्संबोधिमाप्नुयाम् ॥ ७० ॥
सहस्रयोधी तेनोक्तमेतदाकर्ण्य सादरः ।
श्रावकोऽहं तवैव स्यामित्यूचे प्रणिधानवान् ॥ ७१ ॥
धर्मशीलस्तमवदत् स प्राप्य ज्ञानलोचनम् ।
प्रभूतपापः कृच्छ्रेण श्रावकस्त्वं भविष्यसि ॥ ७२ ॥
बहुवर्षे गते काले विशालकुकृतक्षयात् ।
बुद्धाभिधानमाकर्ण्य कुशलं समवाप्स्यसि ॥ ७३ ॥
धर्मशीलो गृहपतिः सोऽहमेव तदाभवम् ।
सहस्रयोधी यश्चाभूत्सोऽयं धर्मरुचिश्चिरात् ॥ ७४ ॥
द्वितीयकल्पे भगवान् द्वीपाख्ये पृथिवीपतौ ।
दीपंकराभिधः शास्ता दीपवत्यामभूत्पुरि ॥ ७५ ॥

D 793 तपोवनरुचिर्भक्त्या कदाचित्तेन भूभुजा।
जिनः पुरप्रवेशाय स गत्वा स्वयमर्थितः॥ ७६॥
प्रणये नृपतेस्तस्मिन् वात्सल्येन प्रसादिना।
सुगतेनाभ्युपगते संभारः समवर्तत॥ ७७॥
स राजा काशीनगरीं वासवाख्यस्य भूपतेः।
सुहृदः प्राहिणोद्दूतं भगवान् दृश्यतामिति॥ ७८॥
अत्रान्तरे वासवेन राज्ञा द्वादशवार्षिके।
यज्ञे समाप्ते विधिवत्कल्पिताः पञ्च दक्षिणाः॥ ७९॥
तं देवतावद्द्रूपं विप्रौ त्वामागमिष्यतः।
सुमतिश्च मतिश्चेति दानार्हः प्रथमस्तयोः॥ ८०॥
अथाध्ययनपर्यन्ते गुरवे दक्षिणार्थिने।
यज्ञक्षेत्रं क्षितिपतेस्तौ समाजग्मतुर्द्विजौ॥ ८१॥
वासवोऽपि महीपालस्तन्नामश्रवणादरात्।
ददौ हृष्टः सुमतये यज्ञान्ते पञ्च दक्षिणाः॥ ८२॥
चतूरत्नमयीं शय्यां हैमौ दण्डकमण्डलू।
D 795 सुवर्णरत्नपात्रीं च हिरण्यशतपञ्चकम्॥ ८३॥
अलंकृतां च स्वसुतां नृपे दातुं समुद्यते।
सुमतिर्नाग्रहीत्कन्यां ब्रह्मचर्यमुदाहरन्॥ ८४॥
कन्यापि सुन्दरी नाम तं दृष्ट्वा कनकद्युतिम्।
साभिलाषा समुत्सृज्य लज्जां चक्रे तदर्थनाम्॥ ८५॥
प्रत्याख्याता ततस्तेन सा कन्या ब्रह्मचारिणा।
वैराग्याद्बन्धुविमुखी ययौ द्वीपवतीं पुरीम्॥ ८६॥
तत्रालंकाररत्नानां कुर्वाणा विक्रयं शनैः।
सा मूल्यक्रीतकुसुमैः सदा चक्रे सुरार्चनम्॥ ८७॥
सुमतिर्गुरवे दत्वा दक्षिणाप्तं समीहितम्।
हिरण्यशेषं तत्पत्न्या निर्दिष्टं स्वयमग्रहीत्॥ ८८॥
तस्यामेव विभावर्यां स्वप्नान् दश ददर्श सः।
पानं सुधासमुद्रस्य गमनं गगनेन च॥ ८९॥
चन्द्रार्कस्पर्शनं राज्ञां मुनीनामथ याजनम्।
श्वेतेभहंससिंहाद्रिशिखरारोहणं तथा॥ ९०॥
सोऽथ प्रबुद्धः स्वप्नानां फलं श्रोतुं महामुनेः।
जगाम पञ्चाभिज्ञस्य पर्णादस्य तपोवनम्॥ ९१॥

स तेन पृष्टः प्रोवाच त्वत्स्वप्नानां फलोदयम्। D 797
जिनो जानाति भगवान् द्वीपवत्यां पुरि स्थितः॥ ९२॥
तच्छ्रुत्वा सुमतिस्तूर्णं स्वप्नव्याकरणोत्सुकः।
सहैव मतिना भ्रात्रा ययौ द्वीपवतीं पुरीम्॥ ९३॥
तस्मिन्नवसरे राज्ञा द्वीपेन विपुलोत्सवे।
सा प्रवेशे भगवतः पुरी रत्नाम्बरैर्वृता॥ ९४॥
यत्पूजापुष्पसंभारे संभृते तत्र भूभुजा।
क्रयविक्रयवीथीषु नैवादृश्यत पुष्पकम्॥ ९५॥
ततः सा सुन्दरी कन्या पुष्पं दुर्लभतां गतम्।
पूजाविच्छेददुःखार्ता मालाकारमवोचत॥ ९६॥
ततः सुमतिपुण्यानां प्रभावादप्यपङ्कजे।
ह्रदे बभूव कस्मिंश्चित्तत्कालकमलोद्भवः॥ ९७॥
तानि राजभयात्तस्यै लुब्धः प्रच्छाद्य मालिकः।
ददौ साप्यम्बुकुम्भान्तर्निक्षिप्य त्वरितं ययौ॥ ९८॥
सुमतिर्जिनपूजायै कुसुमार्थी परिभ्रमन्।
तां फुल्लपद्मबहुलां ददर्श पथि सुन्दरीम्॥ ९९॥
पुण्यानुभावात्तस्यैव कुम्भाभ्यन्तरसंवृतैः। D 799
सजीवितैरिव मुखं दर्शितं कमलैस्ततः॥ १००॥
अर्थ्यमाना हिरण्येन सा तेन कमलार्थिना।
साभिलाषा परिज्ञाय सस्मिता तमभाषत॥ १०१॥
त्यक्ताहं भवता पूर्वं कुसुमान्यद्य याचसे।
कन्यासंभाषणं साधो न युक्तं ब्रह्मचारिणः॥ १०२॥
तव पुष्पप्रदानेन भार्या स्यामन्यजन्मसु।
इत्येवं प्रणिधानेन ददाम्येतानि नान्यथा॥ १०३॥
एवमस्त्विति तेनोक्ते पञ्च पर्वाणि सा ददौ।
तस्मै स्वयं च पूजायै जग्राह कमलद्वयम्॥ १०४॥
अथ द्वीपक्षितिपतिर्वासवश्च महीपतिः।
भगवन्तं समायान्तं भक्त्या प्रत्यभिजग्मतुः॥ १०५॥
तस्य रत्नशलाकाङ्कं दीप्तं छत्रमथाग्रहीत्।
चामरं चन्द्रधवलं वासवो वसुधाधिपः॥ १०६॥
सुरसिद्धर्षिगन्धर्वैः पूज्यमानस्य सर्वतः।
पुरप्रवेशे तस्यासीत्सर्वसत्त्वसुखोत्सवः॥ १०७॥

D 801 निबिडे जनसंपाते जिनसंदर्शनोत्सुकः।
सुमतिस्तत्प्रभावेण कथंचिन्मार्गमाप्तवान् ॥ १०८ ॥
क्षिप्त्वा शास्तुश्चरणयोः कमलानि कृताञ्जलिः।
स तं ववन्दे सानन्दः क्षितौ कीर्णजटाभरः ॥ १०९ ॥
तस्य पद्मानि वैपुल्यं सुकृतानीव तत्क्षणात्।
अवाप्य चक्रुश्चक्राभां सर्वां संचारिणीं पुरः ॥ ११० ॥
सुन्दर्या सादरोत्सृष्टं भक्त्या भगवतोऽग्रतः।
फुल्लारविन्दयुगलं ययौ कर्णावतंसताम् ॥ १११ ॥
जटाकटप्रः सुमतेः सुगतेन प्रणामिनः।
व्यशीर्यत पदाक्रान्तः प्रादुरासीत्तथापरः ॥ ११२ ॥
लब्धाकाशगतौ तस्मिन् प्रयाते कृतकृत्यताम्।
शृण्वतः सर्वलोकस्य बभाषे भगवाञ्जिनः ॥ ११३ ॥
सम्यक्संबोधिमासाद्य सुमते त्वमनुत्तराम्।
लोके शाक्यमुनिर्नाम भविष्यसि तथागतः ॥ ११४ ॥
उदीरिते जिनेनेति पुष्पवर्षे दिवश्च्युते।
जटां स्तूपप्रतिष्ठायै जगृहुः सर्वमन्त्रिणः ॥ ११५ ॥
D 803 भगवच्चरणाक्रान्ता भ्रातुर्दृष्ट्वा जटाः क्षितौ।
श्रोत्रियत्वाभिमानेन मतिः कोपाकुलोऽभवत् ॥ ११६ ॥
निवार्य सुमतिस्तस्य विकारं मोहसंभवम्।
तेनैव सहितः शास्तुः प्रव्रज्यामग्रहीत्पुरः ॥ ११७ ॥
ततः कालेन सुमतिर्देहान्ते तुषिताभिधम्।
अवाप देवनिलयं मतिश्च नरकं ययौ ॥ ११८ ॥
सोऽहं सुमतिरेवाद्य मतिश्च मतिविक्लवात्।
अयं धर्मरुचिः क्लिष्टः सुन्दरी सा यशोधरा ॥ ११९ ॥
तृतीये भगवान् कल्पे क्रकुच्छन्दस्तथागतः।
अनुत्तरज्ञाननिधिर्जम्बुद्वीपे पुराभवत् ॥ १२० ॥
बभूव समये तस्मिन्नुज्जयिन्यां महाधनः।
वणिक्चन्दनदत्ताख्यः प्रख्यातक्रयविक्रयः ॥ १२१ ॥
तस्य कामबलाख्यायां जायायां मदनद्युतिः।
अश्वदत्ताभिधानोऽभूत्पुत्रः काय इव प्रियः ॥ १२२ ॥
अर्थार्थी स जगामाब्धिं पत्नीन्यस्तगृहस्थितिः।
धनेन धनिनां तृष्णा लवणेनेव वर्धते ॥ १२३ ॥

तत्पत्नी प्रोषिते पत्यौ यौवनोन्मादमोहिता। D 805
गृहचिन्ताः परित्यज्य कामध्यानपराभवत् ॥ १२४ ॥
कुमारमश्वदत्तं सा निधाय धनकर्मणि।
सदा प्रासादशृङ्गस्था राजमार्गं व्यलोकयत् ॥ १२५ ॥
स्वैरावकाशरहिता बहुभृत्यजने गृहे।
वृद्धधात्रीः समभ्येत्य दीर्घोच्छ्वासाज्जगाद सा ॥ १२६ ॥
विभवे बहुभोगेऽस्मिन्नाज्ञाधीनजने गृहे।
स्वैरसंचारहीनाया मातः सत्यं न मे रतिः ॥ १२७ ॥
नाधिकारैर्न सत्कारैर्नालंकारैर्न भोजनैः।
विना पुरुषसंभोगं भजन्ते ललनाः सुखम् ॥ १२८ ॥
तस्माद्गृहं परित्यज्य गच्छामि च्छन्दचारिणी।
बाल्ये जातः सुतोऽप्येष न स्नेहायतनं मम ॥ १२९ ॥
कुलकूलद्वयाबद्धा बन्धुबन्धनयन्त्रणाम्।
न सहन्ते तरंगिण्यो रतिशीला हि योषितः ॥ १३० ॥
इति ब्रुवाणां तामूचे धात्री वात्सल्यविक्लवा।
वत्से न गमनं युक्तं त्यक्त्वा सुविपुलां श्रियम् ॥ १३१ ॥
बहुकृत्ये गृहे त्वस्मिन् गुप्तचर्या नियुज्यते। D 807
क्षणेन स्वैरचरितं राजमार्गेषु धावति ॥ १३२ ॥
कथं रक्षसि चारित्रं संतप्ता यौवनोष्मणा।
कथं गृहनिधानं च पादेनोत्सार्य गच्छसि ॥ १३३ ॥
इतः कामविषावेशः श्वभ्रपातः क्षणादितः।
अस्मिन्नुभयसंदेहे न जाने किं करिष्यसि ॥ १३४ ॥
तावत्प्राणपणेनापि चपलाः सकुतूहलाः।
परस्त्रियं प्रार्थयन्ति न यावद्वस्त्रमुज्झति ॥ १३५ ॥
न न नेति समुत्कम्पिरसनांशुककर्षणे।
गच्छामि मुञ्च मुञ्चेति क्वणन्ती कस्य नेप्सिता ॥ १३६ ॥
दृष्ट्वा विवसनां वृत्तकर्तव्यः सर्वथा जनः।
भुजपञ्जरनिर्मुक्तः शुकवृत्त्या पलायते ॥ १३७ ॥
तिमिरे रतिचौरेण क्षणार्धसुखसंगमः।
पुनः प्रविरतालोके परलोकसमागमः ॥ १३८ ॥
सा नष्टा निष्फलाकृष्टा लज्जाकष्टादधोमुखी।
कुमार्गे हारितं यान्ती शीलरत्नमिवेक्ष्यते ॥ १३९ ॥

D 809 सा रोदिति प्रसृतदुश्चरितापवादा
स्थूलास्रबिन्दुभिरमन्दविषादकन्दैः ।
कामश्रमत्रुटितनिर्मलशीलहार-
मुक्ताफलैरिव धरां परिपूरयन्ती ॥ १४० ॥

बालस्यापि तुषाररश्मिरुचिरं संचिन्तयन्त्याः स्मितं
म्लायन्त्याः सहसा निमीलिततनोः पद्माननायाः परम् ।
गेहान्तः स्वकथां मिथः कथयतामाकर्णयन्त्या बहिः
स्वैरिण्यास्तृणपल्लवेऽपि वलिते साशङ्कशङ्कं मनः ॥ १४१ ॥

रूपदर्पेण निर्यान्ति तरुण्यः पतिवेश्मनः ।
पश्चात्परीक्ष्य त्यज्यन्ते पुण्यस्थाने परीक्षकैः ॥ १४२ ॥

तस्माद्गृहस्थितायास्ते यथा पुरुषसंगमः ।
लोके भवत्यविदितस्तथा युक्तिं वदाम्यहम् ॥ १४३ ॥

अश्वदत्तः कुमारोऽसौ किंचिदासन्नयौवनः ।
जनस्याशङ्कनीयत्वात् सुखभोग्यः परं तव ॥ १४४ ॥

एवं विदग्धः सुमुखः कान्तिमान् प्राप्यते कुतः ।
निरपायः प्रकारोऽयं यदि तावत्प्रवर्तते ॥ १४५ ॥

D 811 इति धात्रीवचः श्रुत्वा सापि युक्तममन्यत ।
तीव्ररागप्रकारान्धः पापपातं न पश्यति ॥ १४६ ॥

धात्री ततः कुमारस्य संभोगसुखवर्णनाम् ।
स्वैरं विधाय विदधे विषयाभिमुखं मनः ॥ १४७ ॥

तमवोचत साशङ्कं कृत्वा कामप्रतारणम् ।
अस्ति वत्स त्वदुचिता काचित्प्रोषितभर्तृका ॥ १४८ ॥

शून्ये वेश्मनि निर्दीपे रात्रौ मौनावलम्बिनी ।
लज्जावती सा सुतरां त्वया संगममिच्छति ॥ १४९ ॥

इति तस्याः वचः श्रुत्वा साभिलाषो वणिक्सुतः ।
सदा गुप्तगृहे भेजे जनन्या रतिसंगमम् ॥ १५० ॥

सततं सेवमानायाः प्रच्छन्नभवने रतिम् ।
वर्धमानः परं तस्या रागाग्निर्न शमं ययौ ॥ १५१ ॥

साचिन्तयदिमां नित्यं प्रच्छादनकदर्थनाम् ।
न सहे रूपभोगस्य प्रकाशः किल जीवितम् ॥ १५२ ॥

अन्योन्यवदनाम्भोजविलोकनरसं विना ।
न चुम्बने न सुरते कश्चिदस्ति सुखोत्सवः ॥ १५३ ॥

तस्मात्प्रच्छादनायासं कुमारस्य प्रयत्नतः । D 813
भङ्क्त्वा प्रसभसंभोगे प्रदिशामि प्रगल्भताम् ॥ १५४ ॥

इति संचिन्त्य सा रात्रौ प्रभाते व्यक्तविग्रहा ।
ययौ वस्त्रपरावृत्तियुक्त्या तस्य प्रकाशताम् ॥ १५५ ॥

स निजां जननीं दृष्ट्वा छिन्नमूल इव द्रुमः ।
पपात पानकविषावेशेन विवशीकृतः ॥ १५६ ॥

तया शीताम्बुना सिक्तः शनैः संज्ञामवाप्य सः ।
विललाप पृथुश्वभ्रे विभ्रष्ट इव दुःखितः ॥ १५७ ॥

तमुवाच परिष्वज्य भुजाभ्यां काममोहिता ।
भ्रूलतां सा समुन्नाम्य नरकापातदूतिकाम् ॥ १५८ ॥

मिथ्या किमयमस्थाने विषादस्तव दुःसहः ।
किं न जानासि नारीणामसत्यधर्मयन्त्रणाम् ॥ १५९ ॥

न त्वयोत्पादितं दुःखं हृतं वा कस्यचिद्धनम् ।
साधारसुखभोगेऽस्मिन् केयं ते पापवासना ॥ १६० ॥

सरित्साधारणा नार्यस्तरंगिण्यां निरर्गलम् ।
यस्यामेव पिता स्नाति तस्यां न स्नाति किं सुतः ॥ १६१ ॥

पथा येन पिता यातस्तेन पुत्रोऽपि गच्छति । D 815
सामान्यगमना एव वर्तनीसंनिभाः स्त्रियः ॥ १६२ ॥

एकभोग्यैव ललना न परस्परमर्हति ।
ईर्ष्यालुभिः कृतं कैश्चिदेतत्समयमात्रकम् ॥ १६३ ॥

नैव काचिदगम्यास्ति रत्यर्थं परमार्थतः ।
एकपात्रोपभोग्या हि पितुः पुत्रस्य च स्त्रियः ॥ १६४ ॥

इति यत्नेन स तया संभोगाभिमुखः कृतः ।
स जातरागः सततं सिषेवे जननीं पशुः ॥ १६५ ॥

ततः कालेन पितरं प्रत्यायातं महोदधेः ।
स गूढे प्रेरितो मात्रा विषेण विदधे व्यसुम् ॥ १६६ ॥

ततः सा रागवृद्ध्यैव निरर्गलसुखैषिणी ।
स्वैरं कुमारं प्रणयादुवाच स्नेहमोहितम् ॥ १६७ ॥

सारद्रविणमादाय निर्यन्त्रणसुखाप्तये ।
एहि देशान्तरं तावद्गच्छावः कण्टकोज्झितम् ॥ १६८ ॥

इति तद्वचनं श्रुत्वा चिरकालसमीहितम् ।
सारद्रविणमादाय स ययौ सहितस्तया ॥ १६९ ॥

D 817 देशान्तरे कृतपदौ परं प्रच्छन्नपातकौ ।
जायापतित्वं विख्याप्य तौ निर्वृतिमवापतुः ॥ १७० ॥

ततः कदाचित्तद्गेहं स्वदेशप्रत्यभिज्ञया ।
भिक्षुः परिचितोऽभ्येत्य वात्सल्यात्तमभाषत ॥ १७१ ॥

कच्चित्ते कुशलं मातुः कच्चिज्जन्ममहीं मुहुः ।
त्यक्तां चिन्तयतश्चित्तं नायात्यनुशयव्यथाम् ॥ १७२ ॥

इति भिक्षोर्वचः श्रुत्वा शिलयेव स ताडितः ।
प्रत्यभिज्ञानचकितस्तां तां युक्तिमचिन्तयत् ॥ १७३ ॥

स मात्रा सह संमन्त्र्य मन्त्रभेदभयाकुलः ।
भिक्षुं निमन्त्र्य निर्यन्त्रस्तं शस्त्रेण गृहेऽवधीत् ॥ १७४ ॥

अर्हद्भिक्षुवधेऽप्यस्य नाकम्पत मनाङ्मनः ।
नृशंसाः पातकैर्यान्ति वज्रादपि कठोरताम् ॥ १७५ ॥

धर्माद्रिशृङ्गाग्रपरिच्युतानामधोमुखानामतटावटेषु ।
बहुभ्रमश्वभ्रशताहतानां भवत्यलं पातपरंपरैव ॥ १७६ ॥

सुतेन रममाणापि सा संभोगपरायणा ।
सुन्दराख्यं वणिक्पुत्रं दृष्ट्वाभूत्तत्र सस्पृहा ॥ १७७ ॥

D 819 इति परिचितैर्भोगाभ्यासैः स्मरः परिवर्धते
किमपि भजते लोभः प्रौढिं प्रवृद्धधनोदयैः ।
लवणसलिलापानैस्तृष्णा प्रयात्यतितीव्रतां
ज्वलति विपुलज्वालोऽगाधैर्जलैर्वडवानलः ॥ १७८ ॥

तां गूढसंगतां तेन रागिणा नवकामिना ।
दृष्ट्वाश्वदत्तः खड्गेन जघान जननीं क्रुधा ॥ १७९ ॥

आनन्तर्यैस्त्रिभिः पापभारैः स गुरुतां गतः ।
निष्काशितः पुरात्तूर्णं देवताप्रेरितैर्जनैः ॥ १८० ॥

स जातानुशयस्तीव्रं गत्वा भिक्षुगणान् बहून् ।
दुःखाद्ययाचे प्रव्रज्यां निवेद्य निजदुष्कृतम् ॥ १८१ ॥

तस्मै न कश्चित्प्रव्रज्यां पतिताय ददौ यदा ।
तदा ददाह स द्वेषात्सुप्तं भिक्षुगणं निशि ॥ १८२ ॥

एकस्तु बोधिसत्त्वांशो भिक्षुस्तस्य दयार्द्रधीः ।
तदा दिदेश प्रव्रज्यां शिक्षापदविवर्जिताम् ॥ १८३ ॥

शिक्षापदानि निर्बन्धाद्याचमानं प्रयत्नतः ।
भिक्षुस्तमूचे नार्होऽसि शिक्षापदपरिग्रहे ॥ १८४ ॥

नमो बुद्धाय बुद्धायेत्येतदेव सदा वद । D 821
जिनाभिधानं श्रुत्वैव कल्पान्ते मुक्तिमेष्यसि ॥ १८५ ॥

अथाश्वदत्तो देहान्ते घोरं नरकमाविशत् ।
यस्याग्रे प्रबलोत्तालः शीतलः प्रलयानलः ॥ १८६ ॥

सोऽयं धर्मरुचिः पृष्टश्चिरस्येति चिरान्मया ।
अभिधायेति भगवान् विरराम तथागतः ॥ १८७ ॥

वाताली जननी तरंगतरला निःशङ्कमालिङ्गिता
प्राप्य प्रौढिमदर्शनं स जनकस्तेजोनिधिः प्रापितः ।
अर्हत्सत्त्वपदप्रकाशविभवस्तीव्रक्रमेणाहतो
धूमेनातिमलीमसेन न परं किं किं कृतं दुष्कृतम् ॥ १८८ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
धर्मरुच्यवदानमेकोननवतितमः पल्लवः ॥



D 823 ## ९० धनिकावदानम् ।

मनःशुद्धिविधानेन दानेनातिलघीयसा ।
भवन्त्यलङ्घ्याः संकल्पैः संपदः सत्त्वशालिनाम् ॥ १ ॥
पुरा वृजिषु वैशाल्यां मर्कटाख्यह्रदान्तिके ।
कूटागारगुहावासे जिने भगवति स्थिते ॥ २ ॥
बभूव धनिको नाम श्रिया गृहपतिर्वृतः ।
समग्रपुण्यसंयोगात्पुरुषोत्तमतां गतः ॥ ३ ॥
पत्नी धर्मसखी तस्य शीलवत्यभिधाभवत् ।
वदान्याख्यश्च तनयः स्नुषा सत्यवती तथा ॥ ४ ॥
संहताः समयं चक्रुस्तत्र वैशालिका द्विजाः ।
निमन्त्रणीयो भगवान् सर्वैः संभूय नान्यथा ॥ ५ ॥
एकश्चेत्कुरुते वित्तमदाज्जिननिमन्त्रणम् ।
सर्वैर्निर्वासनीयोऽसौ परेषां धर्मविघ्नकृत् ॥ ६ ॥
तेषां समयमज्ञात्वा पुण्यवान् धनिकः स्वयम् ।
दिव्यसंपद्युतश्चक्रे गत्वा जिननिमन्त्रणम् ॥ ७ ॥
D 825 स भक्तिमान् भगवता गृहाभिगमने स्वयम् ।
ससंघेनाभ्युपगते हृष्टः स्वभवनं ययौ ॥ ८ ॥
स तत्र दिव्यविभवः संभारैस्त्रिदिवोचितैः ।
रत्नासनोपकरणां सज्जां भोज्यभुवं व्यधात् ॥ ९ ॥
अत्रान्तरे द्विजाः सर्वे गत्वा भगवतोऽन्तिके ।
संभूय कृतसंभाराश्चक्रुर्भक्त्या निमन्त्रणम् ॥ १० ॥
तानुवाचाथ भगवान् प्रसादविशदाशयः ।
पूर्वमेव ससंघोऽहं धनिकेन निमन्त्रितः ॥ ११ ॥
एतदाकर्ण्य यातेषु तेषु स्वभवनं शनैः ।
परं प्रतीक्षमाणेषु दिनं भगवतोऽर्चने ॥ १२ ॥
धनिकस्य गृहं गत्वा भगवान् सह भिक्षुभिः ।
दिव्याद्भुतर्द्धिसंभारं चक्रे भोज्यप्रतिग्रहम् ॥ १३ ॥
अन्येद्युरपि तत्पत्नी तत्तुल्यं विपुलश्रिया ।
दिव्योपभोगसंभारैर्भगवन्तमपूजयत् ॥ १४ ॥
तत्पुत्रेण तृतीयेऽह्नि चतुर्थे स्नुषया जिनः ।
आश्चर्यविभवाभोगैरुपभोगैर्निमन्त्रितः ॥ १५ ॥
D 827 अलब्धपूजावसरः शास्तुर्वैशालिको गणः ।
धनिकाय परं क्रुद्धश्चक्रुर्निष्कासनोद्यमम् ॥ १६ ॥

शासनात्सुगतस्याथ धनिकेन द्विजातयः ।
न मया ज्ञात इत्युक्त्वा तेन सर्वे प्रसादिताः ॥ १७ ॥
सपत्नीकोऽथ धनिकः सपुत्रश्च स्नुषान्वितः ।
धर्मदेशनया शास्तुः सत्यदर्शनमाप्तवान् ॥ १८ ॥
तत्पूर्वपुण्यवृत्तान्तं महाविभवविस्तरम् ।
भिक्षुभिर्भगवान् पृष्टः सर्वज्ञस्तानवोचत ॥ १९ ॥
वाराणस्यामभूत्पूर्वं मालिकः कमलाभिधः ।
दुर्भिक्षक्षपिते काले परां दुर्गतिमापितः ॥ २० ॥
पत्नी पल्लविका नाम पुत्रः कुवलयाभिधः ।
पाटलाख्या स्नुषा चेति बभूवुस्तस्य संमिताः ॥ २१ ॥
कदाचित्कुसुमारामे दिनान्ते तद्गृहान्तिके ।
प्रत्येकबुद्धः संतोषकान्ते विश्रान्तिमाप्तवान् ॥ २२ ॥
ते त्वेकवसनाः सर्वे पर्यायेण नृपालये ।
पुष्पाणि दत्वा संप्राप्ता ददृशुस्तं प्रभामयम् ॥ २३ ॥
तेजोनिधिं तमालोक्य प्रातस्तत्पूजनोत्सुकाः । D 829
निर्धनास्ते व्यथां प्रापुश्छिन्नपक्षाः खगा इव ॥ २४ ॥
चतुर्णां विद्यतेऽस्माकमेकं सर्वस्वमम्बरम् ।
आच्छादयामस्तेनैव पूज्यस्यास्य वरं वपुः ॥ २५ ॥
नाद्य राजकुलं नग्ना गच्छामः किं भविष्यति ।
इति ते समयं कृत्वा वस्त्रेण तमपूजयन् ॥ २६ ॥
तत्पुण्यप्रणिधानेन धनिकोऽयं स मालिकः ।
जातो दिव्यप्रभावर्द्धिः पत्नीपुत्रस्नुषान्वितः ॥ २७ ॥
सर्वज्ञेनेति कथितं श्रुत्वा सपदि भिक्षवः ।
मेनिरे चित्तवैमल्यमूलां दानफलश्रियम् ॥ २८ ॥
ततस्ते ब्राह्मणाः सर्वे संभूय शुचिभोजनैः ।
भगवन्तं समभ्यर्च्य बभूवुः कुशलोज्ज्वलाः ॥ २९ ॥

हेलार्पितं रत्नवनं तृणाग्रं
श्रद्धावितीर्णं तृणमप्यनर्घ्यम् ।
अनेकशोभानुभवं न वित्तं
चित्तं निमित्तं शुभसंभवानाम् ॥ ३० ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
धनिकावदानं नवतितमः पल्लवः ॥

D 831 ## ९१ शिबिसुभाषितावदानम् ।

सुभाषितं सत्यपथप्रकाशनं
करोत्यनालोकपदे सुदीपवत् ।
सदोपकारादत एव वल्लभं
विवेकचर्यासु महात्मनामपि ॥ १ ॥

कुशिपुर्यां भगवता यदा मल्लजनास्पदे ।
अर्हत्पदं भिक्षुगणः प्रापितः कुशलैषिणा ॥ २ ॥
तदा कथयतां धर्मं भिक्षूणां मधुरं मिथः ।
स्वयं शुश्राव सुगतः प्रीतियुक्तः सुभाषितम् ॥ ३ ॥
सुभाषितव्यसनितां तां दृष्ट्वा तस्य भिक्षवः ।
तमूचुस्तव सर्वज्ञ कथमस्मद्वचः प्रियम् ॥ ४ ॥
इत्युक्ते भिक्षुसंघेन भगवानभ्यधाज्जिनः ।
जन्मान्तरेष्वपि परं वल्लभं मे सुभाषितम् ॥ ५ ॥

शिववत्यां पुरा पुर्यां शिबिर्नाम नरेश्वरः ।
बभूव सर्वभूतानां दयादयितबान्धवः ॥ ६ ॥
D 833 तत्पुण्यशासनासीनैः स्वर्गमापूरितं नरैः ।
दृष्ट्वा शतक्रतुर्ज्ञातुं सत्त्वं तस्य समाययौ ॥ ७ ॥
रत्नप्रासादशिखराक्रान्तं नृपतिमेत्य सः ।
रक्षोरूपं विधायोग्रं तदग्राभिमुखोऽब्रवीत् ॥ ८ ॥
अनित्याः संसारास्तरलतरविद्युद्द्युतिनिभाः ।
समुत्पन्नोत्पन्नप्रलयपरिणामप्रणयिनः ॥ ९ ॥
सुभाषितार्धमित्युक्त्वा तूष्णीमासीत्स राक्षसः ।
तं प्रणम्य क्षितिपतिः कृताञ्जलिरभाषत ॥ १० ॥
साधो सुभाषितस्यार्धं शेषं शंस मनःसुखम् ।
वाणीं बोध्यङ्गभूतां ते शिष्यो भूत्वा शृणोम्यहम् ॥ ११ ॥
इति ब्रुवाणं विनयान्नृपं प्रोवाच राक्षसः ।
त्वया शिष्येण राजेन्द्र निष्फलेन करोमि किम् ॥ १२ ॥
पिपासापरिभूतोऽहं क्षुण्णकुक्षिर्बुभुक्षया ।
नैतन्ममेप्सितं राजन् केवलं गुरुगौरवम् ॥ १३ ॥
क्षुत्तृष्णाव्याकुलतया यत्किंचित्प्रलपाम्यहम् ।
शेषं वक्तुं न शक्नोमि मा कृथा मे कदर्थनाम् ॥ १४ ॥

माधुर्यधुर्याणि रसोचितानि
संचार्यमाणानि सुभाषितानि ।
नैव क्षुधं न क्षपयन्ति तृष्णा-
मेतानि तृप्तस्य सुखप्रदानि ॥ १५ ॥

श्रुतं गीतं काव्यं श्रमपरिचयः कौतुकविधिः
मणिज्ञानं भूतग्रहगदविषोन्मादशमनम् ।
नृणां भूभृत्सेवा जलधितरणं हेमकरणं
तदेतत्पर्यन्ते गणितमखिलं भोजनफलम् ॥ १६ ॥

सद्यःकृत्तस्य रुधिरं मांसं च मम तर्पणम् ।
अहिंसाबद्धनियमात् त्वत्तस्तदतिदुर्लभम् ॥ १७ ॥
गच्छामि याचितुं कंचित् त्वत्समीपे करोमि किम् ।
क्रीडाकथाश्च शोभन्ते तुल्याहारविहारयोः ॥ १८ ॥
इत्युक्तस्तेन नृपतिस्तमभाषत सादरः ।
निजदेहसमुत्कृत्तं सासृङ्मांसं ददामि ते ॥ १९ ॥
त्वं प्रतीत्यसमुत्पादपूर्वार्धं समुदाहर ।
निर्वाणनगरस्याग्र्यः पन्थास्तव सुभाषितम् ॥ २० ॥
इत्युक्ते राजचन्द्रेण तमुवाच क्षपाचरः ।
श्रूयतां सुमते पूर्णं दीयतां च प्रतिश्रुतम् ॥ २१ ॥

अनित्याः संसारास्तरलतरविद्युद्द्युतिनिभाः D 837
समुत्पन्नोत्पन्नप्रलयपरिणामप्रणयिनः ।
तदुत्थैर्जन्तूनां भ्रमणपरिवर्तैः श्रमवतां
निरोधाद्विश्रान्तिं दिशति विवशानामुपशमः ॥ २२ ॥

एतदाकर्ण्य नृपतिः प्रहर्षोत्फुल्ललोचनः ।
ददौ स्वदेहमुत्कृत्य तस्मै मांसं सशोणितम् ॥ २३ ॥
उत्कृत्योत्कृत्य पदतः स्वमांसानि महीपतेः ।
निर्विकारेण सत्त्वेन विस्मितोऽभून्निशाचरः ॥ २४ ॥
स दत्वा सर्वगात्रेभ्यः पिशितं पिशिताशिने ।
प्रणिधानं व्यधात्सर्वसत्त्वसंतारणे नृपः ॥ २५ ॥
ततस्तं प्रणयादूचे रक्षोरूपः पुरंदरः ।
अपि ते मर्मविच्छेदे विषादजननी व्यथा ॥ २६ ॥
पृष्टस्त्रिदशराजेन राजराजस्तमब्रवीत् ।
न विषादोऽस्ति मे देहे परोपकरणीकृते ॥ २७ ॥

व्यथायां निर्विकारोऽहं यदि सत्येन तेन मे ।
निर्व्रणस्वस्थमेवास्तु पूर्वरूपमिदं वपुः ॥ २८ ॥

D 839 इति ब्रुवाणस्य भुवः पत्युः सत्योपयाचनात् ।
सहसैव वपुः पूर्वरूपं निर्व्रणतां ययौ ॥ २९ ॥

तं पुष्पवर्षैर्विपुलैश्छाद्यमानं नभश्चरैः ।
रक्षोरूपं परित्यज्य प्रशशंस सुरेश्वरः ॥ ३० ॥

प्रसाद्य नृपतिं याते दृष्टसत्त्वे शतक्रतौ ।
अचिन्तयत्सुधास्वादं भूपतिस्तत्सुभाषितम् ॥ ३१ ॥

शिबिर्नरेश्वरः सोऽहमभवं पूर्वजन्मनि ।
इति प्राणपणेनाभूद्वल्लभं मे सुभाषितम् ॥ ३२ ॥

तथागतेन कथितां जन्मान्तरकथां निजाम् ।
आकर्ण्य भिक्षवः सर्वे प्रशशंसुः सविस्मयाः ॥ ३३ ॥

दृष्टादृष्टसुखे सुभाषितरुचिर्मार्गे प्रदीपायते
संवादेन सुभाषितामृतरसः प्रीतिं परां विन्दति ।
सर्वज्ञोऽपि सुभाषितार्थविषये यात्यर्थनीयोऽर्थितां
तस्मान्नास्ति सुभाषितेन सदृशं किंचित्सतां वल्लभम् ॥ ३४ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
शिबिसुभाषितावदानमेकनवतितमः पल्लवः ॥



## ९२ मैत्रकन्यकावदानम् । D 841

गुरूणामप्यग्रे गुरुतरपदे सैव महती
सदा सद्भिः पूज्या त्रिदशतटिनीपावनतनुः ।
धरित्री भूतानां सकलरससारप्रसविनी
शरीरं पुष्णाति प्रणयमिव माता न वसुधा ॥ १ ॥

श्रावस्त्यां विस्तरतरं धर्मं जेतवने जिनः ।
प्रतिपाद्य पुनर्भिक्षुसंघं संक्षिप्तमब्रवीत् ॥ २ ॥

पितरौ परमं ब्रह्म जङ्गमः पुण्यसंगमः ।
कुलानि तानि धन्यानि येषां धर्मस्तदर्चनम् ॥ ३ ॥

सत्योपमं नास्ति तपस्त्रिलोके
न क्वाप्यहिंसासदृशोऽस्ति धर्मः ।
गुरुर्गरीयान्न पितुः परोऽस्ति
मातुः परं दैवतमस्ति नान्यत् ॥ ४ ॥

सेवितं प्रसभभक्तिनिर्भरैः
पादपुष्करयुगं गुरोर्न यैः ।
ते परं जलरुचैव केवलं
सर्वतीर्थगमनेऽपि निष्फलाः ॥ ५ ॥

सेव्यः सुखैरविमुखः सततं क्षमाभूः D 843
तीव्रव्रतादिनियमैरवितीर्णशोषः ।
अल्पेऽप्यनल्पफलदः प्रणयोपचारे
मातुः पितुश्च न समोऽस्ति गुरुस्तृतीयः ॥ ६ ॥

आचार्यः सुकृतार्थदेशिकतया कैर्नाभिवन्द्यः सदा
प्राणानां जनकः कथं न जनकः पूज्यो गुरूणां गुरुः ।
तत्रापि क्षणगर्भधारणभरक्लेशस्य मातुः परं
केनानृण्यविधानपुण्यनिचयेनासाद्यते निर्वृतिः ॥ ७ ॥

मातुर्निकारकणमप्यविवेकपाक-
संप्राप्तपातकुशलः किल यः करोति ।
तस्य ज्वलज्ज्वलनजालशिखाकलापः
पापव्रते भवति मूर्ध्नि जटाकटप्रः ॥ ८ ॥

विकारकारिणा मातुर्मयाप्यपरजन्मनि ।
पापशापमयस्तापः प्राप्तः पर्यायवैशसः ॥ ९ ॥

वाराणस्यां गृहपतिर्मैत्रो नाम पुराभवत्।
पत्नी वसुंधरा नाम तस्याभूदतिवल्लभा ॥ १० ॥
D 845 जातमात्रेषु पुत्रेषु तस्याः प्राप्तेषु पञ्चताम्।
पश्चिमे वयसि श्रीमानेकः सूनुरजायत ॥ ११ ॥
विपत्तिभीत्या तस्यापि कन्यानामाकरोत्पिता।
मैत्रकन्यकनामासौ तेनाभूद्विश्रुतः शिशुः ॥ १२ ॥
समुद्रगमने तस्य जनके निधनं गते।
एकपुत्रैव जननी निधितुल्यं ररक्ष तम् ॥ १३ ॥
कुलक्रमागतां तस्य द्वीपयात्रां निवार्य सा।
आदिदेश स्वदेशार्हां स्वल्पविक्रयजीविकाम् ॥ १४ ॥
स पूर्वविक्रयोत्पन्नं कार्षापणचतुष्टयम्।
ततो द्विगुणमन्यस्मिन् दिनेऽप्यथ चतुर्गुणम् ॥ १५ ॥
ततश्चाष्टगुणं लाभं सर्वं मात्रे न्यवेदयत्।
कुलोचितां द्वीपयात्रां श्रुत्वाभूदथ सोत्सुकः ॥ १६ ॥
समुद्रगमनारम्भसंभाररससादरः।
स मात्रा वार्यमाणोऽपि नामन्यत निवर्तनम् ॥ १७ ॥
ततः स पादपतितां जननीं शोकविह्वलाम्।
दृप्तः श्रियमिवोत्सार्य चरणेन विनिर्ययौ ॥ १८ ॥
D.847 पीयूषं स्खलितार्धवर्णललितालापैः शिशुर्वर्षति
प्रीतिं स्फीततरां मनोरथशतैर्धत्ते विनेयस्ततः।
पश्चादुत्कटयौवनोष्मविकटाहंकारवादी पटुः
दुष्पुत्रः स्फुटकालकूटकटुकः कष्टां करोति व्यथाम् ॥ १९ ॥
विपुलं जननीशोकमिव प्राप्य स सागरम्।
समारुह्य प्रवहणं ययौ रत्नार्जनोत्सुकः ॥ २० ॥
मकरस्फारनखरक्रूरक्रकचदारितम्।
ततस्तस्य प्रवहणं कूले प्राज्यमभज्यत ॥ २१ ॥
तस्योत्सिक्तमतेर्मातुराशाभङ्गगुरोर्भरात्।
भग्ने प्रवहणे तस्मिन् मोहः शाप इवाभवत् ॥ २२ ॥
ततः फलहकावाप्त्या शनैः संज्ञामवाप्य सः।
तीरमासाद्य जलधेर्जगाहे गहनं महत् ॥ २३ ॥
एकाकी हारितधृतिः स व्रजन् विजने चिरात्।
रम्यं रमणकं नाम नगरं दिव्यमाप्तवान् ॥ २४ ॥

अप्सरोभिश्चतसृभिर्वदनेन्दुत्विषां चयैः।
ज्योत्स्नापूरं सृजन्तीभिः कृतातिथ्यः स सादरम्॥ २५॥
हेमपुष्करिणीतीरे रम्ये रत्नलतावने। D 849
मणिमन्दिरशय्यासु तत्र संभोगवानभूत्॥ २६॥
विपदः सुखपर्यन्ताः क्लेशप्राप्ताश्च संपदः।
अवर्तिन्यो भवन्त्येव पर्यायेण शरीरिणाम्॥ २७॥
रतिभोगप्रणयिना तास्तेन हरिणेक्षणाः।
रममाणाश्चिरं प्रापुः सौभाग्यस्य कृतार्थताम्॥ २८॥
नगरे दक्षिणः पन्था वर्ज्यः सर्वात्मना त्वया।
इत्युक्तस्ताभिरधिकं सोऽप्यभूद्गमनोत्सुकः॥ २९॥
कामं नियमवामस्य स्वाधीनानभिलाषिणः।
प्रायेण वर्धते जन्तोर्निषेधेनाधिकादरः॥ ३०॥
ततः स कौतुकाकृष्टस्तेन दक्षिणवर्त्मना।
व्रजन् प्राप सदामत्तं नाम दिव्यं पुरं परम्॥ ३१॥
अष्टावप्सरसस्तत्र तद्भोग्यत्वमागताः।
तस्योपचाररचनां चिरं चक्रुस्ततोऽधिकाम्॥ ३२॥
ताभिः क्रमेण तेनैव निषिद्धे दक्षिणेऽध्वनि।
स कौतुकाद्गतः प्राप तृतीयं नन्दनं पुरम्॥ ३३॥
षोडशाप्सरसस्तस्य रतिभोगोपभोग्यताम्। D 851
तत्र क्रमेण तेनैव ययुर्लीलाविलासिनः॥ ३४॥
ताभिर्निषिद्धेन पुनर्दक्षिणेन पथा व्रजन्।
ब्रह्मोत्तराख्यं प्रासादमाससाद स सादरः॥ ३५॥
द्वात्रिंशदेव संप्राप्य तत्राप्यप्सरसः पराः।
संभोगसुभगस्तद्वद्ययौ दक्षिणवर्त्मना॥ ३६॥
स व्रजन्नगरं प्राप दुर्गप्रायमयोमयम्।
परुषं खलसौहार्दमिवायासचयाशयम्॥ ३७॥
तस्य तत्र प्रविष्टस्य क्रमाद्द्वाराणि भूमिषु।
केनापि पिहितान्येव ययुर्निःसंधिवन्धताम्॥ ३८॥
तदन्तरे महाकायं सोऽपश्यत्पुरुषं स्थितम्।
सकलक्लेशदोषाणां विस्तीर्णमिव भाजनम्॥ ३९॥
ज्वालावलयितं चक्रं तस्य मूर्ध्नि परिभ्रमत्।
तीक्ष्णं ददर्श चक्रस्य सक्तं रक्तप्रवाहिणः॥ ४०॥

स्वशिरःप्रस्रुतैः पूयशोणितैर्विहिताशनम् ।
तं दृष्ट्वा तीव्रनिर्वेदादवदन्मैत्रकन्यकः ॥ ४१ ॥
D 853 कस्त्वं क्रूरव्यथाक्रान्तः कस्येदं कर्मणः फलम् ।
पृष्टस्तेनेति कारुण्यात्पुरुषस्तमभाषत ॥ ४२ ॥
मातुः कृतापकारोऽहं तस्येदं कर्मणः फलम् ।
एतदाकर्ण्य सोऽप्यासीत्पापसंवादशङ्कितः ॥ ४३ ॥
सोऽचिन्तयन्ममाप्यस्ति पापं मातुः कृतागसः ।
अयं पापसहाध्यायी दृष्टः स्मरणकृन्मया ॥ ४४ ॥
नूनं तेनैव कृष्टोऽहं पापेन सुखमण्डलात् ।
सौनिकेन चरन् कामं मृगः शष्पवनादिव ॥ ४५ ॥
इति चिन्ताकुले तस्मिन् बद्धद्वारपुरस्थिते ।
उच्चचाराम्बराद्वाणी हृदयाकम्पकारिणी ॥ ४६ ॥
चिरबद्धाः प्रमुच्यन्तां निबध्यन्तां नवागताः ।
बद्धमुक्तिनवाबन्धेष्वयं प्राप्तोऽवधिक्षणः ॥ ४७ ॥
इत्युदीर्णे दिवः शब्दे मुक्तः स पुरुषः क्षणात् ।
दीप्तं तच्चक्रमपतन्मैत्रकन्यस्य मस्तके ॥ ४८ ॥
नवबद्धः स तत्कालं मर्मच्छेदव्यथातुरः ।
तं मुक्तबन्धमवदत्पुरुषं मैत्रकन्यकः ॥ ४९ ॥
D 855 त्यक्त्वा पुराणि मणिमन्दिरसुन्दराणि
तान्यप्सरःसरसभोगमनोहराणि ।
कृष्टः प्रकृष्टतरपातकभोग्यकाले
कालेन कल्पितफला किल कर्मवल्ली ॥ ५० ॥
सूनामिव क्षितिमिमां पशुरागतोऽस्मि
कर्षत्यलं बलवती भवितव्यतैव ।
कृष्टस्तयैव च विशल्यवशो मनुष्यः
यत्रास्य तिष्ठति पुरः परिपाकभोग्या ॥ ५१ ॥
क्लेशभोगावधौ कालः कियान्मातुः कृतागसाम् ।
अप्यागमिष्यति नवः कश्चिदस्मद्विधो जनः ॥ ५२ ॥
इति ज्वलितचक्राग्रदीर्यमाणस्य दाहिनः ।
तस्यार्तस्य वचः श्रुत्वा पुरुषस्तमभाषत ॥ ५३ ॥
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ।
अस्य क्लेशोपभोग्यस्य नियतिः पापकर्मणाम् ॥ ५४ ॥

इहापराणि घोराणि सन्ति स्थानानि पापिनाम् ।
मातुः कृतागसामन्ये ये समेष्यन्ति तद्विधाः ॥ ५५ ॥
श्रुत्वेति दुःसहतरं तेनोक्तं मैत्रकन्यकः । D 857
स्वव्यथादुःखसंवादात्परार्तिदययावदत् ॥ ५६ ॥
अधुना ये समेष्यन्ति नराः पातककारिणः ।
तेषामर्थे ममैवेदं चक्रं तिष्ठतु मस्तके ॥ ५७ ॥
कथं सहन्ते ते तीव्रां दीर्घामेवंविधां व्यथाम् ।
एकस्यैव व्यथा मेऽस्तु सर्वे तिष्ठन्तु निर्व्यथाः ॥ ५८ ॥
परार्थे धारयिष्यामि चक्रं भुक्त्वा निजं फलम् ।
परव्यथां विजानाति न जनः स्वव्यथां विना ॥ ५९ ॥
इत्युक्ते करुणार्तेन तेन सत्त्वहितैषिणा ।
सत्संकल्पप्रभावेण तच्चक्रमगमन्नभः ॥ ६० ॥
तापं पल्लविता निहन्ति तनुते शुभ्रं यशः पुष्पिता
सद्यः सौरभभव्यभोगसुभगा लक्ष्मीं विधत्ते पुनः ।
कारुण्यार्द्रतया यदेव हृदये सद्भिः समारोपिता
सत्संकल्पलता सदैव सरसं किं किं न सूते फलम् ॥ ६१ ॥
कारुण्यात्पुण्यमाहात्म्यात्तत्क्षणात्क्षतकिल्विषः ।
स बभूव परित्यज्य देहं देवः सुरालये ॥ ६२ ॥ D 859
सोऽहमेवाभवं पूर्वं मैत्रात्मा मैत्रकन्यकः ।
पादेनोत्सारणान्मातुः प्राप्तस्तां दुःखवर्तिनीम् ॥ ६३ ॥
कार्षापणार्पणान्मातुः प्राप्तश्चाप्सरसां पदम् ।
इत्यूचे भगवान् मातुः शुश्रूषाधर्ममुत्तमम् ॥ ६४ ॥
माता मङ्गलमालिका गुणमयी वात्सल्यमौलिः पिता
तौ येषां शिरसि प्रियाय कुरुतः पादाम्बुजारोपणम् ।
सर्वाशापरिपूरणोद्यतयशःसंपत्प्रकाशोदया-
स्ते पुण्याभरणाः प्रयान्ति जगतां नित्योत्सवाः पूज्यताम् ॥ ६५ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
मैत्रकन्यकावदानं द्वानवतितमः पल्लवः ॥

D 861

# ९३ सुमागधावदानम् ।

श्लाघ्या जयन्ति जिनभक्तिविशेषभाजां
श्रद्धासुधाप्रसरनिर्झरशीकरास्ते ।
निश्चेतनोऽप्युचितचेतनतामिवैति
यः पूज्यपूजनविधौ कुसुमादिवर्गः ॥ १ ॥

श्रावस्त्यां विजनासीनं जिनं जेतवने पुरा ।
अनाथपिण्डदोऽभ्येत्य भगवन्तमभाषत ॥ २ ॥

त्वद्भक्तिरिव सर्वत्र महार्हगुणविश्रुता ।
भगवन् प्रौढिमायाता कन्या मम सुमागधा ॥ ३ ॥

श्रीमतः सार्थनाथस्य नगरे पुण्ड्रवर्धने ।
सूनुर्वृषभदत्ताख्यस्तत्पाणिग्रहमिष्यते ॥ ४ ॥

कन्यां ददामि तां तस्मै भगवन् यदि मन्यसे ।
त्वदधीनधनप्राणस्त्वदाज्ञाशरणो ह्यहम् ॥ ५ ॥

इत्युक्ते तेन भगवान् वात्सल्यविमलाशयः ।
को दोषस्तनया तस्मै दीयतामित्यभाषत ॥ ६ ॥

D 863 शास्तुः शासनमादाय सादरं प्रणिपत्य तम् ।
अनाथपिण्डदः श्रीमान् प्रययौ निजमन्दिरम् ॥ ७ ॥

ततः सुमागधां कन्यां विभवेन महीयसा ।
अहार्यं स ददौ तस्मै भूरिरत्नाम्बरप्रदः ॥ ८ ॥

दत्ता दूरतरं देशमथ यान्ती सुमागधा ।
भगवच्चरणस्मृत्या सबाष्पनयनाभवत् ॥ ९ ॥

चिरेण सा समासाद्य नगरं पुण्ड्रवर्धनम् ।
शुश्रूषाभिरता पत्युः सदा भर्तृगृहेऽवसत् ॥ १० ॥

कदाचिदथ तां श्वश्रूर्भोज्यसंभारकारिणी ।
उवाच धनवत्याख्या संख्यातीतव्ययोद्यता ॥ ११ ॥

पूज्योपकरणं सज्जं कुरु सर्वं सुमागधे ।
गृहान्नः प्रातरागन्ता जगत्पूज्यगुणो जिनः ॥ १२ ॥

गुरवो गौरवपदं पूज्याः सर्वजनस्य ते ।
समेष्यन्ति क्षपणकाः संमोहक्षपणोद्यताः ॥ १३ ॥

इत्युक्ता सा तया तत्र बभूवारम्भतत्परा ।
ज्ञात्वा भिक्षुगणायेव तां पूजां परिकल्पिताम् ॥ १४ ॥

अथापरेऽह्नि विविशुर्नग्नाः क्षपणका गृहम् । D 865
उल्लुञ्चितकचश्मश्रुसंक्लेशनिशितव्रताः ॥ १५ ॥
तानलज्जानवसनानवलोक्य सुमागधा ।
माषशष्पाशनाभ्यासपीवरान् महिषानिव ॥ १६ ॥
लज्जिता वाससाच्छाद्य वदनं गुरुसंनिधौ ।
खेदनिर्वेदविनता श्वश्रूजनमभाषत ॥ १७ ॥
अहो बतायमाचारः सुचिरादवलोकितः ।
दिगम्बराणामप्यग्रे यदिहास्ते वधूजनः ॥ १८ ॥
एते भवद्गृहेऽदान्ता भुञ्जते श्रृङ्गवर्जिताः ।
अमानुषत्वान्नैतेषां लज्जन्ते नूनमङ्गनाः ॥ १९ ॥
अस्थाने भवतां भक्तिः कोऽयमुच्छृङ्खलः क्रमः ।
न त्यक्तमशनं येन स कथं वस्त्रमुज्झति ॥ २० ॥
केशोन्मूलनकर्मणैव निशितं नैर्घृण्यमावेदितं
कौपीनांशुकवर्जनेन सुजने शीलस्य वार्तैव का ।
दम्भारम्भभयंकरे च वदने क्रोधः स्वयं लक्ष्यते
नग्नानामशनैषिणां नियमिनामेषां पशूनामिव ॥ २१ ॥
यत्रैते पशवः पूज्यास्तत्रोत्सार्या भवन्ति के । D 867
अथवा देशदोषोऽयं गतानुगतिका स्थितिः ॥ २२ ॥
इति ब्रुवाणां तां श्वश्रूर्विषण्णा प्रत्यभाषत ।
पितुस्ते भवने भद्रे पूज्यते वद कीदृशः ॥ २३ ॥
सावदन्मत्पितुर्गेहे पूज्यते भगवाञ्जिनः ।
कारुण्यात्सर्वजगतां कुशलातिशयोद्यतः ॥ २४ ॥
ध्यानाधीनः स्तिमितनयनः पूर्णलावण्यसिन्धुः
नासावंशं विपुलसरलं सेतुभूतं दधानः ।
भूषाशून्यप्रसृतरुचिमत्कर्णपाशाभिरामः
कान्त्यैवासौ किमपि विदुषां शान्तिमन्तस्तनोति ॥ २५ ॥
शिरसि सहजप्राज्यालोकप्रसेकमयं मणिं
करिपतिकराकारौ बाहू कवत्कनकद्युतिः ।
करतलगतां लेखां शङ्खध्वजाम्बुजमालिकां
शमयममहासाम्राज्यार्हं बिभर्ति स लक्षणम् ॥ २६ ॥
तस्याभिलाषजनकस्य महामुनीनां
सर्वाभिलाषकलनारहितः स्वभावः ।

D 869 निःशेषितस्मृतिभुवः प्रमदाश्रयस्य
रागोज्झितस्य सुतरामधरः सरागः ॥ २७ ॥
मूर्तिर्निर्भरसंगमप्रणयिनी मैत्री मनःशायिनी
क्षान्तिस्तन्मयकारिणी हृदि दया गाढं समाश्लेषिणी ।
सर्वाशाभरणस्य भूरिदयितासक्तस्य संलक्ष्यते
तस्यापूर्वमणेरनन्यमहिमा वैराग्यगर्भः शमः ॥ २८ ॥
पूज्यः स भवनेऽस्माकं यस्य प्रव्रज्यया सताम् ।
धत्ते शीलदुकूलानां निरावरणतां मनः ॥ २९ ॥
विश्वरक्षामणेर्यस्य स्मृत्यापि भवभोगिना ।
रागद्वेषोग्रदंष्ट्रेण बाध्यते न पुनर्जनः ॥ ३० ॥
इति तस्या वचः श्वश्रूः श्रुत्वा श्रोत्ररसायनम् ।
सद्यः प्रसादविशदा तां जगाद प्रमोदिनी ॥ ३१ ॥
अपि तद्दर्शनोपायः कश्चिदस्ति वरानने ।
अपि त्वत्पुण्यसंबन्धाद्द्वयमप्यमृतास्पदम् ॥ ३२ ॥
इति सानुनयं श्वश्र्वा सा सादरधियार्थिता ।
तं वः संदर्शयामीति बभाषे भक्तिमानिनी ॥ ३३ ॥
D 871 महाप्रतिज्ञासंभारभरनिर्वहणैषिणी ।
सा संशयतुलारूढा क्षणं ध्यानपराभवत् ॥ ३४ ॥
ततः प्रासादमारुह्य भगवत्सेवितां दिशम् ।
प्रणिपत्यासृजत्पूज्यपूजार्हकुसुमाञ्जलिम् ॥ ३५ ॥
पुष्पधूपोदकैरर्चां सा कृत्वा तत्पदोन्मुखी ।
आनन्दबाष्पसंरुद्धविस्तीर्णनयनावदत् ॥ ३६ ॥
अनुकम्प्यैव भगवन् रत्नत्रयविवर्जिता ।
तवाश्रममृगीवाहं दूरं देशमिमं गता ॥ ३७ ॥
त्वत्पादपद्मयुगलं शरणं प्रपन्नां
दूरस्थितामपि दृशा स्पृश मां दयालो ।
वात्सल्यपेशलधियां महतां प्रवास-
दूरीकृतेषु करुणा न तनुत्वमेति ॥ ३८ ॥
भगवन् दासस्नुतया त्वं मयाद्य निमन्त्रितः ।
प्रातरागमनेनैव मानं वितर मे विभो ॥ ३९ ॥
इत्युदीर्य तयोत्सृष्टा विचित्रकुसुमावली ।
सजीवितेव प्रययौ नभसा भक्तिदूतिका ॥ ४० ॥

सा श्वेतरक्तहरितासितपुष्पपाली D 873
खे धूपधूमशबला शनकैः प्रयान्ती।
बालाम्बुदप्रणयिनी सुचिरं चकाशे
संचारिचापलतिकेव शचीधवस्य ॥ ४१ ॥
अथ जेतवनं प्राप्य क्षणेन कुसुमावली।
सा भक्तिशालिनी शास्तुः पपात चरणाब्जयोः ॥ ४२ ॥
भगवानपि सर्वज्ञः सर्वं ज्ञात्वा समीहितम्।
सुमागधायाः कारुण्यादानन्दमवदत्पुरः ॥ ४३ ॥
प्रातर्गन्तव्यमस्माभिर्नगरं पुण्ड्रवर्धनम्।
सुमागधा प्रार्थयते ससंघस्य ममार्चनम् ॥ ४४ ॥
शतं षष्ट्यधिकं तत्र योजनानामितः परम्।
एकेनाह्ना च गन्तव्यं न विलम्बोऽत्र युज्यते ॥ ४५ ॥
व्योम्ना महर्द्ध्या शक्नोति गन्तुं यो यः प्रभाववान्।
निमन्त्रणशलाकां त्वं तस्मै तस्मै समर्पय ॥ ४६ ॥
प्रेरितः सुगतेनेति स भिक्षुभ्यो न्यवेदयत्।
एकाहगमनप्राप्यं शलाकाभिर्निमन्त्रणम् ॥ ४७ ॥
शलाकासु गृहीतासु तत्र सर्वैर्महर्द्धिभिः। D 875
पूर्णः कुम्भोपधानीयः स्थविरोऽप्यग्रहीत्क्रमात् ॥ ४८ ॥
तेन प्राप्तप्रभावेण शलाकायां प्रसारिते।
पाणौ प्राह तमानन्दः किंचित्स्मितसिताननः ॥ ४९ ॥
अनाथपिण्डदगृहं न गन्तव्यं पदद्वयम्।
सषष्टियोजनशतं दिनार्धेनैव लङ्घ्यते ॥ ५० ॥
इत्युक्तः स्थविरस्तेन वैलक्ष्यविनताननः।
अचिन्तयत्स्ववर्गाग्रे न्यूनभावो हि दुःसहः ॥ ५१ ॥
अनादिकालोपचिताः क्लेशजन्मजरादयः।
हन्तुं सपत्नैः शक्यन्ते प्राप्तुमृद्धिपदं कियत् ॥ ५२ ॥
इति चिन्तयतस्तस्य तीव्रसंवेगया धिया।
प्रादुरासीत्क्षणेनैव महर्द्धिः शुद्धचेतसः ॥ ५३ ॥
अथ रात्र्यां व्यतीतायां प्रभाते सर्वभिक्षवः।
नानात्रिदशवेषेण विमानैर्नभसा ययुः ॥ ५४ ॥
अत्रान्तरे महारम्भसंभारपरिपूरिते।
सुमागधा भर्तृगृहे भगवद्दर्शनोत्सुका ॥ ५५ ॥

D 877 सह प्रासादमारुह्य श्वश्रूश्वशुरभर्तृभिः ।
तस्थौ कुसुमधूपार्घ्यरचनासंग्रहोन्मुखी ॥ ५६ ॥
भिक्षुराज्ञातकौण्डिन्यस्ततोऽश्वरथमास्थितः ।
दिव्यर्द्धिविविधाश्चर्यः प्रथमं प्रत्यदृश्यत ॥ ५७ ॥
तं दृष्ट्वा सूर्यसंकाशं विस्मिताः श्वशुरादयः ।
ऊचुः सुमागधां प्रीत्या किमेष भगवानिति ॥ ५८ ॥
सावदद्भगवान्नायं दृश्यते तरणिप्रभः ।
अयमाज्ञातकौण्डिन्यो भिक्षुरक्षुण्णदीधितिः ॥ ५९ ॥
आपतत्सु क्रमेणाथ रथेषु श्वशुरादयः ।
किमयं किमयं भद्रे भगवानिति तां जगुः ॥ ६० ॥
साब्रवीन्नैव शास्तायमेते तच्छासनोचिताः ।
भिक्षवः प्रशमश्लाघ्यास्तपोदीप्ततरत्विषः ॥ ६१ ॥
यः कान्तहेमद्रुमरम्यशैल-
शृङ्गाधिरूढः परतोऽभ्युपैति ।
आश्चर्यकृन्मूर्त इव प्रभावः
श्रीमान् महाकाश्यप एष भिक्षुः ॥ ६२ ॥
D 879 पञ्चाननस्यन्दनमास्थितो यः
सतोयजीमूतगभीरघोषम् ।
व्योम्ना समभ्येति गुणैः प्रगीतः
स एष भिक्षुर्भुवि शारिपुत्रः ॥ ६३ ॥
आरुह्य कैलासमिवातिशुभ्रं
द्विपं चतुर्दन्तमनन्तकान्तिः ।
आयाति यः पुण्यव्रतां जगत्सु
मौद्गल्यनामा च स एष भिक्षुः ॥ ६४ ॥
वैदूर्यनालं कनकारविन्द-
मारुह्य रत्नाङ्कुरकेसराढ्यम् ।
उपैति यः सौरभपूरिताशः
स एष भिक्षुः प्रथितोऽनिरुद्धः ॥ ६५ ॥
यश्चाम्बराग्रं गरुडाधिरूढः
पक्षानिलोत्सारितवारिवाहः ।
विगाहते स्फीतजवेन भिक्षु-
र्मैत्रायणीसूनुरयं स पूर्णः ॥ ६६ ॥

अनन्तमास्थाय नितान्तशान्त-
मीर्यापथं सत्त्वमहोदधिर्यः ।
प्रभामृतैः सर्पति तर्पिताशः D 881
प्रभाववानेष्यजिदेष भिक्षुः ॥ ६७ ॥
विलोलवल्लीवलयाभिरामं
विशालमारुह्य सुवर्णतालम् ।
यः पुण्यपूर्णद्युतिरभ्युपैति
स एष भिक्षुर्मतिमानुपाली ॥ ६८ ॥
आरुह्य वैदूर्यविमानशृङ्गं
सुवर्णरत्नोज्ज्वलपत्रलेखम् ।
लिम्पन्निवागच्छति यः प्रभाभिः
कात्यायनो नाम स एष भिक्षुः ॥ ६९ ॥
शरीरिणं धर्ममिवाधिरुह्य
विगाहते खं वृषवाहनो यः ।
प्रेष्ठः प्रतिष्ठापरिनिष्ठितानां
गरिष्ठधीः कौष्ठिल एष भिक्षुः ॥ ७० ॥
विमानहंसद्युतिभिर्मुहूर्तं
स्मितोर्मिरम्यं मुहुरन्तरीक्षम् ।
कुर्वन् समभ्येति तपोनिधिर्यः
पिलन्दवत्साह्वय एष भिक्षुः ॥ ७१ ॥
योऽयं समुत्फुल्लतावितान- D 883
वनान्तराले विहरन्नुपैति ।
स श्रोणकोटिः श्रुत एष भिक्षु-
रक्षुण्णलक्ष्मीर्गृहनिर्व्यपेक्षः ॥ ७२ ॥
यश्चक्रवर्ती दिवि भाति सोऽयं
शास्तुः सुतो राहुलकाभिधानः ।
हेमप्रभाभूषितदिग्विभागः
संलक्ष्यते मेरुरिवान्यरूपः ॥ ७३ ॥
एते गिरिभ्योऽथ दिगन्तरेभ्यः
क्ष्मामण्डलाद्व्योमतटान्तराच्च ।
आयान्त्यसंख्याद्भुतभिक्षुसंघा
विचित्ररत्नासनवाहनस्थाः ॥ ७४ ॥

तया क्रमेणेति निवेद्यमानं
ते भिक्षुसंघं विमुखं विलोक्य ।
ययुः प्रहर्षाद्भुतसंभ्रमाणां
विधेयतां तुल्यमनन्यलक्ष्म्या ॥ ७५ ॥

अथ ज्वलत्काञ्चनचूर्णवर्णं
जगद्बभूवार्कशतप्रकाशम् ।
D 885 अशेषसंतापविशेषशान्त्या
शीतांशुमालाशतशीतलं च ॥ ७६ ॥

अथ धनपतिशक्रब्रह्ममुख्यैरमर्त्यै-
र्विपुलगगनयात्रादत्तसेवानुयात्रः ।
अमरपुरपुरस्त्रीकीर्णपुष्पप्रभावा-
न्नयनपथमयासीत्पुण्यभाजां जिनेन्द्रः ॥ ७७ ॥

अष्टादशद्वारपथा पुरं तत्
स तुल्यमष्टादशमूर्तिरेव ।
प्रविश्य चक्रे शशिकान्तरत्न-
शिखामयं वेश्म सुमागधायाः ॥ ७८ ॥

अभ्यर्चितस्तत्र बहुप्रकारैः
पूर्णोपचारैः प्रणिपत्य सर्वैः ।
अपूजयत्पौरजनः समन्तात्
वहिश्च भित्तिप्रतिविम्बितं तम् ॥ ७९ ॥

सुमागधाया दयया दयालुः
पूजां गृहीत्वा भगवान् ससंघः ।
अनुग्रहालोकनसंविभागैः
सर्वान्ववाया विदधे प्रसादम् ॥ ८० ॥

D 887 सुमागधा सश्वशुरादिवर्गा
सहापरैः पौरजनैश्च सर्वाः ।
शास्तुस्तया देशनया वभूवुः
शुद्धाशयास्तत्क्षणदृष्टसत्याः ॥ ८१ ॥

सुमागधायाः कुशलानुवन्धं
पुण्यं प्रभावं विपुलं विलोक्य ।
ते भिक्षवस्तत्र कुतूहलेन
पप्रच्छु रम्यं जिनमादिवृत्तम् ॥ ८२ ॥

पृष्टः स तैः संसदि सर्वदर्शी
सुमागधायाः कुशलस्य हेतुम्।
दन्तप्रभाभिः ककुभां मुखेषु
दिशन् प्रकाशं भगवान् बभाषे ॥ ८३ ॥
वाराणस्यामभूत्पूर्वं कृकेः कान्तस्य भूपतेः।
सुता काञ्चनमालाख्या कुचकाञ्चनमालिका ॥ ८४ ॥
काश्यपाख्यस्य शास्तुः सा सततं भक्तिशालिनी।
परिचर्यां व्यधात्सार्धं सखीनां पञ्चभिः शतैः ॥ ८५ ॥
स कदाचिन्नरपतिर्विकृतस्वप्नदर्शनात्। D 389
भयसंशयसंभ्रान्तः पप्रच्छ फलकोविदम् ॥ ८६ ॥
ते तं राजसुताद्वेषान्निमित्तज्ञा बभाषिरे।
अतिप्रियस्य हृदयं हुत्वाग्नौ लभ्यते शिवम् ॥ ८७ ॥
इति तेषामनादृत्य वचः क्रूरतरं नृपः।
भगवन्तं ययौ द्रष्टुं काश्यपं दुहितुर्गिरा ॥ ८८ ॥
स तमेत्यावदत्स्वप्नः सविकारः परं मया।
दृष्टोऽद्य सर्वं सर्वज्ञ तत्फलं वक्तुमर्हसि ॥ ८९ ॥
वातायनेन निर्गच्छन् रुद्धपुच्छो मया गजः।
तृषितस्य तथा पश्चात्कूपो धावन् विलोकितः ॥ ९० ॥
तृप्तश्च सक्तुप्रस्थेन मौक्तिकप्रस्थविक्रयः।
समीकृतानि दृष्टानि कुदारूणि च चन्दनैः ॥ ९१ ॥
कलभेन महाहस्ती समाहूतस्तथाहवे।
परानशुचिलिप्ताङ्गः प्रलिम्पन् विप्लुतः कपिः ॥ ९२ ॥
स्फीतराज्याभिषिक्तश्च कुचापलनिधिः कपिः।
पटोऽष्टादशभिः कृष्टः पुरुषैरप्यसंक्षयः ॥ ९३ ॥
रम्यपुष्पफलारामश्चौरैरपि विलुण्ठितः। D 391
द्वेषोपहासकलहासक्तश्च विपुलो जनः ॥ ९४ ॥
स्वप्नाद्भुतानामेतेषां मन्ये घोरतरं फलम्।
इति पृष्टः क्षितिभुजा भगवान् काश्यपोऽब्रवीत् ॥ ९५ ॥
शतायुषि जने शास्ता शान्तः शाक्यमुनिर्जिनः।
भविष्यत्यमृताम्भोधिः स दृष्टः कुञ्जरस्त्वया ॥ ९६ ॥
तस्यापि पश्चिमे काले श्रावकाः कलिसंश्रयात्।
त्यक्तशीलगुणाचारा भविष्यन्ति सविप्लवाः ॥ ९७ ॥

अपक्काल्पविवेकानां बलात्ते गृहवासिनाम् ।
स्वयं सेवां समालम्ब्य करिष्यन्त्येव देशनाम् ॥ ९८ ॥
अर्थनीयोऽर्थिभावेन यस्मात्सेवासु धावति ।
तृषितस्य व्रजन् पश्चात्कूपस्तस्माद्विलोकितः ॥ ९९ ॥
ते करिष्यन्ति लोभान्धाः संमोहोपहताः परम् ।
बोध्यङ्गमुक्ताप्रस्थस्य सक्तुप्रस्थेन विक्रयम् ॥ १०० ॥
तीर्थवाक्यकुदारूणि बुद्धभाषितचन्दनैः ।
साम्यमापादयिष्यन्ति ते मौग्ध्यादविशेषिणः ॥ १०१ ॥
D 893 क्वचिद्भद्रं समासाद्य विनीतं भिक्षुकुञ्जरम् ।
दुःशीलकलभो भिक्षुः स्पर्धया धिक्करिष्यति ॥ १०२ ॥
चापलाशुचिलिप्ताङ्गः सुशीलान् भिक्षुमर्कटः ।
अनुलिम्पन् स्वदोषेण करिष्यत्यात्मसंनिभान् ॥ १०३ ॥
षण्ढकस्याभिषेकश्च भविष्यति कपेरिव ।
संबुद्धशासनपटं कृष्यमाणं न नङ्क्ष्यति ॥ १०४ ॥
संघद्रव्यफलारामेष्वपि यास्यन्ति चौरताम् ।
मिथः कलहशीलाश्च भविष्यन्त्यपवादिनः ॥ १०५ ॥
तव स्वप्नविपाकान्ते फलान्येतानि भूतले ।
इति शास्तुर्वचः श्रुत्वा विस्मितोऽभून्महीपतिः ॥ १०६ ॥
सानुगस्याथ नृपतेः स शास्ता धर्मदेशनाम् ।
कृत्वा काञ्चनमालाया दिदेश कुशलार्हताम् ॥ १०७ ॥
जन्मान्तरे चकारार्चां स्तूपे नारङ्गमालया ।
सा तेन सुकृतेनैव जाता हेमस्रजाङ्किता ॥ १०८ ॥
सेयं सुमागधा पुण्यप्रभावेण महीयसा ।
प्राप्ताद्य जनकायस्य सम्यक्कुशलसेतुताम् ॥ १०९ ॥
D 895 अभिधायेति भगवान्नभसा भिक्षुभिः सह ।
रुचा संपूरयन्नाशां ययौ जेतवनं जिनः ॥ ११० ॥
पुंसां सत्कुलभूतये बलवती मिथ्यैव पुत्रस्पृहा
सूनुश्चेदगुणस्तदेव विकलं तत्किं न सर्वं कुलम् ।
सा कन्या किल जायते गुणवती पुण्यप्रभावाद्यया
संसारोरुसरित्पतौ कुलयुगं नावेव संतार्यते ॥ १११ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
सुमागधावदानं त्रिनवतितमः पल्लवः ॥

## ९४ यशोमित्रावदानम् । D 397

तरलतरतरंगोद्गारगम्भीरतोये
दधति जगति केचित्तप्ततां भग्नभाग्याः ।
खरमरुपरितापे केचिदुत्सक्तपुण्याः
सहजसलिलसारैस्तीव्रतृष्णां त्यजन्ति ॥ १ ॥

श्रावस्त्यां पुण्यमित्रस्य सूनुर्गृहपतेरभूत् ।
यशोमित्र इति ख्यातः प्रतिमानं यशस्विनाम् ॥ २ ॥

तस्य जन्मक्षणे पुण्यैः पीयूषकिरणत्विषः ।
अवृष्टिप्रभवा वाग्भिः शशाम विषमा विपत् ॥ ३ ॥

स युवैव वशी गत्वा भवभोगपराङ्मुखः ।
जिनं जेतवनासीनं सिषेवे कुशलोद्यतः ॥ ४ ॥

धर्मदेशनया शास्तुः प्रव्रज्यार्हत्पदं श्रितः ।
तुल्यकाञ्चनपाषाणः सोऽभून्मुक्तप्रियाप्रियः ॥ ५ ॥

दंष्ट्राभ्यां सरसं तस्य द्रुतस्फटिकनिर्मलम् ।
सुस्राव वारि येनासौ वीततृष्णः सदाभवत् ॥ ६ ॥

कदाचिद्भिक्षवः सर्वे भगवन्तं कुतूहलात् । D 399
तृष्णाव्युपरमे तस्य पप्रच्छुः पुण्यकारणम् ॥ ७ ॥

सोऽब्रवीत्काश्यपाख्यस्य शास्तुः काशिपुरे पुरा ।
अभूत्प्रव्रजितः श्रेष्ठिसुतः सुन्दरकाभिधः ॥ ८ ॥

स कदाचित्तृषाक्रान्तः संतापक्लान्तविग्रहः ।
निदाघे चातक इव न क्वचिज्जलमाप्तवान् ॥ ९ ॥

शून्यतां तोयपात्राणि कूपा निर्जलतामपि ।
स्रोतांसि सहसा शोषं तस्यापुण्यैः समाययुः ॥ १० ॥

देहल्यागोद्यतस्याथ तस्य तृष्णाप्रलापिनः ।
उपाध्यायेन सलिलं दत्तं प्रायाददृश्यताम् ॥ ११ ॥

शासनात्काश्यपस्याथ स शास्तुर्जलभाजनम् ।
अक्षयत्वमिवायातं संघे चिरमचारयत् ॥ १२ ॥

कारुण्यात्तस्य भगवान् काश्यपः श्रेयसां निधिः ।
प्रसन्नपाणिपद्मेन चक्रे वारिप्रतिग्रहम् ॥ १३ ॥

दृष्ट्वा सविस्मयस्तत्र जनसंघः समागतः ।
तोयमक्षयतां यातं सत्यदर्शनमाप्तवान् ॥ १४ ॥

D 901 तत्पुण्यप्रणिधानेन सोऽयं कुशलमूलवान् ।
यशोमित्रः श्रितः शान्तिं दंष्ट्रोद्भूतपयोभरः ॥ १५ ॥

इति जन्मान्तरोदन्तं यशोमित्रस्य सादराः ।
जिनेन कथितं श्रुत्वा भिक्षवो विस्मयं ययुः ॥ १६ ॥

संसारमरुपरिभ्रमतृष्णातापं त्यजति जिनसेवा ।
सुखविमलसलिलां कलितांशमहिमकल्लोलिनीं प्राप्य ॥ १७ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
यशोमित्रावदानं चतुर्नवतितमः पल्लवः ॥



## ९५ व्याघ्र्यवदानम् । D 903

उत्सार्य पापविपुलं तिमिरावतारं
सद्यःप्रकीर्णकरुणाकिरणप्रकाशः ।
दोषापहश्च परितापहरश्च कोऽपि
सन्मार्गमादिशति बुद्धसहस्ररश्मिः ॥ १ ॥

पुरा पुरे राजगृहे भगवान् वेणुकानने ।
कलन्दकनिवापाख्ये विजहार तथागतः ॥ २ ॥

तस्मिन् पुरे सार्थपतेरर्थदत्तस्य दारकौ ।
अभूतां निशिताख्यायां जायायां युगपद्यथा ॥ ३ ॥

तौ शङ्कुसंधिदत्ताख्यौ याते पितरि पञ्चताम् ।
क्षीणे धने परिजने मात्रा कृच्छ्रेण वर्धितौ ॥ ४ ॥

तौ मातुर्वचसा बालौ शनकैः प्रतिवेशिनाम् ।
चौर्यप्रवृत्तौ स्वल्पार्थभाण्डानां चक्रतुः क्षयम् ॥ ५ ॥

मातुः पितुश्च नियमेन भवन्ति योग्याः
श्वभ्रे पतन्त्यविनये तदुपेक्षयैव ।
पूर्वोदितस्वजनवासनयैव विद्धा
बालास्तिला इव परप्रकृतिं भजन्ते ॥ ६ ॥

क्रमेण वर्धमानौ तौ प्रौढचौरत्वमागतौ । D 905
उल्लङ्घसंधिच्छेदाद्यैः पौराणां जह्रतुर्धनम् ॥ ७ ॥

अजातशत्रुणा राज्ञा चारैर्विज्ञाय तत्क्रियाम् ।
विसृष्टौ वध्यवसुधां तौ मात्रा सहितौ क्षणात् ॥ ८ ॥

यद्भुज्यते परधनेन निपीयते यत्
सौख्याशया विषमवर्त्म विगाह्यते यत् ।
तस्याविचाररमणीयसुखोदरस्य
प्राणावसानपणदारुण एव पाकः ॥ ९ ॥

संजायते विषयपानमदाकुलानां
यश्चौर्यदाहवधलब्धधनेन रागः ।
निर्यात्यसौ परिणतः करपादपात-
शूलाधिरोहणपरिस्रुतरक्तपूरैः ॥ १० ॥

ततस्तौ वध्यमालाङ्कौ नीलरक्ताम्बरावृतौ ।
प्रेक्षागतजनाकीर्णौ वध्यस्थानमुपागतौ ॥ ११ ॥

ज्ञात्वा दयावान् सर्वज्ञः स्वयमभ्येत्य तां भुवम् ।
प्रसादानुग्रहेणैव चक्रे विगतबन्धनौ ॥ १२ ॥
सर्वज्ञस्याज्ञया राज्ञा तौ त्यक्तौ मुक्तपातकौ ।
प्रव्रज्यया भगवतः शासनेऽर्हत्त्वमापतुः ॥ १३ ॥
D 907 जननीसहितौ दृष्ट्वा तौ ज्ञानविभवोज्ज्वलौ ।
तत्कथाकौतुकात्पृष्टो भिक्षुभिः सुगतोऽभ्यधात् ॥ १४ ॥
मयैव रक्षितावेतौ पूर्वस्मिन्नपि जन्मनि ।
एतयोर्जननी व्याघ्री घोररूपा तदाभवत् ॥ १५ ॥
तस्मिन् काले कृपाबन्धुर्बोधिसत्त्वः शरीरिणाम् ।
अहं करुणरेखाख्यः क्षितिपालसुतोऽभवम् ॥ १६ ॥
कदाचिदेतौ क्षुत्क्षामा पोतकौ भोक्तुमुद्यता ।
स्वशरीरं मया दत्वा व्याघ्री सा विनिवारिता ॥ १७ ॥
अद्य तावेव चौरत्वं कर्मशेषादुपागतौ ।
मया संरक्षितौ व्याघ्री माता सैवेयमेतयोः ॥ १८ ॥
इत्युक्त्वा करुणासिन्धुर्भगवान् भूतभावनः ।
भिक्षुसंघेन सहितः प्रययौ जेतकाननम् ॥ १९ ॥
अमृतरसवृष्टिरिष्टा दृष्टिरनिष्टापहा सतां जयति ।
पतितेव पतितमपि या कुरुते पुण्योन्नतिं श्लाघ्याम् ॥ २० ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
व्याघ्र्यवदानं पञ्चनवतितमः पल्लवः ॥



## ९६ हस्त्यवदानम् । D 909

ह्लादः शशाङ्कस्य रवेः प्रकाशः
तापः कृशानोः पवनस्य वेगः ।
परोपकारः करुणारतानां
महाजनानां सहजः स्वभावः ॥ १ ॥

उद्याने केलिरसिकः श्रीमानुदयनः पुरा ।
अवन्तिविषये राजा विजहार वधूसखः ॥ २ ॥

तस्य पुष्पोच्चयासक्ताः कान्ताः कुवलयेक्षणाः ।
यदृच्छयागतैर्दृष्टा मुनीनां पञ्चभिः शतैः ॥ ३ ॥

तान् प्रियान्यस्तनयनानीर्ष्यामन्युपरायणः ।
स चक्रे पाणिचरणच्छेदासृक्पङ्कशायिनः ॥ ४ ॥

तानार्तनादिनस्तीव्रमर्मच्छेदव्यथातुरान् ।
ददर्श भगवान् बुद्धः करुणास्निग्धलोचनः ॥ ५ ॥

तद्दृष्ट्यामृतवृष्ट्येव स्पृष्टास्ते धृतजीविताः ।
संश्लिष्टपाणिचरणाः समुत्तस्थुर्गतव्यथाः ॥ ६ ॥

ततस्तेषां प्रपन्नानां भगवान् धर्मदेशनाम् । D 911
व्यधाद्ययाशु ते प्रापुरनागामिफलोदयम् ॥ ७ ॥

तद्दृष्ट्वा भिक्षुभिः पृष्टः साश्चर्यैर्भगवान् जिनः ।
जगाद पूर्वमप्येते दययैव मयोद्धृताः ॥ ८ ॥

वाराणस्यां पुरा राज्ञा ब्रह्मदत्तेन मन्त्रिणाम् ।
शतानि पञ्च भिन्नानां निरस्तानि कृतागसाम् ॥ ९ ॥

ते राजभीत्या संतप्ता मरुमार्गप्रवासिनः ।
ग्रीष्मे निरुदकच्छाये निपेतुस्तीव्रतृष्णया ॥ १० ॥

विलोक्य बोधिसत्त्वस्तान् भद्रो नाम महाद्विपः ।
तत्प्रलापेषु निर्भिन्नः कारुण्यात्सव्यथोऽभवत् ॥ ११ ॥

दूरात्सलिलमादाय स हस्तेन महीयसा ।
तान् वीततृष्णान् विदधे पयोमूलफलप्रदः ॥ १२ ॥

तेनैव सततं पृष्ठान्निर्दिष्टप्राणधारणाः ।
विश्रान्तिं तत्र ते प्रापुः प्रशान्तविपुलश्रमाः ॥ १३ ॥

कालेन त्यक्तदेहस्य ततस्ते तस्य दन्तिनः ।
कृत्वा शरीरसत्कारं पूजां चक्रुः सुरोचिताम् ॥ १४ ॥

D 913 कुञ्जरेण मयारण्ये त एते मन्त्रिणः पुरा ।
कृच्छ्रात्संतारितास्तस्मान्मुनयश्चाद्य वैशसात् ॥ १५ ॥

इत्युक्त्वा भगवान् सर्वसत्त्वसंतारणव्रतः ।
पूज्यमानो मुनिगणैर्जगाम स्वं तपोवनम् ॥ १६ ॥

अखिलसुखकुशलदूती भवमरुसंतापशीतलच्छाया ।
जयति जननीव जननी करुणामृतवाहिनी शास्तुः ॥ १७ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
हस्त्यवदानं षण्णवतितमः पल्लवः ॥



## ९७ कच्छपावदानम् । D 915

विद्वेषदोषविषदूषितमानसानां
यत्साधुबाधनविधौ निशितः प्रयत्नः ।
स्याच्चेत्तदुज्ज्वलगुणानुकृतौ स एव
तत्को भवेत्पृथुपराभववान् भवेऽस्मिन् ॥ १ ॥

जिने राजगृहोपान्ते वेणुविजनचारिणि ।
विद्वेषाद्देवदत्तेन प्रेरितास्तापसाः पुरा ॥ २ ॥

भ्रूभङ्गभीमवदनास्तद्दत्तविविधायुधाः ।
अभ्याद्रवन् सुसंरब्धाः क्रोधविध्वस्तसंयमाः ॥ ३ ॥

पञ्चभिस्तापसशतैः क्षिप्तास्तेऽस्त्रप्रवृष्टयः ।
ययुर्भगवतः काये कमलोत्पलजालताम् ॥ ४ ॥

निशितान्यपि शस्त्राणि श्रयन्ते यत्सुमार्दवम् ।
विद्वेषविषदिग्धानि न तु चित्तानि पापिनाम् ॥ ५ ॥

प्रादुरासीन्मणिमयं कूटागारं नभःप्रभम् ।
शरीरच्छादनं शास्तुर्न तु दृष्टिनिवारणम् ॥ ६ ॥

ततस्ते तापसाः श्रान्ता लज्जावनमिताननाः ।
निपेतुः पादयोः शास्तुः क्षमासिन्धोः प्रसादिनः ॥ ७ ॥

भगवानपि पुत्राणामिव तेषां प्रसादिनाम् । D 917
निकारेणापि निर्मन्युर्विदधे धर्मदेशनाम् ॥ ८ ॥

अक्षोभविभ्रमसुखं शममाश्रितानि
पुण्यक्षमासलिलनिर्मलशीतलानि ।
नो मानसानि महतामहितप्रवृत्त-
दुर्वृत्तिमन्युरजसा कलुषीभवन्ति ॥ ९ ॥

धर्मदेशनया शास्तुः प्रव्रज्योन्मार्जिताशयाः ।
ते सर्वाश्रमनिर्मुक्तमर्हत्त्वं प्रतिपेदिरे ॥ १० ॥

अत्रान्तरे समायातैर्भिक्षुभिः श्रुततत्कथैः ।
किमेतदिति साश्चर्यैः पृष्टस्तानवदज्जिनः ॥ ११ ॥

कृतापकाराः सुतरां पूर्वस्मिन्नपि जन्मनि ।
मयैते निर्विकारेण प्रसादादवलोकिताः ॥ १२ ॥

एते समुद्रयात्रायां वणिजः काशिदेशजाः ।
भग्ने प्रवहणे प्रापुः पुरा जीवितसंशयम् ॥ १३ ॥

कच्छपेन मया तत्र पृष्ठमारोप्य तारिताः ।
पारमासाद्य विश्रान्तिं भेजिरे लब्धजीविताः ॥ १४ ॥

तत्तारणपरिश्रान्ते मयि निद्रावृते क्षणम् ।
मन्मांसाहारकामास्ते सर्वे मां हन्तुमुद्ययुः ॥ १५ ॥

D 919 तदुत्सृष्टाश्मवृष्ट्यापि महत्या पिण्डिताकृतेः ।
काये दृढकपाटस्य न मे काचिदभूत्क्षतिः ॥ १६ ॥

ततस्तान् क्षुत्परिक्षामान् दृष्ट्वाहं करुणाकुलः ।
स्वयं तेभ्यस्तनुं दत्वा प्रयातः कृतकृत्यताम् ॥ १७ ॥

त एते वणिजः पूर्वमद्य तापसतां गताः ।
कृतागसोऽपि कारुण्यात्प्रापिताः कुशलं मया ॥ १८ ॥

ते शास्तुः शासने पूर्वं काश्यपस्य महामुनेः ।
प्रव्रज्यां प्राप्य संजातास्तत्फलस्याद्य भागिनः ॥ १९ ॥

तथागतेन कथितं श्रुत्वैतद्भिक्षवः क्षमाः ।
प्रशशंसुः परं तस्य क्षमामिव भरक्षमाम् ॥ २० ॥

येषां निर्मलशीलशीतलजला सत्त्वाशयाश्वासिनी
नित्यं वैररजःप्रमार्जननदी क्षान्तिः स्थिता चेतसि ।
दुर्वारारिनिकारकोपदहनज्वालावलीविप्लव-
प्लावोद्भूतपृथुव्यथापरिचितां नायान्ति ते विक्रियाम् ॥ २१ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
कच्छपावदानं सप्तनवतितमः पल्लवः ॥

———

## ९८ तापसावदानम् । D 921

अत्युन्नतेषु शिखरेषु कुलाचलानां
निम्नेषु चाशुचिचयावकरोत्करेषु ।
आलोक एष निपतत्यविशेषवृत्त्या
तुल्योपकारमहिमा दिननायकस्य ॥ १ ॥
जिनं वेणुवनासीनं पुरे राजगृहे पुरा ।
दुर्भिक्षे क्षुत्परिक्षामा मल्लाः शरणमाययुः ॥ २ ॥
दत्वाभिमतमाहारं करुणाकल्पपादपः ।
दुर्दशाशान्तये तेषां विदधे धर्मदेशनाम् ॥ ३ ॥
अनुग्रहाद्भगवतः संप्राप्तकुशलोदयाः ।
अर्हत्पदं समासाद्य ते जगत्पूज्यतां ययुः ॥ ४ ॥
नीचानभ्युन्नतिं यातान् दृष्ट्वा तान् पुरवासिनः ।
बभूवुर्मत्सरास्तेषां नित्यजात्यपवादिनः ॥ ५ ॥
अहो भगवता म्लेच्छमल्लानां शुद्धशासनम् ।
अर्हत्पदमनर्हाणां निर्दिष्टमिति तेऽब्रुवन् ॥ ६ ॥
अल्पस्यानल्पविभवं नवोत्साहासहः परम् । D 923
करोति लज्जाजननं जनो जन्मप्रकाशनम् ॥ ७ ॥
जिनाज्ञया कुरुद्वीपे व्योम्ना कृतगतागतान् ।
प्रभावान्नृपतिर्मल्लान् सजनस्तानपूजयत् ॥ ८ ॥
ततः प्रसादिताः पौरैर्मानिताश्च प्रणम्य ते ।
सुगुणैर्गुणवत्पूज्यैर्भिक्षूणामग्र्यतां ययुः ॥ ९ ॥
भिक्षुभिस्तत्प्रभावेण विस्मितैर्भगवांस्ततः ।
तत्पुण्यकारणं पृष्टः सर्वज्ञस्तानभाषत ॥ १० ॥
अभवं काशिदेशान्ते पञ्चाभिज्ञस्तपोवने ।
अहं कुशलशीलाख्यः पूर्वजन्मनि तापसः ॥ ११ ॥
कोटमल्लाश्च तत्रैव बभूवुर्मुनयः पुरा ।
ते मया दिष्टकल्याणाः पञ्चाभिज्ञत्वमागताः ॥ १२ ॥
तत्पुण्यवासनाभ्यासप्रीत्यास्मिन्नपि जन्मनि ।
त एते संसृतिक्लेशान्मल्लाः संतारिता मया ॥ १३ ॥
एते प्रव्रजिताः शास्तुः काश्यपस्यान्तिके पुरा ।
बभूवुः कटुकालापा यातास्तेनाद्य मल्लकाः ॥ १४ ॥
इति प्राग्जन्मवृत्तान्तं मल्लानां सर्वदर्शिना । D 925
श्रुत्वोदितं भगवता भिक्षवो विस्मयं ययुः ॥ १५ ॥
तिमिरभरनिमीलितानां सुजनानां विबुधशेखरार्हत्वम् ।
अपि भवति पङ्कजानां आलोकानुग्रहाद्ग्रहाधिपतेः ॥ १६ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
तापसावदानमष्टानवतितमः पल्लवः ॥

D 927 ## ९९ पद्मकावदानम् ।

कायिकं हरति मानसं तथा
देहिनां भवमयं महाभयम् ।
बुद्ध एव भगवान् सुधानिधिः
सर्वलोकपरलोकबान्धवः ॥ १ ॥
श्रावस्त्यां भगवान् पूर्वं रोगाक्रान्तजनं जिनः ।
विदधे भिक्षुसंघं च स्वस्थमालोकनामृतैः ॥ २ ॥
वात्सल्यविस्मितं सोऽथ भिक्षुसंघमभाषत ।
मया यूयं कृताः स्वस्थाः पूर्वस्मिन्नपि जन्मनि ॥ ३ ॥
अभवं पद्मकाख्योऽहं वाराणस्यां नृपः पुरा ।
सर्वार्तिहरणासक्तः प्रजानां जनकोपमः ॥ ४ ॥
कदाचिद्दैवदोषेण वैषम्याद्देशकाल्योः ।
दुःसहः सर्वपौराणामभूद्व्याधिसमुद्भवः ॥ ५ ॥
भिषग्भैषज्यसंभारैर्मयाविहितसंपदः ।
शान्तिस्वस्तिक्रयोगैश्च न ते स्वास्थ्यं समाययुः ॥ ६ ॥
रोहिताख्यो महामत्स्यस्तेषां रोगनिवृत्तये ।
लक्षज्ञवैद्यैरादिष्टः कैश्चित्प्राप्तो न धीवरैः ॥ ७ ॥
D 929 अभावे तस्य मत्स्यस्य जनानां प्राणसंशये ।
मया दुःखात्तकारुण्यात्तत्प्रलापासहिष्णुना ॥ ८ ॥
रोहितः स्यामहं मत्स्यः पथ्यार्हः सर्वरोगिणाम् ।
प्रणिधानबलेनेति क्षिप्तं हर्म्यात्तदा वपुः ॥ ९ ॥
तेनार्तिप्रणिधानेन वारायाः सरितोऽम्भसि ।
क्षणेनैवाहमभवं सुमहान् रोहितस्तिमिः ॥ १० ॥
तन्मांसेनोपयुक्तेन सर्वे ते पुरवासिनः ।
सहसैव ययुः स्वास्थ्यममृतेनेव पूरिताः ॥ ११ ॥
त एव भिक्षवो यूयमद्य रोगान्मयोद्धृताः ।
रोगत्राणेन सत्त्वानां सदैवाहं निरामयः ॥ १२ ॥
संसारव्याधिवैद्येन सुगतेनेति भाषितम् ।
स्वस्थास्ते भिक्षवः श्रुत्वा हर्षोत्साहं प्रपेदिरे ॥ १३ ॥
अविरतपरहितमनसां कोऽपि स समत्वविकाशः ।
तनुरपि तनुतृणतुलया दत्तो यत्र * * विलासः ॥ १४ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
पद्मकावदानं नवनवतितमः पल्लवः ॥

# १०० पुण्यप्रभासावदानम् । D 931

सत्त्वोदधिः कोऽपि स वन्दनीयः
करोति पुण्यैरमृताग्रदूती ।
यस्याशयेऽनुत्तरबोधिवाञ्छा
शीतांशुलेखेव नवावतारम् ॥ १ ॥

जिनं जेतवनासीनं पप्रच्छ प्रणतः पुरा ।
कौतुकप्रणयी श्रीमान् कोसलेन्द्रः प्रसेनजित् ॥ २ ॥

भगवन् कथ्यतां कस्मिन् प्रथमं ते पृथुद्युतेः ।
पूर्वजन्मनि संजाता सम्यक्संबोधिवासना ॥ ३ ॥

भगवानिति भूपेन पृष्टस्तं प्रत्यभाषत ।
शुचिमानसहंसालीं दर्शयन् दशनद्युतिम् ॥ ४ ॥

पुर्यां पुरा प्रभावत्यां प्रभासो भूभुजां निधिः ।
यदाहमभवं सम्यग्बोधिधीम तदाभवत् ॥ ५ ॥

करिणीप्रेमपाशेन समाकृष्टः स कुञ्जरः ।
यदा विगाह्य गहनं रागी पुनरुपागतः ॥ ६ ॥

तदा हस्तिमहामात्रः संयातस्तमभाषत । D 933
प्रत्यायातः क्षितिपते कुञ्जरः शिक्षया मम ॥ ७ ॥

एष रागसमाकृष्टः कायविस्मृतसंयमः ।
जगाम विक्रियां हस्ती विश्रम्भगुणमण्डलः ॥ ८ ॥

असूर्याग्निस्तापः क्षतधृतिरशापश्च निरयः
तमश्चानुक्तान्ध्यं विषमविषमद्रव्यभुजगम् ।
असह्यं क्षीबत्वं निपतनमनिम्नं तनुभृता-
मभूच्चोन्मादः स स्मरजनितरागः स्मृतिहरः ॥ ९ ॥

संयातेनेति कथिते नृपस्तं प्रत्यभाषत ।
अप्यस्ति रागः संसारे कश्चिद्विषयनिःस्पृहः ॥ १० ॥

इति पृष्टः क्षितीशेन संयातस्तमभाषत ।
निःसंसारा जगत्यस्मिन् वीतरागास्तथागताः ॥ ११ ॥

सत्पात्राणां गुणवतां सर्वसत्त्वोपकारिणाम् ।
राजन् बुद्धप्रदीपानां रुचा विश्वं प्रकाश्यते ॥ १२ ॥

एतदाकर्ण्य भूभर्तुः परं चित्तप्रसादिनः।
प्रादुर्बभूव हृदये सद्यः संबोधिवासना ॥ १३ ॥

D 925 पूर्वपुण्यप्रभावेण सप्राप्तकुशलोदयः।
सम्यक्संबोधिलाभाय प्रणिधानं चकार सः ॥ १४ ॥

सोऽभूद्गृहपतिर्नाम कुलालः पूर्वजन्मनि।
स्नेहे गुडोदनैस्तेन दीनेन पूजितो जिनः ॥ १५ ॥

तत्पुण्यप्रणिधानेन तस्याप्तस्य प्रभासताम्।
बोधिरङ्कुरिता चित्ते फलितेयं ममाधुना ॥ १६ ॥

कथितमिति तथागतेन तत्र
प्रथमतरोदितशुद्धबोधिचित्तम्।
अमृतमिव निपीय कोसलेन्द्रः
श्रुतिचुलुकैः स जगाम राजधानीम् ॥ १७ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
पुण्यप्रभासावदानं शततमः पल्लवः ॥



## १०१ श्यामाकावदानम् । D 937

कल्पः सर्वजनप्रियः सततमासक्तप्रकाशोदयः
श्लाघ्यो वासर एष यस्य जननी पूज्या प्रभातद्युतिः ।
यश्चाग्रे जनकस्य चण्डमहसः पादोपसेवाधृतिः
लोकेऽस्मिन्नपरत्र वा तदनुगः स्पृष्टस्तमोभिः क्वचित् ॥ १ ॥

याते यशःशेषदशां क्षितीशे
शुद्धोदने शुद्धवरप्रकाशे ।
भक्त्या चकारास्य शरीरपूजां
तथागतः स्तूपमकारयच्च ॥ २ ॥

अलोकसामान्यविविक्तवृत्तं
यदृच्छयालोकपथप्रवृत्तम् ।
संपूरितः संशयविस्मयाभ्यां
पप्रच्छ तं भिक्षुगणः समेत्य ॥ ३ ॥

अनुत्तरानत्ययबोधिधाम्नः
स्पृहाप्रहाणोर्जितलोकवृत्तेः ।
जगद्गुरोस्ते गुरुगौरवेण
केयं प्रवृत्ता व्यवहारचर्या ॥ ४ ॥

तान् धर्मदर्शी भगवान् बभाषे D 939
पूज्यौ गुरूणामपि गौरवार्हौ ।
कायस्य कल्याणनिकेतनस्य
निमित्तभूतौ पितरौ बुधानाम् ॥ ५ ॥

धर्मोऽप्यधर्मत्वमुपैति तेषां
ज्ञानद्युतिर्व्यामलतां प्रयाति ।
समस्तपुण्यप्रथमावतरौ
न पूजितौ यैः पितरौ सदैव ॥ ६ ॥

जन्मान्तरेऽप्यादरगौरवेण
तपःप्रवृत्तौ पितरौ मयान्धौ ।
आराधितौ त्यक्तगृहस्पृहेण
सपर्यया दैवतवत्सदैव ॥ ७ ॥

द्विजन्मनः काशिपुरे सुबन्धोः
पत्न्यां पुरा गोमतिकाभिधायाम् ।

पुत्रः पवित्रीकृतशुद्धवंशः
श्यामाकनामा मतिमान् बभूव ॥ ८ ॥
तौ दम्पती वृद्धतयान्ध्यमाप्तौ
यातौ सुतन्यस्तगृहौ वनान्तम् ।
D 941 मनीषिणामेव जरावतारे
परं विवेकस्तरुणत्वमेति ॥ ९ ॥
तत्सूनुराचारगुणेन राज्ञा
पुरोहितत्वं भृशमर्थितोऽपि ।
पित्रोः सपर्यारसिकस्तदेव
ययौ युवा पुण्यतपोवनं तत् ॥ १० ॥
तेन प्रयत्नात्परिचर्यमाणौ
मनीषिणा मूलफलैः सतोयैः ।
संतोषसंजातमनःप्रसादा-
दवापतुस्तत्पितरौ प्रमोदम् ॥ ११ ॥
ततः कदाचिन्मृगयाविहारी
तदाश्रमोपान्तसरित्तटान्ते ।
महीमहीनां महिषद्विपेन्द्रै-
स्तां ब्रह्मदत्तो नृपतिर्जगाहे ॥ १२ ॥
अत्रान्तरे तत्र मृगाजिनाङ्क-
मम्भोभृतं कुम्भमपाददानम् ।
श्यामाकमाकर्णभृतेन राजा
जघान दूरादिषुणा मृगार्थी ॥ १३ ॥
D 943 अशर्मकर्मोपनतेन तेन
शितेन विद्धः स्खलनर्मणेव ।
मर्मावसन्नेन शरेण तीव्रं
विघूर्णमानः स शनैर्जगाद ॥ १४ ॥
अहो बतानार्यतरेण केन
निष्कारणं निष्करुणाशयेन ।
अकार्यसङ्गादविचार्य पापं
प्राणापहारी प्रहितः शरोऽयम् ॥ १५ ॥
पित्रोर्वने देहधृतोर्निविष्टे
दृष्टिप्रलोपान्मयि यष्टिभूते ।

कष्टं हते तौ निहतौ निराशौ
कस्यायमुग्रस्त्रिवधे प्रयत्नः ॥ १६ ॥
इति व्यथाविस्खलितप्रलापं
विप्रं नवश्मश्रुनिलीनलेखम् ।
नृपः सभृङ्गं नवचूतमग्रतः
तं काष्ठिकच्छिन्नमिवालुलोक ॥ १७ ॥
शरं गुरुक्लेशविशेषचिन्ता-
संतापदीप्ताग्निशिखायमानम् ।
पक्षाङ्कितं प्राणविपक्षभूतं D 945
सुवर्णपुङ्खं हृदये वहन्तम् ॥ १८ ॥
विचेष्टमानं तटिनीतटान्ते
दृष्ट्वा तमाकृष्टधृतिर्नरेन्द्रः ।
हतः प्रतीपोपगतेन तेन
स्वसायकेनैव पृथुव्यथोऽभूत् ॥ १९ ॥
स तं बभाषे न मुने मया त्वं ।
मृगाजिनाच्छादितपूर्वकायः ।
प्रमाददोषाभिहतेन साधो
शापाग्निना नार्हसि मां निहन्तुम् ॥ २० ॥
श्रुत्वेति वाक्यं व्यथितस्य राज्ञः
तीव्रव्यथां सत्त्वनिधिर्नियम्य ।
तमब्रवीत्कीर्णजटाकलापः
स्वभावनिर्मन्युमनाः कुमारः ॥ २१ ॥
अलं तपःशापभयेन राजन्
अहं विमन्युः पितरौ ममान्धौ ।
अस्मिन्नपि प्राणहरापकारे
शापोपसङ्गं न करिष्यतस्ते ॥ २२ ॥
सुखाय दुःखाय गुणोदयाय D 947
दोषाय शापाय वधाय काले ।
कर्माण्यसंभ्रान्तफलानि जन्तोः
स्वयं कृतान्येव भवे भवन्ति ॥ २३ ॥
सन्मार्गेण शनैर्व्रजन्निपतितः प्राप्तोऽतिभङ्गं तनो-
र्यः श्वभ्रेषु परिभ्रमोत्पथगतेर्धावन् विशल्यक्षतः ।

यत्सीदत्यसक्तप्रयत्नचतुरः श्रीसंश्रयश्चालसः
तद्वैचित्र्यमभित्तिचित्ररचनं सर्वात्मना कर्मणाम् ॥ २४ ॥

अपश्चिमस्त्वेष ममाम्बुकुम्भ-
स्तृष्णार्तयोर्जीवितमेव पित्रोः ।
सौजन्यमालम्ब्य धिया दयार्द्र
गत्वा त्वया तूर्णतरं प्रदेयः ॥ २५ ॥

उक्त्वेति कण्ठान्तरवर्तिजीवः
श्वासप्रयासस्थगितान्यवर्णः ।
मौनी स चक्रे विनताननस्य
वैलक्ष्यदीक्षामिव सायकस्य ॥ २६ ॥

कुम्भं समादाय ततः क्षितीशः
तदाश्रमं प्राप्य भृशं प्रतप्तः ।
D 949 तावेकपुत्रौ स्थविरौ विलोक्य
तदन्तिकं नैव शशाक गन्तुम् ॥ २७ ॥

पुत्रेति दूरात्पदशब्ददत्त-
कण्ठौ समुत्कण्ठितमानसौ तौ ।
स्नेहाद् ब्रुवाणावुपसृत्य राजा
जगाद शापात्क्षयमीहमानः ॥ २८ ॥

न पापभागी युवयोः सुतोऽहं
सौजन्यवल्लीकठिनः कुठारः ।
मातङ्गवृत्याम्रतरुं निपात्य
मत्तेन येनोन्मथितः कुमारः ॥ २९ ॥

मत्सायकस्यूततनुः स शेते
युष्मत्सुतः कृच्छ्रगतस्तटान्ते ।
निधीयतां मूर्ध्नि ममोग्रशापः
स शीतलोऽस्मात्पृथुपापतापात् ॥ ३० ॥

इत्युक्तमात्रे वसुधाधिपेन तौ
वज्राग्निरुग्णाविव भग्नधेयौ ।
भीत्येव शोकस्य सुदुःसहस्य
महीयसीं मोहगुहां प्रविष्टौ ॥ ३१ ॥

D 951 सिक्तौ ततः शीतजलेन राज्ञा
तौ लब्धसंज्ञावयवौ कथंचित् ।

पुत्रान्तिकं भूप नय त्वमावा-
मित्यूचतुस्तौ करुणप्रलापौ ॥ ३२ ॥
नीतौ ततस्तेन सरित्समीप-
मद्वीपदीपे व्यसने निमग्नौ ।
हस्तेन संस्पृश्य सुतं शरार्तं
तद्वाणविद्धाविव पेततुस्तौ ॥ ३३ ॥
कस्मादकस्माद्गुरुवत्सलोऽपि
वृद्धावनाथौ पितरौ त्वमन्धौ ।
त्यक्त्वा दिवं गच्छसि पुत्रकेति
गाढं परिष्वज्य तमूचतुस्तौ ॥ ३४ ॥
आराधितौ भक्तिसपर्ययैव
निर्व्याजमावां गुरुदैवतेन ।
त्वयाग्निहोत्राभिरतेन पुत्र
सत्येन तेनास्तु भवान् विशल्यः ॥ ३५ ॥
इत्युक्तमात्रे करुणार्तिसत्य-
सत्त्वोपपन्ने वचने गुरुभ्याम् ।
शक्रः समभ्येत्य सुधाप्रसेकै- D 953
रजीवयन्निर्विवरं कुमारम् ॥ ३६ ॥
श्यामाकनामा स मुनेः कुमारः
तदाभवं तद्विनयव्रतोऽहम् ।
तावेव मे शाक्यकुलोद्भवेऽपि
पूज्यस्य पूज्यौ पितरौ प्रयत्नात् ॥ ३७ ॥
इति विविधधर्ममूलं गदितं सुगतेन भिक्षवः श्रुत्वा ।
गुरुसेवाव्रतसदृशं नान्यममन्यन्त सद्वृत्तम् ॥ ३८ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
श्यामाकावदानमेकाधिकशततमः पल्लवः ॥

D 955 

# १०२ सिंहावदानम् ।

दानेन दीनजनताव्यसनानि हन्ति
शीलेन तोषयति सज्जनमानसानि ।
प्रज्ञाबलेन च हरत्यविवेकमोहं
वीर्येण वारयति भीरुभयानि धीरः ॥ १ ॥

श्रावस्त्यां सत्त्वकुशलं दिशन्तं धर्मशासनैः ।
जिनं जेतवनासीनं पप्रच्छुर्भिक्षवः पुरा ॥ २ ॥

भगवन् भवता शक्रो बिम्बिसारश्च भूपतिः ।
भिक्षुश्चाज्ञातकौण्डिन्यः प्रापिताः सत्यदर्शनम् ॥ ३ ॥

लक्षद्वयं देवतानां तथायुतचतुष्टयम् ।
तत्प्रसङ्गेन संप्राप्तं सत्यदर्शनपात्रताम् ॥ ४ ॥

स्वभावः सहजो वायं गुणः पुण्यान्वयोऽपि वा ।
जन्माभ्यस्तप्रसादो वा तव विश्वोपकारिणः ॥ ५ ॥

इत्युक्तं भिक्षुभिः श्रुत्वा भगवान् प्रत्यभाषत ।
सहजैव ममाभ्यासात्परोपकृतये मतिः ॥ ६ ॥

अस्मिञ्जन्मनि किं चित्रं मम सत्त्वहिते रतिः ।
D 957 अप्यभूत्सतताभ्यासात्सिंहहस्त्यादिजन्मसु ॥ ७ ॥

दाक्षिणात्याः पुरा सार्थवाहा गाढाग्रहाशयः ।
जग्मुर्जलनिधेस्तीरं सार्धलक्षद्वयानुगाः ॥ ८ ॥

तस्मिन् काले जगद्ग्रासव्यग्रः काल इवापरः ।
अभूदजगरो घोरः कङ्काख्यः स्फारविग्रहः ॥ ९ ॥

ते तं सर्वजनायासं संत्रासमिव दुःसहम् ।
विनष्टधैर्या दृष्ट्वैव बभूवुर्घट्टिता इव ॥ १० ॥

भोगेन भोगिनानेन समन्ताद्वेष्टिते पथि ।
निश्चेष्टाः कालवक्त्राप्रवर्तिनस्ते प्रचुक्रुशुः ॥ ११ ॥

तेषामशेषत्रिदशस्तवैः शरणराविणाम् ।
आक्रन्दः सर्वदिग्व्यापी प्रोद्ययौ करुणस्वनः ॥ १२ ॥

यशःकेसरसंज्ञोऽथ सिंहः शैलगुहाशयः ।
तं शब्दं मन्दरः श्रुत्वा तद्वयस्यश्च कुञ्जरः ॥ १३ ॥

आपन्नत्राणसंनद्धौ करुणाकृष्टमानसौ।
घोरावाजग्मतुः सार्थसंरक्षणकृतक्षणौ ॥ १४ ॥

ततः सिंहः समारुह्य गजेन्द्रं गिरिविग्रहम्। D 959
वेगान्निपत्याजगरं चकार गतजीवितम् ॥ १५ ॥

प्राणप्रवाससमये तस्य निःश्वासमारुतः।
चकार दहनोद्गारी भस्मसात्सिंहकुञ्जरौ ॥ १६ ॥

तयोः शरीरपूजायै ततस्ते सार्थनायकाः।
स्तूपं विधाय प्रययुर्दिशस्तद्यशसा सह ॥ १७ ॥

अहमेव तदा सिंहः सार्थत्राणप्रदोऽभवम्।
महाहिर्देवदत्तोऽसौ शारिपुत्रश्च कुञ्जरः ॥ १८ ॥

तत्तस्य सत्त्वशशिनः सुकृतप्रकाशं
विश्वोपकारचतुरं चरितं महार्हम्।
श्रुत्वा जिनेन कथितं प्रथमं सहर्षा-
स्ते भिक्षवः प्रतिपदं प्रशशंसुरेव ॥ १९ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
सिंहावदानं द्व्यधिकशततमः पल्लवः ॥



D 961

## १०३ प्रियपिण्डावदानम् ।

तारहारवरवस्त्रशेखर-
च्छत्रचामरसितस्मिताः श्रियः ।
दिव्यभोगसुभगाः सुखोत्सवैः
सूचयन्ति सुकृतं महात्मनाम् ॥ १ ॥

प्रवृद्धधर्मविभवप्रभावोद्भवदर्शनात् ।
विस्मितं भिक्षुसंघातं बभाषे भगवान् पुरा ॥ २ ॥

अप्राप्तानुत्तरज्ञानमहसोऽप्यन्यजन्मनि ।
बभूवुर्मम साश्चर्याः सुकृतव्यञ्जकाः श्रियः ॥ ३ ॥

वज्रवत्यभिधानायां नगर्यामुत्तरापथे ।
वज्रचण्डाभिधो राजा वज्रपाणिरिवाभवत् ॥ ४ ॥

गङ्गाधिपत्ये नगरे मेरुं जित्वा महीपतिम् ।
तत्सुतां रोहिणीं नाम स सुधांशुरिवाप्तवान् ॥ ५ ॥

तस्यामजीजनत्पुत्रं स मित्रसदृशप्रभम् ।
चित्रं यस्य मणिच्छत्रं सहजातं व्यराजत ॥ ६ ॥

D 963 तस्य पुण्यप्रभावेण संकल्पोपनतः सदा ।
दिव्याभरणवस्त्रान्नभोगोऽभूत्पुरवासिनाम् ॥ ७ ॥

भोगपिण्डैः प्रियैस्तेन यस्मात्संपूरितं पुरम् ।
स तस्मात्प्रियपिण्डाख्यः क्ष्मापतेरभवत्सुतः ॥ ८ ॥

पितुरन्ते समं प्राप्तराज्यः प्राज्ययशा दिशाम् ।
दिदेश सर्वभूतानां स्वच्छन्दां भोगसंपदम् ॥ ९ ॥

दुर्मतिर्दुर्मतिर्नाम मन्त्री तस्य विरक्तताम् ।
प्रययौ गुणविद्वेषः स्वभावो हि दुरात्मनाम् ॥ १० ॥

मेरुं मातामहं तस्य गूढलेखैः स भूपतिम् ।
पूर्वापकारस्मृत्येव चकार समरोन्मुखम् ॥ ११ ॥

स दूतैः सहसोद्भूतमन्युः प्रज्वलितः परम् ।
संदिदेश बलोत्सेकाद्दौहित्रनिधनोद्यतः ॥ १२ ॥

दौहित्रः शत्रुपुत्रस्त्वं त्वत्पित्रा मदनात्मना ।
मण्डलं खण्डतां नीत्वा हृता कीर्तिरिवात्मजा ॥ १३ ॥

आच्छिन्नामुर्वरीमेतां प्रयच्छ स्वेच्छया न चेत् ।
स्वयमेत्य करोमि त्वां प्रत्यस्तशरणातिथिम् ॥ १४ ॥

मातामहेन संदिष्टमेतदाकर्ण्य भूपतिः । D 965
जनसंक्षयकारुण्यात्तं प्रसादयितुं ययौ ॥ १५ ॥
संधिविग्रहसंनद्धः स नौभिर्दूरसैनिकः ।
मातामहपुरं प्राप गङ्गापुलिनसंश्रयम् ॥ १६ ॥
सामात्यभृत्यवर्गस्य तस्य संकल्पलीलया ।
उद्भूतं दिव्यमाहारं दृष्ट्वा मेरुर्महीपतिः ॥ १७ ॥
देवोऽयमिति तं मत्वा स्वयं गत्वा तदन्तिकम् ।
कण्ठग्रहोच्छलद्बाष्पः सर्वरत्नैरपूजयत् ॥ १८ ॥
प्रणयान्मानितस्तेन स गत्वा नगरीं निजाम् ।
दिव्यभोगोद्भवोदग्रं जम्बुद्वीपजनं व्यधात् ॥ १९ ॥
तच्चरितं जिनः पृष्टो भिक्षुभिः संपदं प्रति ।
सर्वज्ञोऽप्यवदत्तेषु तस्य संपत्तिकारणम् ॥ २० ॥
वाराणस्यां स विप्रोऽभून्मूलिकाख्योऽन्यजन्मनि ।
तेन प्रत्येकबुद्धस्य रोगग्लानस्य भेषजम् ॥ २१ ॥
स्वास्थ्यावधि कृतं चित्रच्छत्रं च धृतमातपे ।
तत्पुण्याच्छत्रवान् राजा सोऽभूद्दिव्योपभोगभाक् ॥ २२ ॥
प्रियपिण्डोऽहमेवासौ देवदत्तश्च दुर्मतिः । D 967
श्रुत्वेत्युक्तं भगवता भिक्षवो विस्मयं ययुः ॥ २३ ॥

यद्विस्मयावहमहो त्रिभवप्रभाव-
दिव्योपभोगसुभगं भुवनाधिपत्यम् ।
दीर्घामयाश्रयघनव्यसनावसन्न-
संवाहनोद्धरणपुण्यविजृम्भितं तत् ॥ २४ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
प्रियपिण्डावदानं त्र्यधिकशततमः पल्लवः ॥



D 969 ## १०४ शशकावदानम् ।

सन्मार्गसंभृतमनोरथसिद्धिसूतः
श्लाघ्यः सतां सुकृतनिर्मलतीर्थ्यपूतः ।
संसारघोरमकराकरसेतुभूतः
सत्सङ्ग एव शुभसर्गनिसर्गहेतुः ॥ १ ॥
श्रावस्त्यां कमलाख्यस्य पुत्रं गृहपतेः पुरा ।
हंसाभिधं भगवता यत्नेनार्हत्पदे धृतम् ॥ २ ॥
दृष्ट्वा प्रसादविशदैः करुणालोकनामृतैः ।
अनुग्रहाग्रहव्यग्रं तमभाषन्त भिक्षवः ॥ ३ ॥
भगवन् कुलपुत्रोऽयं प्रव्रज्यापि गृहोन्मुखः ।
बभूव वासनाशेषादशान्तविषयस्मृतिः ॥ ४ ॥
स प्रयत्नेन भवता विनयं विनियोजितः ।
अहो महानुग्रहेण संमोहरहितः कृतः ॥ ५ ॥
उक्ते हर्षामृतासिक्तैर्विस्मितैरिति भिक्षुभिः ।
तानभाषत सर्वज्ञो भगवान् भक्तवत्सलः ॥ ६ ॥
D 971 पूर्वमप्येष कुशलं मया यत्नान्निषेवितः ।
तपोवने मुनिरसौ सुव्रताख्यः पुराभवत् ॥ ७ ॥
तस्मिन् काले स्फुटालापः शशकोऽहं तदाश्रमे ।
तत्कथाजातविश्रम्भः प्रीतिमानवसं सदा ॥ ८ ॥
अथावृष्टिहते काले शुष्कमूलफलोदके ।
सोऽभून्मुनिर्वनोद्वेगाद्ग्रामान्तगमनोन्मुखः ॥ ९ ॥
स मया प्रणयेनोक्तः साधो तव विपश्चितः ।
तपोवनपरित्यागः कथं युक्तस्तपोधन ॥ १० ॥
वियोगविविधोद्वेगनिमग्नजनसंकुलाः ।
गृहमोहग्रहायाससंग्रहा ग्रामभूमयः ॥ ११ ॥
स्त्रीशृङ्खलामुखरदुःसहपुत्रपाश-
भृत्याकुला निबिडबान्धवबन्धजालम् ।
त्यक्तं पुनः स्पृशति कः खलसंघघोरं
धीमान् गृहं कुमतिबन्धमहान्धकारम् ॥ १२ ॥
विदधति मुहुर्मोहं नानावियोगघनाः शुचो
द्रविणलवणाहारैस्तृष्णा परं परिवर्धते ।
D 973 विषमविषयस्नेहाभ्यासैर्जडीकृतचेतसां
व्रजति कुशलं क्लेशक्षेत्रे क्षये वसतां क्षयम् ॥ १३ ॥

न धीर्मदविघूर्णिता विषयभोगरागासवै-
र्न बाष्पकलिलाः दृशः प्रियवियोगधूमोद्गमैः ।
न दाहनिवहव्यथाः कलहकोपतापोद्भवै-
र्भवन्ति विजने वने शमविशेषसंतोषिणाम् ॥ १४ ॥
ग्रामस्पृहा वनोद्वेगाद्ग्रामोद्वेगाद्वनस्मृतिः ।
पुंसां प्रशमवैमुख्यात्प्रसङ्गेनैव जायते ॥ १५ ॥
ग्रामे नियमवामे त्वं मा कामेन मतिं कृथाः ।
प्रागेव विषयस्निग्धान् बध्नाति ग्रामसंगतिः ॥ १६ ॥
इहैव तव कालेन फललाभो भविष्यति ।
शुद्धैः संप्रति मन्मांसैः क्रियतां प्राणधारणम् ॥ १७ ॥
इत्युक्त्वाहं समासन्ने वह्नौ निपतितः स्वयम् ।
स च तूर्णं समुत्क्षिप्य परिष्वज्य जगाद माम् ॥ १८ ॥
किमेतत्साहसं तीव्रं विरुद्धं भवता कृतम् ।
न गच्छामि वनादस्मात् त्वत्प्रीतिर्लभ्यते कुतः ॥ १९ ॥
प्रणयादिति तेनोक्ते व्योम्नि चालोकिते मया ।
पपात वृष्टिः सहसा सफला भूरभूद्यया ॥ २० ॥
पञ्चाभिज्ञत्वमासाद्य स ततः सादरो मुनिः ।
मामूचे शुद्धसत्त्वेन किमनेन महीयसे ॥ २१ ॥
प्रणयादिति तेनाहं पृष्टस्तमवदं ततः । D 975
जनेन चरितं नाहं सम्यक्संबोधिमर्थये ॥ २२ ॥
संतारणाय जगतां जिनः स्यामन्यजन्मनि ।
मयेत्युक्ते स मामाह भविष्यसि तथागतः ॥ २३ ॥
यदा तु सम्यक्संबुद्धः सर्वज्ञस्त्वं भविष्यसि ।
तदा ममान्यदेहस्य कर्तव्योऽनुग्रहस्त्वया ॥ २४ ॥
एतत्तस्य वचः साधोः स्नेहादङ्गीकृतं मया ।
संप्राप्तः शशकः सोऽहमस्मिन् जन्मनि बुद्धताम् ॥ २५ ॥
सुव्रताख्यो मुनिः सोऽयं हंसो गृहपतेः सुतः ।
पूर्वस्मृत्यैव यत्नेन प्रापितः कुशलं मया ॥ २६ ॥
प्रपन्नवत्सलेनेति कथितं सर्वदर्शिना ।
जिनेन निजवृत्तान्तं श्रुत्वा ते विस्मयं ययुः ॥ २७ ॥ D 977
अविकलफलप्रसवः शुभचरितैः सहवासः ।
दिनपतिपरिचयनिचितरुचेः श्रीरसमा हिमभासः ॥ २८ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
शशकावदानं चतुरधिकशततमः पल्लवः ॥

D 979 # १०५ रैवतावदानम् ।

क्रौर्येण ये द्विरसनाः शुचिचेष्टितानां
मिथ्यापवादविषयं विषमुत्सृजन्ति ।
ते पापशापपरितापपरंपरार्ताः
तीव्रव्यलीकतिमिरं विवरं विशन्ति ॥ १ ॥
पुरा रैवतको नाम काश्मीरेषु शुचिव्रतः ।
भिक्षुः शैलविहारेऽभूत्सर्वभूतदयाश्रयः ॥ २ ॥
तरुत्वचः कषायेण स कदाचिद् घटान्तरे ।
विविक्तकाननोद्देशे चक्रे चीवररञ्जनम् ॥ ३ ॥
अत्रान्तरे धेनुवत्सान् नष्टानन्वेष्टुमाययौ ।
ब्राह्मणः पिशुनो नाम गोभक्ष्यजनशङ्कितः ॥ ४ ॥
स दूराच्चीवरक्वाथपाके वह्निसमुद्गतम् ।
पर्वते धूममालोक्य वत्सपाकममन्यत ॥ ५ ॥
ततः शैलं समारुह्य सहितः शस्त्रपाणिभिः ।
अभ्येत्य रैवतं भिक्षुं पप्रच्छ विनयाद्द्विजः ॥ ६ ॥
D 981 किमेतदार्य क्रियते पृष्टस्तेनेति गौरवात् ।
तत्र चीवररागोऽयमिति तं रैवतोऽब्रवीत् ॥ ७ ॥
अस्मिन्नवसरे तस्य पूर्वकर्मविपाकतः ।
गोमांसरक्तसलिलः स पाकः समपद्यत ॥ ८ ॥
सुखं दुःखत्वमायाति शुक्लमप्येति कालताम् ।
विधौ विधुरतां याते धर्मोऽप्यायात्यधर्मताम् ॥ ९ ॥
मिथ्यापापप्रकटनं जनकोपः पदच्युतिः ।
अपुण्यपरिपाकाणामेतत्प्रत्यक्षलक्षणम् ॥ १० ॥
दोषः समुन्मिषति यात्यगुणः प्रकाशं
कार्यं विपर्ययमुपैति विशीर्यते धीः ।
पुंसां पुरा विहितदुष्कृतपाककाले
के के न नाम निपतन्ति महाभिघाताः ॥ ११ ॥
विरुद्धामिषगन्धेन रुधिरेण च शङ्कितः ।
सोऽपश्यद्ब्राह्मणः कुम्भं चीवरं मांसतां गतम् ॥ १२ ॥
प्रत्यक्षं दोषमालोक्य स क्रोधविकृताननः ।
तमभाषत निर्भर्त्स्य तीव्रवैशसकम्पितः ॥ १३ ॥
D 983 अहो बत सदाचारः स्थितोऽयं विजने वने ।
यस्येदृशानि कर्माणि न कश्चिदिह पश्यति ॥ १४ ॥

प्रव्रज्यारञ्जितः कायः क्रिया म्लेच्छजनोचिता ।
जानाति च्छन्नपापानां कः कूटव्रतशान्तताम् ॥ १५ ॥
इत्युक्ते तेन साक्षेपं रैवतः समचिन्तयत् ।
दोषे प्रत्यक्षलक्ष्येऽस्मिन् किं ब्रवीमि निरुत्तरः ॥ १६ ॥
मम दैवोपघातोऽयमित्युक्ते कोऽनुमन्यते ।
हास्यायतनतामेति प्रत्यक्षापह्नवी जनः ॥ १७ ॥
उपस्थितं सहे सर्वं मौनमालम्ब्य केवलम् ।
अयं मे निष्प्रतीकारः सलिलादग्निरुत्थितः ॥ १८ ॥
दोषे गुणातिशयमाशु गुणेऽपि दोषं
पीयूषधाम्नि विषमप्यमृतं विषे च ।
संदर्शयत्यनिशमद्भुतरूपमेव
कालेन्द्रजालिकवधूर्भवितव्यतेयम् ॥ १९ ॥
इति चिन्तयतस्तस्य मौनात्क्रुद्धोऽधिकं द्विजः ।
मूर्ध्नि पापमिव स्थूलं लगुडं समपातयत् ॥ २० ॥
तं बद्ध्वा भूपतिसभां नीत्वा रक्ताक्तमग्रजः । D 985
तद्वत्समांसं संदर्श्य चक्रे कारागृहातिथिम् ॥ २१ ॥
निर्दोषः क्लेशमश्नाति जृम्भते गुप्तपातकः ।
कः कस्य शुद्धिं जानाति चित्राकारेष्वसाक्षिषु ॥ २२ ॥
निबद्धे बन्धनागारे तस्मिन् कालेन विस्मृतम् ।
प्राप्य वत्सान् द्विजः किंचिन्नोचे दौर्जन्यलज्जया ॥ २३ ॥
अथ द्वादशभिर्वर्षैर्व्योमवाणीविबोधितः ।
मुमोच बन्धनाद्भिक्षुं तच्छिष्यस्मारितो नृपः ॥ २४ ॥
कारागारात्कृशाकारः कङ्काल इव धूसरः ।
ऊर्ध्वकेशो विवसनः स प्रेत इव निर्ययौ ॥ २५ ॥
अहो ग्रावाग्रलिखिता निश्चला कर्मसंततिः ।
प्राप्ताभिज्ञोऽपि यत्प्राप क्रूरक्लेशकदर्थनाम् ॥ २६ ॥
तीव्रानुशयसंतप्तस्तं दृष्ट्वानन्दभूपतिः ।
निनिन्द मन्दपुण्यत्वं प्रमादोद्भूतमात्मनः ॥ २७ ॥
स भिक्षुपादपतितः प्रसाद्याच्छाद्य वाससा ।
उवाचाज्ञानजं दोषं ममार्य क्षन्तुमर्हसि ॥ २८ ॥
त एव वत्सकाः सर्वे लब्धास्तेन द्विजन्मना । D 987
त्वद्बन्धनं तु पापस्य मोहेन मम विस्मृतम् ॥ २९ ॥

परिज्ञातः सभायां त्वं मन्दभाग्येन केनचित्।
दण्डः पतति शुद्धेषु प्राप्तपापे महीपतौ ॥ ३० ॥
इत्युक्ते क्षितिनाथेन क्षान्तिप्रक्षालिताशयः।
तं रैवतोऽवदन्मन्युर्मम राजन्न विद्यते ॥ ३१ ॥
न त्वयापकृतं किंचिद्विपुलक्लेशपातिना।
तन्ममोपनतं पाके स्वकर्मसदृशं फलम् ॥ ३२ ॥
यत्सोत्कण्ठतयेव सर्वविपदः कुर्वन्ति कण्ठग्रहं
सर्वाङ्गप्रसभोपभोगसुभगाः क्लिश्यन्ति यत्संपदः।
यत्स्वाच्छन्द्यसुखास्पदं विहरणं दीर्घं च यद्बन्धनं
तत्पुंसां निजकर्मपाकशबलं संसारवल्लीफलम् ॥ ३३ ॥
इति ब्रुवाणं नृपतिस्तमवोचत्कुतूहलात्।
तवापि सुमते कस्य फलमेतत्कुकर्मणः ॥ ३४ ॥
सोऽब्रवीदभवं पूर्वं वाराणस्यां कुठाभिधः।
गोचौरः क्रूरचरितस्तन्मांसविहिताशनः ॥ ३५ ॥
D 989 कदाचिद्गोविघातात्तन्मांसं मां भयविद्रुतम्।
गोरक्षिणः सानुचराः कोपात्समभिदुद्रुवुः ॥ ३६ ॥
तत्समीपे विनिक्षिप्य प्रत्यक्षपिशितं मया।
प्रत्येकबुद्धश्चौरोऽयमिति तेषां प्रदर्शितः ॥ ३७ ॥
सर्वैर्गोवधपापोग्रक्रोधैः पिशितदर्शनात्।
वध्योऽयमिति यत्नेन निबद्धो बन्धने धृतः ॥ ३८ ॥
पश्चात्तापात्तथाभ्येत्य मया द्वादशभिर्दिनैः।
कृतपापोऽहमित्युक्त्वा कारागारात्स मोचितः ॥ ३९ ॥
तत्पापपाकं नरकेष्वनुभूय मया चिरम्।
जन्मन्यस्मिन्नपि प्राप्तः क्लेशो द्वादशवार्षिकः ॥ ४० ॥
इत्युक्त्वा नृपमामन्त्र्य प्रणामाप्तसुरासुराम्।
ऋद्धिं प्रदर्श्य प्रययौ रैवतः सह भिक्षुभिः ॥ ४१ ॥
असत्यदोषेण विशेषयुक्त्या
प्रत्यक्षलक्ष्मीकृतलक्षणेन।
अलंकृतः साधुजनः खलेन
किं वक्ति विक्रीत इवान्यदेशे ॥ ४२ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
रैवतावदानं पञ्चोत्तरशततमः पल्लवः ॥

## १०६ कनकवर्मावदानम् । D 991

विजिगीषव इव तरसा दुःसहसंसाररिपुबलं हत्वा ।
आसादयन्ति धीराः प्राज्यं सद्धर्मसाम्राज्यम् ॥ १ ॥

यदा सूत्रं भगवता व्याख्यातं नगरोपमम् ।
ततोऽस्य कौतुकात्पृष्टो भिक्षुभिस्तानभाषत ॥ २ ॥

अभूत्कनकवत्याख्या जिनस्वर्गप्रभा पुरी ।
तस्यामासीन्नरपतिर्द्युतिमान् कनकाभिधः ॥ ३ ॥

तस्य प्रवृद्धमानस्य प्रीत्यैकायतनं परम् ।
पुत्रः कनकवर्माभूत्सुता च कनकप्रभा ॥ ४ ॥

कालेन यौवनारूढा स्तनस्तबकशोभिनी ।
लतेव सा बभौ कान्ता वसन्तलतिकाकृतिः ॥ ५ ॥

बालप्रीत्या परिचितस्तां मन्त्रितनयो युवा ।
कामसाराभिधः स्वैरमकामयत कामुकः ॥ ६ ॥

प्रवृत्ते पुष्पसमये धैर्यहारिणि यौवने । D 993
भृङ्गः प्रसङ्गसंचारी मञ्जर्याः केन वार्यते ॥ ७ ॥

तनयां नष्टचरितां ज्ञात्वा मानी महीपतिः ।
तुल्यं विवेश विषमं शोकक्रोधानलद्वयम् ॥ ८ ॥

कन्याविहीनानि कुलानि पुण्यै-
र्भवन्ति मान्यान्यभिमानभाजाम् ।
अयाच्ययाच्ञैव सुखं क्षणेन
कुलं हि कन्या मलिनीकरोति ॥ ९ ॥

शासनादथ भूभर्तुः कन्या मन्त्रिसुतश्च सः ।
आकृष्य वध्यवसुधां नीतौ शासनकारिभिः ॥ १० ॥

याचमानौ परित्राणं ततस्तौ करुणाकुलः ।
राजपुत्रः स्वनगरान्निनाय नगरं परम् ॥ ११ ॥

ततः क्रुद्धः क्षितिपतिं पुत्रं शत्रुमिवोत्कटम् ।
निष्कास्य निष्कृपश्चक्रे प्रत्यन्तगहनातिथिम् ॥ १२ ॥

पित्रा निरस्तः सत्त्वाब्धिर्भ्रान्त्वा तीर्थवनावनौ ।
रम्योद्यानाब्जिनीकान्तं पुरं प्राप स निर्जनम् ॥ १३ ॥

ददर्शैकाकिनीं तत्र भगिनीं कनकप्रभाम् । D 995
खिन्नां जनवियोगेन नगरस्येव देवताम् ॥ १४ ॥

सा भ्रातरं परिज्ञाय प्रीत्या बाष्पाम्बुवर्षिणी ।
शून्यताकारणं तेन पृष्टा तं प्रत्यभाषत ॥ १५ ॥
भ्रातर्निर्जनतां नीतं पुरमेतत्प्रहारिभिः ।
षष्टिसंख्यैर्महानागैर्यक्षैर्न्यग्रोधसंश्रयैः ॥ १६ ॥
संप्रत्यस्मिन् क्षये शेषावहं मन्त्रिसुतश्च सः ।
अधुना त्वद्भुजबलप्रभावस्त्राणमेव नौ ॥ १७ ॥
इति स्वसुर्वचः श्रुत्वा राजपुत्रः समागतः ।
एकयक्षावशेषां तां चक्रे यक्षावलीं शरैः ॥ १८ ॥
स यक्षः कोटरो नाम तमेव शरणं गतः ।
प्रपन्नदासभावोऽस्य विदधे जयघोषणाम् ॥ १९ ॥
पुनः पौरैः समाकीर्णे पुरे तस्मिन्नविप्लवम् ।
नृपं राजसुतश्चक्रे मन्त्रिसूनुं स्वसुः पतिम् ॥ २० ॥
पुत्रप्रभावं साश्चर्यः श्रुत्वा चारैर्निवेदितम् ।
कनकः क्ष्मापतिर्लेखप्रणयेनानिनाय तम् ॥ २१ ॥
D 997 स बद्धमुकुटः पित्रा युवराजः प्रतापवान् ।
वशे वश्येन्द्रियश्चक्रे चतुर्द्वीपवतीं महीम् ॥ २२ ॥
श्रीमान् राजकुमारोऽसावहमेव तदाभवम् ।
संसारस्येव यश्चक्रे शत्रुवर्गस्य संक्षयम् ॥ २३ ॥
उत्साहादुपविश्य सत्त्वरुचिरे सद्धर्मसिंहासने
शीलोष्णीषवता विवेकसलिलप्राप्ताभिषेकश्रिया ।
हत्वा शत्रुपरंपरां पृथुभवक्लेशावलीमक्षयां
सा लब्धप्रशमेन विश्वजयिना निर्वाणभूर्भुज्यते ॥ २४ ॥
नगरोपममलतरं निर्वाणं यक्षसंनिभान् शत्रून् ।
क्लेशानक्षपयित्वाप्तं कैश्चिद्भगवानुक्त्वेति विरराम ॥ २५ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
कनकवर्मावदानं षडधिकशततमः पल्लवः ॥



## १०७ शुद्धोदनावदानम् । D 999

गुणे स्पृहा न द्रविणे कदाचित्
योगेऽभियोगः प्रसभं न भोगे ।
पुण्योज्ज्वलानां विशदाशयानां
रजोविरागाभिरतिर्न कामे ॥ १ ॥

पुण्यप्रभावं भगवान् पुण्यशीलस्तथागतः ।
बभाषे भिक्षुभिः पृष्टस्तत्पुण्यादरविस्मितैः ॥ २ ॥
वाराणस्यां महीं राज्ञि ब्रह्मदत्ते प्रशासति ।
शुद्धोदनो गृहपतिर्बभूव धनदोपमः ॥ ३ ॥
तस्यार्थिकल्पवृक्षस्य समुद्रगमनार्जितैः ।
मणिमौक्तिकसंभारैः परिपूर्णमभूद्गृहम् ॥ ४ ॥
रत्नद्वीपान्तरायातः स कदाचिन्महीपतिम् ।
द्रष्टुं ययौ समादाय मुक्ताहारमुपायनम् ॥ ५ ॥
प्रत्युद्गतेन प्रणयान्मानितः स महीभुजा ।
तारहारं ददौ तस्मै लीलाहासमिव श्रियः ॥ ६ ॥ D 1001
स रश्मिसूत्रसंसक्ततारकानिकरोपमः ।
भूमिभर्तुर्गुणी हारश्चकार हृदयग्रहम् ॥ ७ ॥
अस्मिन्नवसरे राज्ञः सुता बालसरस्वती ।
सुभाषितं भव्यगिरा हर्म्योत्सङ्गगता जगौ ॥ ८ ॥
सूक्तं गृहपतिः श्रुत्वा श्रवणामृतमीप्सितम् ।
पुलकाङ्कुरिताकारस्तन्मयः स्वगृहं ययौ ॥ ९ ॥
त्यक्ताहारविहारोऽथ सुभाषितकृताशयः ।
निद्रादरिद्रः स्वगृहे स चिरं समचिन्तयत् ॥ १० ॥
अहो नु राजपुत्र्या तद्गीतं साधु सुभाषितम् ।
अपर्यालोचितेनापि येनामृतमिवार्पितम् ॥ ११ ॥
मया द्वादशभिर्वर्षैर्विपुलो रत्नसंचयः ।
स प्राप्तः सूक्तरत्नं तु न कुतश्चिदुपार्जितम् ॥ १२ ॥
रत्नैः किमश्मगुरुभिः प्रयत्नशतसंचितैः ।
सन्मार्गालोकने रत्नं तद्विधं तु सुभाषितम् ॥ १३ ॥
इति संचिन्त्य पुरुषं विसृज्य नृपमन्दिरम् ।
स चक्रे राजदुहितुः सूक्तयाच्ञामयाचकः ॥ १४ ॥
सा बभाषे स्मितमुखी सूक्तं मूल्येन लभ्यते । D 1003
तस्यार्घतुल्यं द्रविणं दीयतां यदि शक्यते ॥ १५ ॥
यावद्द्वादशभिर्वर्षैस्तेन तद्रत्नसंचयः ।
विहितः सत्यशीलेन पण्यार्होऽसौ समर्प्यताम् ॥ १६ ॥

एतद्भूपालदुहितुः संदेशं दूतभाषितम्।
श्रुत्वा गृहपतिः सर्वं रत्नान्यादाय सादरः ॥ १७ ॥
स्वयं राजगृहं गत्वा दत्वास्यै तृणलीलया।
सूक्तरत्नं तदादाय पपाठोत्कण्ठितो मुहुः ॥ १८ ॥
यद्यत्किंचित्सुखमनुपमं बाह्यमाभ्यन्तरं वा
यो यः सत्त्वप्रसवविलसद्विस्मयः सिद्धियोगः।
ये ये तृष्णाप्रशमविमलाः संततानन्दलाभाः
पाकोत्सिक्तः समफलभरः पुण्यकल्पद्रुमस्य ॥ १९ ॥
औदार्यनिधिना तेन सुरत्नेन सुभाषितम्।
गृहीतं नृपतिः श्रुत्वा पप्रच्छ तं सविस्मयः ॥ २० ॥
रत्नानि कस्मादुत्सृज्य सूक्तमात्रमिदं त्वया।
गृहीतं बालिकावाक्ये सरलः प्रत्ययी भवान् ॥ २१ ॥
D 1005 पूर्णा सुभाषितैर्भूमिर्धनं कृच्छ्रेण लभ्यते।
न भक्तविरहे भुक्तं सूक्तं शक्तेन केनचित् ॥ २२ ॥
इति श्रुत्वा गृहपतिः स्नेहादुक्तं महीभुजा।
सूक्तेन तेन महता संतुष्टस्तमभाषत ॥ २३ ॥
राजन् किं क्रियते रत्नैर्यत्नरक्षैर्विनाशिभिः।
सर्पाणामिव यैः पुंसां रागद्वेषो विषोपमः ॥ २४ ॥
वैमल्योपचितां रुचिं रचयतः सन्मार्गदीपोपमां
भव्यानां हृदये सुभाषितमणेर्गाढं गुणालम्बिनः।
पाकोत्तीर्णसुवर्णसुन्दरपदप्राप्तप्रबन्धस्थितेः
मूल्यं सागरमेखला वसुमती पादांशकेऽप्यल्पकम् ॥ २५ ॥
इति श्रीमान् गृहपतिर्निगद्य कुशलोद्यतः।
सुवर्णपत्रलिखितं सूक्तं दिक्षु न्यवेशयत् ॥ २६ ॥
शुद्धोदनो गृहपतिः सोऽहमेव तदाभवम्।
सूक्तैः पुण्योपदेशार्थे सर्वस्वेनापि सादरः ॥ २७ ॥
शारिपुत्रोऽप्ययं भिक्षुः सा भूपतिसुताभवत्।
इत्युवाचाखिलजगत्कुशलाय तथागतः ॥ २८ ॥
D 1007 आद्यः कन्दः कुशलनलिनीमूलबन्धप्रसूते-
र्नानासंपन्नवनवलतासंभवोद्यानभूमिः।
तृष्णातापप्रशमनहिमस्मेरगङ्गाप्रवाहः
सन्मार्गाग्रप्रकटनपटुः पुण्यमेव प्रकाशः ॥ २९ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां
शुद्धोदनावदानं सप्तोत्तरशततमः पल्लवः ॥

## १०८ जीमूतवाहनावदानम् । D 1009

उपक्रमः ।

एषा जिनेन्द्रविहितोरुविहारवर्य-
चैत्याङ्गणे कनकचित्रगुहागृहेषु ।
चित्रामृतप्रचितलेख्यमयी बभूव
बुद्धावदानविविधाद्भुतकल्पवल्ली ॥ १ ॥

सैवेयं कुशलाय पूर्णसुकृते चित्ते विहारे सतां
क्षेमेन्द्रेण विशेषचित्ररचनारम्यावदानावली ।
आकल्पप्रतिमासहस्रविकसत्पुण्यप्रबन्धोज्ज्वला
मा भूत्तद्विरहाकुलं जगदिति व्यक्तं प्रतिष्ठापिता ॥ २ ॥

सप्तोत्तरशतमेतत्तेन कृतं बोधिसत्त्वचरितानाम् ।
मङ्गलसंख्यापूरणमेकं कार्यं प्रयत्नेन ॥ ३ ॥

सोमेन्द्रनामा तनयोऽथ तस्य
कविर्निरुद्धापरनामधेयः ।
अस्मिन् जिनोदारकथाप्रबन्धे
संपूरयिष्यत्यवदानशेषम् ॥ ४ ॥

बन्धः केरलकामिनीकुचभराकारः परं संहतः D 1011
काञ्चीकान्तकपोलकोमलतरः कोऽपि प्रसादोदयः ।
कार्णाटीनयनच्छटापरिचिता कर्णान्तरासङ्गिनी
भङ्गिर्यस्य तरंगिणी रसनिधेर्वन्द्यः स सूक्तोदधिः ॥ ५ ॥

ॐकारात्कुटिलत्वमेव परमं यैः शिक्षितं लीलया
यस्य[येषां] स्वस्तिपदं कदाचिदपि न स्पष्टं मुखान्निर्गतम् ।
क्रोधाध्माततया विवर्णवदनास्तीव्रापराधोपमं
ते विद्यानिधयः कथं पृथुकथं काव्यं क्षमन्ते खलाः ॥ ६ ॥

कृत्वेमामवदानकल्पलतिकां क्षेमेन्द्रनामा कविः
सद्धर्मप्रणिधानमेतदधुना धत्ते धिया धीधनः ।
पुण्यं यत्समुपार्जितं जिनगुणाख्यानप्रबन्धान्मया
भूयात्तेन समस्तसत्त्वकुशले नित्योद्यतोऽयं जनः ॥ ७ ॥

संसारोरुपरिश्रमस्य दधतः कामासवक्षीबता-
रोहं मोहतमोनिमीलितदृशः सुप्तस्य लुप्तस्मृतेः ।
संनद्धं जगतः प्रबोधनविधौ निःशेषदोषापहं D 1013
भास्वन्तं भगवन्तमेव सततं बुद्धं प्रबुद्धं नुमः ॥ ८ ॥

आनन्दबन्धुमसकृत्पृथुमानसानां
सूक्तांशुभिर्विहितसर्वसुखोपदेशम्।
क्षेमेन्द्रमुज्ज्वलनिजाभिजनाब्धिचन्द्रं
कीर्तिप्रकाशजनकं जनकं नमामि ॥ ९ ॥

वाक्पाकपावनविधानजिनावदान-
निर्माणपुण्यकलनाकुशलाभियोगे।
अस्मिन् कृतः सुकृतिना दिशता नियोगं
संपूरणाय गुरुणा मम संविभागः ॥ १० ॥

येषां सुवर्णप्रतिमाप्रतान-
जिनावदानान्यभवन् गुहासु।
संसक्तनेत्रामृतचित्रचित्राः
कालेन ते तेऽपि गता विहाराः ॥ ११ ॥

सरस्वतीतूलिकया विचित्र-
वर्णक्रमैः संकलितावदानः।
तातेन योऽयं विहितो महार्थः
D 1015 सन्नन्दनः पुण्यमयो विहारः ॥ १२ ॥

न तस्य नाशोऽस्ति युगक्षयेऽपि
जलानलोल्लासपरिप्लवेन।
दिक्षु प्रतिष्ठापितपुष्पपाली-
स्थिरप्रसक्तप्रतिमागणस्य ॥ १३ ॥

तस्मिन् मयाप्यक्षयपुण्यलोभा-
देकावदानप्रतिमार्पितेयम्।
महात्मनां प्रौढपदानुसारी
स्वल्पोऽप्ययत्नेन महत्त्वमेति ॥ १४ ॥

माधुर्यधुर्यममृतं श्रुतिपात्रपेय-
मामोदसद्ममुखपद्मपदे ध्वनन्तीम्।
भृङ्गाङ्गनामिव पितुः प्रणिपत्य वाणीं
D 1017 संपूरयामि पृथुकाव्यविशेषशेषम् ॥ १५ ॥

* * * * * *

कान्तां नूतनसंगमोत्सववतीं दिव्यप्रभावां श्रियं
तारुण्याभरणोपभोगलहरीं त्यक्त्वा तृणक्रीडया ।
प्राणत्राणविधौ परस्य कृपया कुर्वन्ति ये सादरा
निर्व्याजं निजदेहदानमचलास्तानेव वन्दामहे ॥ १ ॥
बभूव काञ्चनपुरे श्रीमान् विद्याधरेश्वरः ।
जीमूतकेतुर्जीमूत इव तापहरोऽर्थिनाम् ॥ २ ॥
यस्य कल्पद्रुमोद्भूताः सदा नवनवाः श्रियः ।
चकाशिरे यशःपुष्पाः पुण्यसौरभनिर्भराः ॥ ३ ॥
जीमूतवाहनस्तस्य पुत्रश्चन्द्र इवोदधेः ।
अभूदत्युग्रपुण्यानां प्रत्यग्र इव संचयः ॥ ४ ॥
गुणवान् विनयेनेव त्यागेनेव विभूतिमान् ।
स बभौ तेन पुत्रेण सुकृतेनेव सज्जनः ॥ ५ ॥
कल्पद्रुमं ससाम्राज्यं पुत्राय प्रतिपाद्य सः ।
तपसे शान्तिनिलयं मलयं प्रययौ नृपः ॥ ६ ॥
जायासखे श्रियं त्यक्त्वा याते ताते तपोवनम् । D 1019
जीमूतवाहनः प्राप्तविभवः समचिन्तयत् ॥ ७ ॥
गुरुसेवावियुक्तस्य मम निःसुखतां गता ।
इयं श्रीर्नेत्रहीनस्य चित्रशालेव निष्फला ॥ ८ ॥
तातस्य पादपतने नखरश्मिमाला-
विभ्राजमानमुकुटस्य यथा पुराभूत् ।
तच्छासनश्रवणकुण्डलमण्डितस्य
नो चक्रवर्तिविभवेऽद्य तथा मम श्रीः ॥ ९ ॥
इति संचिन्त्य स निजं कृत्वा कनकवर्षिणम् ।
सर्वलोकोपकाराय संनद्धं कल्पपादपम् ॥ १० ॥
प्राज्यं साम्राज्यमुत्सृज्य प्रययौ पितुराश्रमम् ।
त्रैलोक्यसारमैश्वर्यं तृणं विपुलचेतसाम् ॥ ११ ॥
तस्मिन् साम्राज्यमुत्सृज्य प्रयाते मलयाचलम् ।
हेम्ना कल्पद्रुमः पृथ्वीं परिपूर्य दिवं ययौ ॥ १२ ॥
जीमूतवाहनः प्राप्य गिरिं श्रीखण्डमण्डनम् ।
वियोगतापं तत्याज पित्रोः पादाब्जसेवया ॥ १३ ॥
अत्रान्तरे चन्दनवल्लरीणां
दिदेश बालानिललोलितानाम् ।
उल्लासिनीनामभिलाषदीक्षां D. 1021
जृम्भाजुषां कामसुहृद्वसन्तः ॥ १४ ॥

अदृक्षिणः प्रोषितकामिनीनां
ववौ मुहुर्दक्षिणमातरिश्वा।
जगज्जयायेव झषध्वजेन
वायव्यमस्त्रं सहसा प्रयुक्तम्॥ १५॥
आसूत्रनैः षट्पदमण्डलानां
घनप्रसूनैर्गुरुतां प्रयाताः।
चूतद्रुमाश्चक्रुरभिन्नमुद्रा-
बन्धेन यूनामभिलाषदीक्षाम्॥ १६॥
वसन्तलक्ष्मीश्रवणावतंसा-
श्चक्राशिरे शैलतटेष्वशोकाः।
पादप्रहारैरिव नागरीणां
संक्रान्तरागा नवपल्लवेषु॥ १७॥
धन्यस्य कान्तावदनासवेन
ममैव रम्यः स्मरदोहदोऽयम्।
इतीव जाता वकुलद्रुमस्य
हर्षस्मितश्रीः कुसुमच्छलेन॥ १८॥
D 1023 मानं समुत्सृज्य विहाय मौनं
पादप्रणामेन मनस्विनीभिः।
प्रसाद्यमानं दयितं विलोक्य
जहास पुष्पैरिव सिन्दुवारः॥ १९॥
वसन्तसिंहस्य पलाशपाली
बभौ स्फुरत्केसरभारभाजः।
मनस्विनीमानगजावघात-
रक्ता च सिक्ता नखरावलीव॥ २०॥
कर्णे क्वणत्कोकिलकामिनीभिः
स्पर्शे शिरीषैर्दृशि कर्णिकारैः।
घ्राणे सरत्केसररेणुपूरै-
र्ववर्ष हर्षं कुसुमोत्करश्रीः॥ २१॥
तस्मिन् मधुक्षीबविघूर्णमान-
भृङ्गाङ्गनाविभ्रमभोगकाले।
उत्फुल्लवल्लीषु वनस्थलीषु
चचार विद्याधरराजसूनुः॥ २२॥

स तत्र हेमप्रतिबद्धधाम्नि
सिद्धप्रतिष्ठापितरत्नमूर्तिम् ।
अभ्यर्च्य गौरीमुपवीणयन्तीं D 1025
ददर्श कन्यां कलिकामिवेन्दोः ॥ २३ ॥
गौर्याः समाराधनसंविधान-
बद्धस्थितिं मन्मथजीवनाय ।
विलोक्य तां कामवधूमिवान्यां
जीमूतवाहः पृथुविस्मयोऽभूत् ॥ २४ ॥
शनैरथाङ्कादवतार्य वीणां
गीतावसाने हरिणायताक्षी ।
लज्जानता त्यक्तशरस्मराभं
ददर्श विद्याधरराजपुत्रम् ॥ २५ ॥
परस्परालोकनविभ्रमेण
नेत्रांशुशोभाभरणोऽभिलाषः ।
गतागतानीव तयोश्चकार
मध्ये मनःसंधिनिबद्धदूतः ॥ २६ ॥
सा कामपद्माकरराजहंसी
सपक्षपाता नवदर्शनेऽपि ।
जन्मान्तराभ्यासरसादिवास्य
स्वस्थं महन्मानसमाविवेश ॥ २७ ॥
शशाङ्करत्नं विमलं शशीव D 1027
कन्याकुलं लक्ष्यमिव स्मरेषुः ।
तस्याः सरागं स विवेश चित्त-
मिन्दिन्दिरः फुल्लमिवारविन्दम् ॥ २८ ॥
अभ्येत्य तां बालसखीद्वितीयां
लज्जानिमज्जन्नवकामजृम्भाम् ।
विद्याधरेन्दुर्विजने जगाद
धीरोऽपि रूपाद्भुतकृष्यमाणः ॥ २९ ॥
संभाषणेन क्रियते न कस्मात्
सुभ्रु त्वयाभ्यागतसंविभागः ।
बिभर्ति भव्याभिजनानुरूपं
रूपं सदाचारगुणेन शोभाम् ॥ ३० ॥

इदं नवालंकरणं स्मरस्य
तवानवद्याङ्गि शशाङ्ककान्तम्।
दिव्यं वपुः कस्य समुन्नतस्य
वंशस्य मुक्तामणितामवाप्तम्॥ ३१॥
तवाथवा सुन्दरि दर्शनेन
वयं सुधार्द्रेण कृतोपचाराः।
D 1029 करोति लावण्यवितीर्णहर्षा
संभाषणं कस्य शशाङ्कलेखा॥ ३२॥
इदं तु नः कौतुकमात्रमेव
व्रील्यापनेतुं भवती ब्रवीतु।
सत्पक्षपाताभिमुखेन धात्रा
कस्यान्वयस्याभरणीकृतासि॥ ३३॥
ध्यात्वेति विद्याधरशेखरस्य
वचस्तदौत्सुक्यविभागगर्भम्।
ह्रियाभवन्मौनवती यदासौ
तदा सखी मालतिका जगाद॥ ३४॥
कुमार विद्याधरराजवंश-
सुधाब्धिचन्द्रस्त्वमिव प्रसिद्धः।
अस्मत्पुरे सिद्धविलासिनीभि-
र्यद्गीयसे विग्रहवाननङ्गः॥ ३५॥
प्रख्यातकल्पद्रुमदानशीलं
गुणप्रभावाभरणं यशस्ते।
अस्याश्च मित्रावसुनानुजेन
कर्णावतंसीकृतमिन्दुशुभ्रम्॥ ३६॥
D 1031 स त्वं महासत्त्व कथं कथार्हः
प्रौढोपचारक्रिययैवं सख्याः।
भवन्ति लज्जाविजितस्वभावा
विशेषतोऽग्रे महतां हि कन्यकाः॥ ३७॥
सिद्धान्वयाम्भोधिसुधाधिकस्य
विश्वावसोः सिद्धपतेः सुतेयम्।
उद्यानकेलीषु करोति यस्याः
सर्वैव कान्तिः कुसुमावबोधम्॥ ३८॥

नवमलयजवल्लरीव तन्वी
प्रथमसमुद्गतपल्लवारुणोष्ठी ।
इयममृतमयी सुरासुराणां
मलयवती सतताभिलाषभूमिः ॥ ३९ ॥

इति तस्यां ब्रुवाणायां स्थविरोऽभ्येत्य कञ्चुकी ।
त्वरागमनसोच्छ्वासः प्राह सिद्धाधिपात्मजाम् ॥ ४० ॥
कल्याणमित्रावसुना सहितोऽन्तः पुरस्थितः ।
त्वद्विवाहकथासक्तः पिता त्वां द्रष्टुमिच्छति ॥ ४१ ॥
इत्युक्त्वा सहसा तेन सह सख्या सुलोचना । D 1033
जीमूतवाहनन्यस्तमानसा सा शनैर्ययौ ॥ ४२ ॥
तस्यां पश्चात्स्थितसखीकथाव्याजैः पुनः पुनः ।
कान्तं निरीक्षमाणायां व्रजन्त्यामलसैः पदैः ॥ ४३ ॥
तत्पथे दत्तनयनः कुमारः समचिन्तयत् ।
नवोत्कण्ठाश्रयो धृत्या त्यज्यमान इवेर्ष्यया ॥ ४४ ॥
अहो नु मृगशावाक्ष्या व्रजन्त्या पितुरन्तिकम् ।
सरागं तद्भयेनेव मयि न्यासीकृतं मनः ॥ ४५ ॥

श्वासायासनिरोधयत्ननिरता निःशब्दसंवादिनी
सोत्कम्पा विजनेऽपि दर्शनभयादत्यन्तशङ्काकुला ।
तन्वी मन्मथमार्गणाभिपतने वैलक्ष्यलीनस्थितिः
नो जाने कतमेन सा मम पथा चोरी प्रविष्टा मनः ॥ ४६ ॥

चिरं विचिन्त्येति शिलातलस्थः
स मन्मथाज्ञाविषयं प्रयातः ।
संकल्पवर्त्या पुरतोऽभिलिख्य
मुहुर्मृगाक्षीं स्तिमितेक्षणोऽभूत् ॥ ४७ ॥

अथाययौ पुष्पपरागरेणु- D 1035
पूर्णे वने पादसरोजमुद्राः ।
चक्रध्वजाङ्का विजनेऽनुसृत्य
तस्यान्तिकं नर्मसुहृद्वसुबन्धुः ॥ ४८ ॥

स तं विलोक्याभिनवाभिलाष-
विशेषचिन्ताप्रतिबद्धचित्तम् ।
विक्रीतधैर्यं स्मरशासनेन
पप्रच्छ साश्चर्यविकारहेतुम् ॥ ४९ ॥

कोऽयं सखे धैर्यनिधेस्तवापि
नितान्तसंतापपदोपदेष्टा।
चिन्ताश्रयान्निश्चललोचनस्य
विभाव्यते कोऽप्यधृतिप्रकारः ॥ ५० ॥
इति प्रयत्नप्रणयेन पृष्टो
विश्रम्भधाम्ना सुहृदा कुमारः।
तमब्रवीन्निश्वसितानुमेय-
सपक्षपातस्मरबाणपातः ॥ ५१ ॥
सखे सखेदस्य पुराणसर्गे
वर्गे विधेर्नूतनरूपरेखा।
D 1037 दृष्टा मया कान्तिमयीत्र कन्या
सिद्धान्वयाम्भोधिसुधांशुलेखा ॥ ५२ ॥
इन्दोस्तद्वदनारविन्दविलसल्लावण्यलुप्तद्युतेः
सारङ्गस्य च तद्विलोचनरुचिप्रत्यस्तनेत्रश्रियः।
मन्येऽहं समदुःखयोः प्रतिनिशं वैलक्ष्यलीनात्मनो-
श्चिन्तानिश्चल एष शान्तयशसोः संदृश्यते संगमः ॥ ५३ ॥
कर्णावतंसीकृतनेत्रकान्तिः
नवेऽपि संदर्शनविभ्रमे सा।
विभाव्यमानाभिनवाभिलाषं
मयि स्वभावं प्रकटीचकार ॥ ५४ ॥
तस्मिन् कम्पतरंगिणिव्यतिकरं व्याहारिणीं मेखलां
मूकीकृत्य सुसान्त्वितामिव भयाद्वस्त्रप्रदानैर्मुहुः।
लज्जामौनवती विनम्रवदना सा स्रस्तकर्णोत्पलो-
दञ्चचञ्चुरचञ्चरीकविरुतैश्चक्रे मम स्वागतम् ॥ ५५ ॥
वक्त्रे चन्द्रशतानि लोचनयुगे नीलोत्पलानां वनं
बाह्वोर्बालमृणालिकाश्चरणयोरुत्फुल्लपद्माकराः।
निर्माणे परमाणुतां वरतनोः कामेन चेत्प्रापिता-
स्तत्किं वह्निमयीव सा दहति मे स्नेहानुविद्धं मनः ॥ ५६ ॥
सा कापि कामकुमुदाकरचन्द्रलेखा
दृष्टा मया नयनपद्मविकासहेतुः।
D 1039 यत्कान्तिविभ्रमसुधातटिनी निपीता
मूर्च्छां विषोष्मपिशुनामनिशं तनोति ॥ ५७ ॥

विश्वावसोर्विमलसिद्धकुलाख्यवार्धि-
तारधवस्य तनयेति मया श्रुता सा ।
बाला विलासजननी कुसुमायुधस्य
लीलागुरोर्मलयवत्यभिधा मृगाक्षी ॥ ५८ ॥
श्रुत्वेति विद्याधरराजसूनो-
र्वाक्यं नवोद्भूतमनोभवस्य ।
उवाच गन्धर्वकुमारकस्तं
विश्रम्भभूमिः प्रणयी सुबन्धुः ॥ ५९ ॥
दिष्ट्या सखे तुल्यगुणानुभावात्
स्थाने तवायं प्रसृतोऽभिलाषः ।
भवत्यवश्यं सुकृतोचितानां
मनोरथः सत्पथपान्थ एव ॥ ६० ॥
धन्येव लोकत्रयलक्ष्यभूता
सा वैजयन्ती रतिवल्लभस्य ।
सुराङ्गनालोकननिश्चलस्य D 1041
यया धृतिस्ते तरला कृतेव ॥ ६१ ॥
परं राजत्येका जगति जयिनी पूर्णरजनी
वरं श्यामावर्गे वहति विभवं सैव सुभगा ।
यया हीनः क्षीणद्युतिरमृतरश्मिः प्रतिनिशं
शनैर्धत्ते तन्वीनतनखमुखोल्लेखतनुताम् ॥ ६२ ॥
भजस्व धैर्यं तव वाञ्छितं यत्
तदप्रयत्नोपनतं कराग्रे ।
विश्वावसोः सिद्धपतेस्त्वदर्थे
कन्यार्थिता त्वज्जनकेन सा हि ॥ ६३ ॥
धन्योऽस्मि यस्य तनया त्रिजगत्प्रियेण
संयुज्यते द्युतिमता शशिना निशेव ।
उक्त्वेति सिद्धपतिरादरहर्षपूर्णः
कन्याविवाहमहतत्परतामवाप्तः ॥ ६४ ॥
प्रातः सखे स भविता विपुलोत्सवस्ते
कान्तासमागमसुधासफलो विवाहः ।
यस्मिन् समानगुणसंगमदर्शनेन
धातुः करिष्यति जनः सुचिरात्प्रशंसाम् ॥ ६५ ॥

D 1043 इति सुहृद्वचनं सहसोच्छल-
द्विपुलहर्षमयः स निशम्य तत्।
निजपदं प्रययौ कलयन् धिया
दिवसशेषमनेकयुगोपमम्॥ ६६॥

अथ संध्यावधूसङ्गादिव संक्रान्तकुङ्कुमः।
जगाम गगनोद्याने तिग्मांशुर्गाधरागताम्॥ ६७॥
दिनान्ते पद्मिनीकान्ते विश्रान्तेऽस्ततटान्तरे।
पादसंवाहनासक्ता संध्या तस्यान्तिके बभौ॥ ६८॥
ततश्च पश्चिमाम्भोधिं प्रविष्टे वासरेश्वरे।
खमपूर्यत नक्षत्रैस्तदुत्थैरिव शीकरैः॥ ६९॥
शनैः स्तोकतमःश्यामा श्यामा भुवनभाजनात्।
संध्यारागासवं पीत्वा क्षीबेवाघूर्णत क्षणम्॥ ७०॥
ततः प्राची शचीकान्तविलासवसतिः ककुप्।
आसन्नेन्दूदयालोकचन्दनेन विराजिता॥ ७१॥
अथोद्ययौ सुधासूतिः श्यामामुखविशेषकः।
भोगिनां भोगसौभाग्यलीलासुखविशेषकः॥ ७२॥
D 1045 विलासहासाभिमुखीमिन्दोर्वीक्ष्य कुमुद्वतीम्।
मन्युलीनेव नलिनी निमिमील गलद्द्युतिः॥ ७३॥
प्रत्यग्रचन्द्रतिलका तारानिकरवाहिनी।
कामं जगाम सा श्यामा मुनिसंयमवामताम्॥ ७४॥
तस्यां निशायां सोत्कण्ठा हर्म्ये मलयवत्यथ।
जीमूतवाहनध्याननिर्निद्रा समचिन्तयत्॥ ७५॥
इयं मम समासन्नविवाहान्तरवर्तिनी।
न परिक्षीयते वामा शतयामेव यामिनी॥ ७६॥
अहो नु गगनोद्याने शशिसंगमनिर्वृता।
तारका कुसुमस्मेरं रजनी न विमुञ्चति॥ ७७॥
आयामिनी यामिनीयं याता मे प्रियविघ्नताम्।
स्वयं सुखरसासक्तः को जानाति परव्यथाम्॥ ७८॥
इति चिन्तानुबन्धेन तस्याः संतापकारिणा।
सानुरोधेव रजनी जगामादर्शनं शनैः॥ ७९॥
अथारुणांशुकवती त्वरास्रस्तेन्दुदर्पणा।
आसन्नोत्सवसज्जे प्रभा प्राभातिकी बभौ॥ ८०॥

उदिते पद्मिनीकान्ते शान्ते तमसि शार्वरे। D 1047
बभूव सर्वभूतानां सुखाय नयनोत्सवः ॥ ८१ ॥
ततः प्रवृत्ते पद्मिन्या दिवाकरकरग्रहे।
उच्चयुर्भृङ्गललनासङ्गमङ्गलगीतयः ॥ ८२ ॥
ततः सिद्धाधिनाथस्य भवने भूरिसंपदः।
सुतापरिणयारम्भसंभारः समवर्तत ॥ ८३ ॥
अथ सिद्धपुरंध्रीभिर्दिव्यांशुकविभूषणैः।
दृष्ट्वा प्रसाधितां कन्यामूचुरप्सरसो मिथः ॥ ८४ ॥
हारोऽस्याः कुचयोर्भारः परिहारः परं रुचेः।
लावण्यव्यवधानेन भूयसा भूषणेन किम् ॥ ८५ ॥
तन्वङ्ग्याः सखि किं कृतः स्तनतटे रत्नावलीभिर्भरः
चित्रं मण्डनमण्डितासि सुदृशः किं वाञ्जनेनामुना।
रम्यानञ्जनदुर्ग्रहेण विहिता वक्त्रेन्दुबिम्बे त्वया
पश्येयं कुरुते कलङ्ककलनां कस्तूरिकामञ्जरी ॥ ८६ ॥
सखीभिरिति संकल्पजल्पैराकल्पिते भ्रमः।
कल्पितो मङ्गलायैव स्वल्पोऽप्यस्या व्यराजत ॥ ८७ ॥
अथाययौ विमानेन मणिमालांशुमालिना। D 1049
हरिहर्म्यायमानेन व्योम्ना जीमूतवाहनः ॥ ८८ ॥
जगत्त्रयीपूज्यगुणादरेण
सिद्धाधिनाथेन स पूज्यमानः।
विद्याधरश्रेणिशतानुयातः
सज्जीकृतां मङ्गलभूमिमाप ॥ ८९ ॥
अथाययौ रत्नविमानसुस्था
कन्या मनोजन्मविलासवल्ली।
विवाहहर्षद्युतिसंविभागै-
र्विभूषणानीव दिशां दिशन्ती ॥ ९० ॥
सखीकरान्दोलितचामराग्र-
विस्रस्तकर्णोत्पलपल्लवेन।
कपोललग्नेन बभौ क्षणं सा
न्यस्ताङ्कचन्द्राभरणा निशेव ॥ ९१ ॥
ततः प्रवृत्ते विधिवद्विवाह-
महोत्सवे सिद्धनृपात्मजायाः।

पाणिग्रहस्पर्शनवामृतेन
नन्द विद्याधरराजसूनुः ॥ ९२ ॥
D 1051 तौ दम्पती हारमहार्हरत्न-
संक्रान्तदेहौ बभतुर्विवाहे ।
प्रीत्येव लब्ध्वा हृदयेऽवकाशं
परस्परं स्वस्थतया प्रविष्टौ ॥ ९३ ॥
निर्वर्तितोद्वाहविधिप्रबन्धौ
तौ गीतनृत्योचितनाककान्तम् ।
विन्यस्तरत्नासनमर्घ्यभाजौ
राजाङ्गणं जग्मतुरुत्सवार्हम् ॥ ९४ ॥
अथोत्सवोत्साहविशेषनृत्त-
खिन्नेव पीत्वा मधु शातपत्रम् ।
विश्रान्तिमस्ताद्रितटे निषण्णा
भेजे शनैरंशुमतोंऽशुमाला ॥ ९५ ॥
ततः समादाय करावलम्बनां
दिनश्रियं रागवतीं च संध्याम् ।
उद्यानलोभादिव रश्मिमाली
मेरोर्जगामापरपार्श्वभूमिम् ॥ ९६ ॥
नीलाम्बराद्दश्यत वासरान्ते
D 1053 विलोलतारा रजनी मृगाक्षी ।
विलोकयन्ती भयसंभ्रमेण
मुहुर्दिगन्तानभिसारिकेव ॥ ९७ ॥
अथोदयाद्रेः शिखरं शशाङ्कः
करावलीस्फाटिकजालपट्टम् ।
महोत्सवे सिद्धपुरंध्रिनृत्यं
द्रष्टुं महाहर्म्यमिवारुरोह ॥ ९८ ॥
प्रकीर्णताराक्षतलाजपुष्पे
तस्मिन्निशाचन्द्रमसोर्विवाहे ।
अभून्मधुक्षीबमधुव्रतानां
कोऽपि प्रमोदः कुमुदाकराणाम् ॥ ९९ ॥
महोत्सवोत्साहरसेऽथ तस्मिन्
विलोलफेनोज्ज्वलमाल्यहारः ।

नृत्यन् बभौ सिद्धपुरंध्रिलोकः
चन्द्रोदयोद्धूत इवामृताब्धिः ॥ १०० ॥
ततः प्रभाते परिवर्धमाने
महोत्सवे मित्रसमागमेन ।
बालातपे सिद्धपुरे बभूव
सिन्दूरपूरैरिव पौरकेलिः ॥ १०१ ॥
शनैः प्रयातेषु दिनेषु षट्सु D 1055
महोत्सवस्याद्भुतहर्षभूमेः ।
गिरेस्तटे सप्तमवासराग्रे
चचार विद्याधरराजसूनुः ॥ १०२ ॥
ददर्श तत्र स्फुटरश्मिजाल-
फणामणिस्फीतकृतप्रकाशम् ।
मात्रानुयातं परिपूर्णचन्द्र-
बिम्बाननं नागकुमारमग्रे ॥ १०३ ॥
तस्याः प्रसर्पद्धनबाष्पबिन्दु-
मालावकीर्णस्तनमण्डलायाः ।
अत्युग्रशोकाहतिकम्पितायाः
शुश्राव तारं करुणप्रलापम् ॥ १०४ ॥
हा वत्स पातालमणिप्रदीप-
समीपमाप्तोऽसि कथं क्षयस्य ।
द्रक्ष्यामि कान्तं क्व पुनस्तवेद-
मानन्दसंदोहमिवाननाब्जम् ॥ १०५ ॥
अस्मिन् प्रियप्रीतिलतावसन्ते
किं यौवने मन्मथसंधिभूते ।
हा भक्ष्यसे बान्धवजीवभूत D 1057
कालद्विपाक्रान्त इवासि पुत्र ॥ १०६ ॥
कस्मात्तवायं घनदुःखशंसी
मातः प्रजातः प्रसभं प्रलापः ।
किं तीव्रमाकम्पकमस्य साधोः
कल्याणमूर्तेरभिशङ्कयेत्कम् ॥ १०७ ॥
वपूंषि कामं कुशलोचितानि
सौजन्यसंवादसुखप्रदानि ।

एवंविधानि प्रतियातनानां
नैवास्पदत्वं विपदां प्रयान्ति ॥ १०८ ॥
संक्रान्ततद्दुःखविषाकुलेन
पृष्टेति सा तेन दयामयेन ।
तमब्रवीत्कीलितलोचनेव
वियोगभीत्या वदने सुतस्य ॥ १०९ ॥
D 1059 किं निष्प्रतीकारसमुद्गमेन
श्रुतेन ते सद्व्यसनानलेन ।
अकालपाती मम दुःसहोऽयं
दुष्कर्मपाकोपनतप्रकारः ॥ ११० ॥
विशालकीर्त्युज्ज्वलशङ्खपाल-
कुलाङ्कुरे वत्सतरे ममास्मिन् ।
मूलाभिघाती विधुरेण धात्रा
सज्जीकृतोऽयं कठिनः कुठारः ॥ १११ ॥
एकः सदाभक्षणदीक्षितस्य
तार्क्ष्यस्य सर्वक्षयरक्षणाय ।
वारेण नागः फणिनायकेन
विसृज्यते पाटलपट्टचिह्नः ॥ ११२ ॥
योऽयं तुषाराचलसंनिवेशः
संदृश्यते राशिरदृश्यपारः ।
स एष भुक्तोज्झितभोगिकाय-
कङ्कालमालाकलितोऽस्थिकूटः ॥ ११३ ॥
वारक्रमेणाद्य ममास्य सूनोः
कृतस्तदद्यान्तिकमागतस्य ।
प्राप्तोऽयमस्मत्कुलमूलघाती
गृहीतशोणांशुकशासनस्य ॥ ११४ ॥
इति ब्रुवाणा विनयेन तूर्ण-
माश्वास्यमाना तनयेन तेन ।
सा तं पिधायांशुकपल्लवेन
D 1061 चुक्रोश तारं करुणस्वरेण ॥ ११५ ॥
हा शङ्खचूड त्वरसे किमेवं
गन्तुं जगन्मण्डनवध्यभूमिम् ।

उक्त्वेति सा कण्ठगृहीतपुत्रा
तत्स्कन्धविन्यस्तमुखी मुमोह ॥ ११६ ॥
दृष्ट्वाप्तसंज्ञां शनकैः कुमार-
स्तां कातरां धेनुमिवैकवत्साम् ।
अचिन्तयद्दुःखदवानलेऽस्या
निवारणोपायधिया दयार्द्रः ॥ ११७ ॥
अहो बतायं पतगेश्वरस्य
क्रौर्यानुबन्धी मलिनः प्रयत्नः ।
पुष्णाति नित्यं करुणाविहीनः
परोपघातेन शरीरकं यः ॥ ११८ ॥
वियुज्यमाना तनयेन नेयं D 1063
जीवत्यवश्यं जननी विवत्सा ।
अयं कुमारः सुकुमारमूर्ति-
र्मयैव रक्ष्यः स्वतनुप्रदेन ॥ ११९ ॥
क्षणं विचिन्त्येति स तामुवाच
मातर्व्रज त्वं ससुता स्वभूमिम् ।
गच्छाम्यहं पन्नगवध्यधाम
प्रयच्छ शोणांशुकचिह्नमेतत् ॥ १२० ॥
इत्युक्तमात्रे सदयेन तेन
सा कम्पमानाङ्गलता तमूचे ।
न वाच्यमेतद्भवता विरुद्धं
त्वं शङ्खचूडादधिकः सुतो मे ॥ १२१ ॥
अहं तु मोहोर्मिमगाधसिन्धु-
मशर्मकर्मोपनतं विशामि ।
अकालयन्त्रोपलदुःसहानि
दुःखान्यलं दुष्कृतिनः पतन्ति ॥ १२२ ॥
साधो सुधासंनिधिराश्रितानां
सत्त्वोदधे स्वस्तिमती तनुस्ते ।
भूयाज्जगल्लोचनजीवभूता D 1065
कल्पक्षयेऽप्यक्षयसाक्षिणीयम् ॥ १२३ ॥
इत्युच्यमानः स तया प्रयत्नात्
बद्धानुबन्धः स्वतनुप्रदाने ।
यदाभवन्निश्चलचित्तवृत्ति-
स्तं शङ्खचूडोऽपि तदा जगाद ॥ १२४ ॥

ताक्ष्यस्य भक्ष्या वयमादिसर्गे
सिद्धाः किमत्र क्रियते विधातुः।
मिथ्यैव निष्कारणवत्सलत्वा-
न्न कर्तुमर्हस्यपदेऽत्र चित्तम्॥ १२५॥

इदं गुणालंकरणं वपुस्ते
संपूर्णसौजन्यसुधानिधानम्।
त्रैलोक्यजीवैरपि रक्षणीयं
त्याज्यं तृणस्येव कथं ममार्थे॥ १२६॥

भवन्ति नित्यं भवकाननेऽस्मिन्
अस्मद्विधाः काशपलाशतुल्याः।
भवद्विधस्यामृतसोदरस्य
न पारिजातस्य पुनः प्रसूतिः॥ १२७॥

D 1067 प्रसीद जन्मान्तरपुण्यपण्यै-
र्दृष्टोऽसि सौजन्यसुधासुधांशुः।
अस्मद्विषादेन मनःप्रयासः
सर्वात्मनायं भवता न कार्यः॥ १२८॥

गत्वार्णवं स्वस्वनिविष्टमूर्ति
गोकर्णसत्त्वं प्रणिपत्य तूर्णम्।
पातालगेहं जननीं विसृज्य
गच्छामि तां ताक्ष्यशिलामखिन्नः॥ १२९॥

उक्त्वेति नागः प्रणिपत्य मूर्ध्ना
जीमूतवाहं जननीसहायः।
जगाम गोकर्णतटं महाब्धि-
तरंगहस्तार्पितफेनमालम्॥ १३०॥

विद्याधराधीशसुतस्तु तत्र
तत्प्राणसंरक्षणनिश्चयेन।
व्रजन् ददर्शारुणपट्टपाणि-
मायान्तमन्तःपुरिकं पुरस्तात्॥ १३१॥

स वर्षवर्यः प्रणिपत्य तस्मै
दत्वाथ तन्मङ्गलपट्टयुग्मम्।
D 1069 आगम्यतामुत्सवसप्तरात्र-
स्नानाय सज्जो विधिरित्युवाच॥ १३२॥

भद्र त्वमग्रे व्रज निर्विलम्ब-
मवेहि मामागतमेव पश्चात् ।
तूर्णं तमुक्त्वेति विसृज्य हर्षा-
दचिन्तयत्सत्त्वधिया कुमारः ॥ १३३ ॥
दिष्ट्या मया पन्नगवध्यचिह्नं
समीहितं पाटलपट्टयुग्मम् ।
यत्नाद्विनावाप्तमिदं व्रजामि
क्षिप्तां शिलामेव भुजंगशत्रोः ॥ १३४ ॥
ध्यात्वेति चूडामणिदीप्तरश्मि-
पुञ्जोपमं मूर्ध्नि निधाय पट्टम् ।
हृतोत्तरीयप्रणयः परेण
स तार्क्ष्यपाताङ्कशिलां जगाम ॥ १३५ ॥
आसाद्य तां शोणितशोणपार्श्वा-
माश्यामलीनाहिवसावसेकाम् ।
आरुह्य तार्क्ष्यागमनाभिकाङ्क्षी
तस्थौ स संछादितपूर्वकायः ॥ १३६ ॥
अथ द्रवत्काञ्चनवीचिरोचि- D 1071
श्चण्डस्तडित्पुञ्जघनप्रकाशः ।
समुद्ययौ येन नभो बभूव
सवाडवोद्गारमिवार्णवाम्भः ॥ १३७ ॥
पक्षीन्द्रोऽदृश्यतारादथ तरणिकराक्रान्तहेमाचलाभः
पक्षाक्षेपप्रवृत्तप्रततपरिसरन्मारुतक्षोभिताब्धिः ।
यत्संपातावहेलाशकलितसकलानोकहभ्रष्टभूभृ-
त्प्राग्भारस्फारघोषव्यतिकरचकितेवाकुला भूर्बभूव ॥ १३८ ॥
भोगीन्द्रशत्रुः स्थिरविग्रहस्य
तस्याथ वज्रोग्रनखाङ्कुशाग्रः ।
घोराशनिस्फोट इवाचलस्य
पपात पृष्ठे कठिनप्रहारः ॥ १३९ ॥
कुमारस्तार्क्ष्येण क्षतदलितगात्रोऽपि सहसा
परप्राणत्राणप्रबलपुलकालंकृततनुः ।
प्रदध्यौ दुःखार्तव्यसनिगणरक्षोपकरणं
शरीरं मे भूयात्सततमृतमित्यायतधृतिः ॥ १४० ॥
निर्घातघोरतरघोषमुखाभिघात- D 1073
निर्दारितेऽप्यचलसत्त्वदृढेऽथ तस्मिन् ।

कोऽयं भुजंग इति तत्र विहंगराजः
संसक्तविस्मयविनिश्चयनिश्चलोऽभूत् ॥ १४१ ॥
अथ पुनरभिपत्योच्चण्डमार्तण्डमाला-
कपिलविपुलतेजःपुञ्जपिञ्जीकृताशः ।
खगपतिररुणांशुव्यक्तरक्तप्रवाह-
प्रकटमणिमकार्षीत्खण्डमस्याशु मूर्ध्नः ॥ १४२ ॥
अस्मिन्नवसरे बालहरिचन्दनकानने ।
जीमूतकेतुरासीनः पत्न्या सार्धं स्नुषान्वितः ॥ १४३ ॥
पुत्रदर्शनसोत्कण्ठश्चन्द्रोत्सुक इवोदधिः ।
शङ्काविषण्णहृदयश्चिन्ताक्रान्त इवाब्रवीत् ॥ १४४ ॥
अहो बत किमद्यापि वत्सो जीमूतवाहनः ।
न दृश्यते गिरिवरप्रान्तालोकनकौतुकी ॥ १४५ ॥
दीप्ता गरुडवेलेयं प्रवृत्तास्य गिरेस्तटे ।
यया विभाव्यते व्योम दिग्दाहोद्गारदारुणम् ॥ १४६ ॥
D 1075 भयभग्नाङ्गभुजगग्रासगृध्नः फणिद्विषः ।
आविद्धापातनिर्घातघोरोऽयं वर्तते क्षणः ॥ १४७ ॥
इत्युन्मेषिणि सातङ्कशङ्काशायिनि संशये ।
तस्याग्रे न्यपतद्रक्तसिक्तश्चूडामणिर्दिवः ॥ १४८ ॥
तं निरीक्ष्य पुरःकीर्णमांसकेसरशोणितम् ।
दुर्निमित्तमिवासह्यं सहसैव मुमोह सः ॥ १४९ ॥
चूडामणिं च्युतं दृष्ट्वा पत्युर्मलयवत्यपि ।
पपात मोहाभिहता श्वश्र्वा सह महीतले ॥ १५० ॥
शनैः संज्ञां समासाद्य जायामाश्वास्य सस्नुषाम् ।
उवाच संशये ध्यात्वा धीमान् विद्याधराधिपः ॥ १५१ ॥
पश्याम्यहं स्वयं गत्वा वत्सं निर्जनचारिणम् ।
घोरा गरुडवेलेयं देहसंदेहदायिनी ॥ १५२ ॥
चूडामणिश्च्युतश्चायं निश्चयाय न कल्पते ।
एष संभाव्यते तार्क्ष्यभक्ष्यमाणस्य भोगिनः ॥ १५३ ॥
एवंविधाः पतन्त्येव मणयः फणिनां सदा ।
उत्पातवातनिर्घाततरलास्तारका इव ॥ १५४ ॥
D 1077 इत्युक्त्वा सहितस्ताभ्यां सानुगः क्षितिभृत्तटीम् ।
विद्याधरेन्द्रः प्रययौ भोगिवध्यशिलावतीम् ॥ १५५ ॥
अत्रान्तरे शङ्खचूडः शोणवध्यपटान्वितः ।
गोकर्णमर्णवतटे प्रणम्याशु समाययौ ॥ १५६ ॥

स दृष्ट्वा गरुडाघातदीर्णं जीमूतवाहनम्।
हा हतो वञ्चितोऽस्मीति पपात विलपन् भुवि ॥ १५७ ॥

स चुक्रोश भृशं बाष्पविगलद्गद्गदस्वरः।
कुर्वन् मुहुर्गिरिगुहाः सप्रलापाः प्रतिस्वनैः ॥ १५८ ॥

हा निष्कारणबान्धव व्यसनिनां कारुण्यपुण्यावधे
केयं पेशलता परार्तिशमने प्राणप्रदानोन्मुखी।
हा सौजन्यनिधे त्वया विरहितं जातान्धकारं जगत्
राहुग्रस्तसुधामयूखगगनच्छायां समालम्बते ॥ १५९ ॥

प्राणत्राणविधौ परेषु कृपया हा जीवितत्यागिनः
संजातैव यशोमयी तव तनुः कल्पान्तरस्थायिनी।
पापः पातकशङ्कसंकुलतरे घोरापवादोदरे
क्षिप्तः संक्षयधाम्नि नित्यनिधने किं शङ्खचूडस्त्वया ॥ १६० ॥

इति प्रलापमुखरः प्रसर्पन् गरुडान्तिकम्। D 1079
जीमूतकेतुमायान्तमपश्यत्सानुगं फणी ॥ १६१ ॥

तस्मै निवेद्य वृत्तान्तं नागः शोकविशृङ्खलः।
बभाषे भुजमुत्क्षिप्य साक्षेपः पक्षिपुंगवम् ॥ १६२ ॥

अलमलमविचारप्राप्तपर्याप्तपाप-
व्यसनसरणिभाजा साहसेनामुना ते।
फणिसमुचितचिह्नं किंचिदेवानवेक्ष्य
क्षतनिरत हतः किं तार्क्ष्य विद्याधरोऽयम् ॥ १६३ ॥

एतदाकर्ण्य जीमूतकेतुर्दीर्णतनुः पुरः।
जीमूतवाहनं दृष्ट्वा मुमोह महिषीसखः ॥ १६४ ॥

प्रियं पतंगराजोग्रप्रहारदलिताकृतिम्।
दृष्ट्वा मलयवत्यग्रे कण्ठप्राप्तार्धजीवितम् ॥ १६५ ॥

स्थिताप्यधश्च्युतैवाद्रेरहताप्याहतैव सा।
सजीविताप्यजीवैवं समुद्भ्रान्तापि निश्चला ॥ १६६ ॥

रुद्धा सर्वाङ्गमालिङ्ग्य गाढं सख्येव मूर्छया।
मुहूर्तं मोहविवशा सा विवेद न किंचन ॥ १६७ ॥ D 1081

शनकैर्लब्धसंज्ञेषु सर्वेष्वार्तप्रलापिषु।
वैराग्यालक्ष्यवैलक्ष्यविषादी गरुडोऽभवत् ॥ १६८ ॥

गृहीतधैर्यस्तत्कालं जीवितत्यागनिश्चयात्।
ऊचतुर्जनकौ स्रस्तगात्रं जीमूतवाहनम् ॥ १६९ ॥

परकारुण्यशीलस्य केयं पुत्र कठोरता।
तव प्रवृत्ता कायेऽस्मिन्नावयोर्जीवहारिणी ॥ १७० ॥
इदमापन्नजनतारक्षारत्नमरक्षता।
शरीरं भवता पुत्र किं नाम सुकृतं कृतम् ॥ १७१ ॥
इति ब्रुवाणौ पितरौ शिरःकम्पेन निःसहः।
स प्रणम्योच्चलत्प्राणः प्रकीर्णाक्षरमभ्यधात् ॥ १७२ ॥
तवाज्ञया विना तात ममेदं कुर्वतः स्वयम्।
अपश्चिमः प्रणामोऽयं त्वत्प्रसादनलक्षणः ॥ १७३ ॥
क्षणक्षयिणि कायेऽस्मिन्नलक्ष्यपरिणामिनि।
परोपकारसारैव जन्मयात्रा शरीरिणाम् ॥ १७४ ॥
जवनपवनलीलावल्लिवल्लीदलोद्य-
त्सलिललवविलोलं देहिनामेतदायुः।
D 1083 स्थिरपदममृताप्त्या संततार्तोपकारे
कृतपरिकरबन्धं पुण्यधाम्नि प्रयाति ॥ १७५ ॥
इत्युक्त्वा जनकौ सास्रौ पुरःप्राप्तं खगेश्वरम्।
आह तापेन महता निन्दन्तं निजदुष्कृतम् ॥ १७६ ॥
वैराग्यगुरुणा सत्त्वप्रणयेन प्रसह्य सः।
चकार स्थिरसंकल्पं नागाशननिवृत्तये ॥ १७७ ॥
ततः पर्यन्तविषमश्वासप्रस्खलिताक्षरः।
सत्त्वप्रकाशशेषोऽभूत्स निमीलितलोचनः ॥ १७८ ॥
अथोचितां सुरचितां पुष्पांशुकचितां चिताम्।
प्रवेष्टुं तत्प्रिया वह्नेरग्रमेत्य समभ्यधात् ॥ १७९ ॥
भक्त्या मया भगवती तोषिता भववल्लभा।
आदिशन्मे वरं सर्वविद्याधृक्चक्रवर्तिनम् ॥ १८० ॥
तदिदं वितथं कस्माज्जातं मम सतीवचः।
यदहं सप्तरात्रेण बालवैधव्यभागिनी ॥ १८१ ॥
जन्मान्तरेऽपि मे भूयादयमेवोचितः पतिः।
उक्त्वेति साग्नौ चिक्षेप मन्दारकुसुमाञ्जलिम् ॥ १८२ ॥
D 1085 ततः पीयूषकलशव्यग्रपाणिसरोरुहा।
स्वयमभ्येत्य गिरिजा प्रीत्या जीमूतवाहनम् ॥ १८३ ॥
अयं जीवति ते पुत्रि पतिरित्यभिधायिनी।
अजीवयत्सुधासारैः पूरिताशामुखांशुभिः ॥ १८४ ॥

अन्तर्हितायां पार्वत्यां स्वस्थो जीमूतवाहनः ।
तार्क्ष्यं ययाचे नागानां हतानां जीवितं पुनः ॥ १८५ ॥
ततः सर्वे समुत्तस्थुस्तत्सृष्टामृतवृष्टिभिः ।
सालोकाः फणिनः स्फीतफणामणिमरीचिभिः ॥ १८६ ॥
ततः प्रहर्षाद्भुतमन्थराणां
तुल्याभियोगेन विघूर्णमाना ।
समाययौ सिद्धसुता समीपं
संचारिणी कल्प( ल )तेव पत्युः ॥ १८७ ॥
याते तमभ्यर्च्य ततः कुमारं
खगेश्वरे पक्षवतीव मेरौ ।
जीमूतवाहाभिमुखस्य दृष्टि-
र्न शङ्खचूडस्य जगाम तृप्तिम् ॥ १८८ ॥ D 1087
अथ सुरपतिकान्तापाणिपद्मप्रयुक्ता
विकचकुसुमवृष्टिर्बोधिसत्त्वस्य मूर्ध्नि ।
न्यपतदमलरत्नासारसंपूरिताशा
कृतगुणनुतिशब्देवाकुलालिस्वनेन ॥ १८९ ॥
वन्दित्वा पितरौ तदङ्घ्रिकमलव्यासक्तचूडामणिः
हर्षाश्रुस्रुतिभिस्तयोः सुविहितः प्रेमाभिषेकोत्सवः ।
सत्त्वाब्धिः परिपूर्णपुण्यनिवहैर्जीमूतवाहः क्षणा-
द्रत्नानि स्फुटचक्रवर्तिकमलाचिह्नानि स प्राप्तवान् ॥ १९० ॥
अथ सुरपतिना समेत्य हर्षात्
प्रणयवता स्वयमासनेऽभिषिक्तः ।
श्रियमभजत वन्द्यमानकीर्तिः
त्रिदशगणैः स चिराय चक्रवर्ती ॥ १९१ ॥
इति स्वजन्मान्तरवृत्तमेतत्
पुण्योपदेशे कथितं जिनेन ।
कृत्वा मयार्घ्यं कुशलं यदाप्तं
तत्सर्वसत्त्वाभ्युदयाय भूयात् ॥ १९२ ॥

इति क्षेमेन्द्रविरचितायां बोधिसत्त्वावदानकल्पलतायां तदात्मजसोमेन्द्रकृतं जीमूतवाहनावदानमष्टोत्तरशततमः पल्लवः ॥



D 1089

## प्रणिधानम् ।

सर्वोन्नताय सुगताय गुणान्विताय
भद्राय भूरितरवीर्यबलक्षमाय ।
उन्मूलिताकुशलमूलभवद्रुमाय
तस्मै नमो भगवते मदवारणाय ॥ १ ॥

यावत्तारा तरुणकरुणालोकिनी भक्तिभाजां
कल्याणानां कुलमविकलं सिद्धये संनिधत्ते ।
लोके यावद्विमलकुशलध्यानधीर्लोकनाथः
तावद्बौद्धी विबुधवदनामोदिनीयं कथास्ताम् ॥ २ ॥

यावद्बुद्धः सकलभुवनोत्तारणाय प्रबुद्धो
यावद्धर्मः सुकृतसरणिस्त्रैररत्नप्रदीपः ।
यावत्संघः शरणमनसां दत्तकल्याणसंघः
स्थीयात्तावज्जिनगुणकथाकल्पवल्ली नवेयम् ॥ ३ ॥

यावद्भूर्भूरिभूभृत्स्रुतसलिलचलन्मालिका शेषशीर्षे
मायूरच्छत्रशोभामनुभवति फणारत्नरश्मिप्रतानैः ।
D 1091 धत्ते यावत्सुमेरुः क्षितितलकमले कर्णिकाकारकान्ति
शास्तुस्तावत्कथेयं कलयतु जगतां कर्णपूरप्रतिष्ठाम् ॥ ४ ॥

समाप्ता बोधिसत्त्वावदानकल्पलता ॥ कृतिरियं महाकवेः क्षेमेन्द्रस्य ॥

* * *

नेत्राक्ष्यब्धियुताब्दके च समये राधे सिते पक्षके
आशायां च तिथौ दिवाकरदिने वाहद्विषट्पक्षके ।
श्रीमद्बुद्धसुतावदानशतकं वस्वङ्कितं मोक्षदं
राज्ये श्रीमदनन्तमल्लनृपतेर्लक्ष्म्या व्यलेखि स्वयम् ॥

लक्ष्मीभद्रकवेर्विधाय विधिवद्व्याख्यानमत्यद्भुतं
क्षेमेन्द्रेण कृतं गभीरमधुरं बुद्धावदानं मया ।
नेपाले भुवि मञ्जुभद्रसुधिया यत्पुण्यमासादितं
सत्त्वास्तेन भवाब्धिमध्यपतिता बुद्धा भवन्तु स्फुटम् ॥

शुभमस्तु ॥

—•◦•—

१ This colophon is contained in the Nepalese manuscripts of the Second Valume, which only was extant in Nepal during king Ananta Malla's reign.

# विशेषनामसूची।

[ स्थूलाक्षराणि विशेषनाम, सूक्ष्माक्षराणि च तदर्थं सूचयन्ति । स्थूलाङ्कोऽवदानसंख्यां सूक्ष्माङ्कश्च श्लोकसंख्यां सूचयतः । अस्यां सूच्यां भगवान्, तथागतः, शाक्यसिंहः, जिनः, सुगतः, इत्यादीनि पदे पदे दृश्यमानानि बुद्धनामानि नैव निर्दिष्टानीति ज्ञेयम् । ]


अकल्याण ( कुमार )–३१. ४
अकृतज्ञ ( कुमार )–४५. १४, १६, १९, २४, ४७, ५२
अग्निमित्र ( ब्राह्मण )–१८. ६
अङ्ग ( गृहपति )–७७. २०
अङ्गन ( गृहपति )–७७. २०
अजपथ ( पर्वत )–६४. २६४
अजातशत्रु ( राजा )–९. ५३; ११. ६१; २८. ३; ४४. ३, १४, २५; ९५. ८
अजित ( तीर्थ्य )–१३. ५
अजितोदय ( नगर )–८०. ८८
अजिरवती ( नदी )–७६. २
अञ्जन ( यक्ष )–६६. ५०
अतिघोषा ( नगर )–४५. १४
अतिबल ( नाग )–४६. ५
अदीनपुण्य ( राजा )–५२. ४, ९, ३४, ३९, ५३, ७१, ७२, ७३
अनङ्गन ( गृहपति )–९. ८६, ८८, ९०, ९१, ९५
अनवतप्त ( सरः )–५०. ३, ९
अनाथपिण्डद ( उपासक )–१७. २; १९. २; २१. ५, ९, १२, २१, ३४, ५६, ६०, ७१, ७५; ३५. २, ३२, ३९, ४२, ४८, ६३; ३६. ३७; ९३. २, ७, ५०
अनिरुद्ध ( शाक्यकुमार )–२२. ६३; २६. ६४
अनिरुद्ध ( भिक्षु )–९३. ६५
अनुपमा ( राज्ञी )–८. ४४, ६०
अनुलोमप्रतिलोम ( समुद्र )–६. ६८
अनुशाख ( कुमार )–३२. ४
अभिरति ( नागकन्या )–४६. ५
अमृता ( शाक्यकन्या )–२६. २३, २६
अमृतोदन ( शाक्य )–२२. ६१; २६. २२, २५
अमोघ ( पाश )–६४. ६१, ७३, ८२, २०६
अमोघा ( ओषधि )–६. ६९, ७५
अयःशङ्कु ( पर्वत )–६. ८६
अरिष्टा ( नगर )–२. २
अरुण ( राजा )–१०. १४३
अरुणावती ( नगर )–१०. १४३
अर्कशाला ( सभा )–८०. ४१
अर्थद ( वणिक् )–१९. १३५
अर्थदत्त ( सार्थवाह )–५०. ५३, ५५
अर्थपति ( सार्थवाह )–९५. ३
अलोलमन्त्र ( कुमार )–६६. ८
अल्पाश्वास ( नाग )–७७. १०
अवैरा ( बुद्धविद्या )–६. ८२
अशोक ( राजा )–३२. ३; ५४. २३; ५९. २, ४, ९० ( अ ); ६९. २; ७३. २; ७४. २
अशोक ( भिक्षु )–८०. ६८
अश्वजित् ( भिक्षु )–६२. ५२
अश्वदत्त ( वणिक्पुत्र )–८९. १२२, १२५, १४४, १७९, १८६
अवन्ति ( देश )–९६. २
अष्टादशवक्र ( पर्वत )–६ ८७
अष्टादशवक्रा ( नदी )–६. ८७
असित ( मुनि )–२४. १९, ४०

आज्ञातकौण्डिन्य ( भिक्षु )–९३. ५७, ५९; १०२. ३
आदर्शमुख ( कुमार )–१७. ३९, ४१, ४४, ५१
आनन्द ( बुद्धशिष्य )–७. १५, ७९; १३. ३९; १७. १३; २८. २३, ४८, ५७, ६१, ६३, ६८; ३९. २२; ७०. २; ७६. ९; ८०. ४१, ४२, ४७, ५०, ५१; ८४. ७, १०, १२; ८६. २२; ९३. ४३, ४९
आनन्द ( शाक्य )–२६. २५
आनन्द ( राजा )–१०५. २७
आम्रपाली ( गणिका )–२०. ५१, ९८, १०२
आवर्त ( समुद्र )–६. ७०

आवर्त (पर्वत)–६. ७१
आषाढ (अनाथपिण्डद)–२१. ८२

इक्ष्वाकु (शाक्यराज)–२६. १४
इन्द्र (भिक्षु)–७३. ८, १९
इन्द्रमाल (गुहा)–७८. १५
इन्द्रसोम (ब्राह्मण)–२७. ५६

उच्चैर्गति (पक्षी)–५१. २३
उज्जयिनी (नगर)–७६. १०; ८९. १२१
उत्करिक (=वणिक्)–४. ११४
उत्तर (माणव, भविष्यद्बुद्ध)–५०. १२१
उत्तर (बुद्ध)–७६. २१
उत्तरकुरु (द्वीप)–४. ५०
उत्पलक (व्याध)–६४. ६५
उत्पलवर्णा (भिक्षुणी)–१४. ८, १५, १४४
उत्पलाक्ष (राजा)–५१. १७
उत्पलावती (नगर)–५१. ६, १७
उदक (कुमार)–३७. २६
उदयन (राजा)–३५. ३, ६३; ९६. २
उदायी (भिक्षु)–१४. १४, १४४
उदायी (शाक्य)–२२. ५, ९, १८
उदुम्ब (यक्ष)–३८. २
उदुम्बरवन (उद्यान)–८०. ८, १०, २९
उद्रायण (राजा)–४०. ४, १०, २४, ३६, ६४, ७६, ९८, १८२, १९०
उपघाट (यक्ष)–५५. २
उपगुप्त (वणिक्पुत्र, भिक्षु)–७२. २, ४, ६, २३, २५, ३०, ३८, ४०, ५१, ५७, ६६, ६७, ७०
उपचैला –२०. २४, २५, ३७, ४०
उपतिष्य (बुद्धशिष्य)–१८. ३
उपनन्द (कुमार)–८५. २६, २७, ३९
उपनन्दक (नाग)–३३. ५, २३, २५; ३४. २; ५०. १६
उपसेन (भिक्षु)–३७. ८, १२, १७; ८७. ५
उपस्कीला (नदी)–६. ८६
उपरिष्ट (प्रत्येकबुद्ध)–५०. ५८
उपाली (कल्पक, बुद्धशिष्य)–२२. ७४, १००; ९३. ६८
उपोषध (राजा)–४. २
उपोषध (शाक्यराज)–२६. ११
उरुमुण्ड (पर्वत)–७१. १३; ७२. २७
उर्वशी (अप्सरा)–२०. ६६

ऋद्धिबल (कुमार)–३४. १०

एकधार (पर्वत)–६४. २६६
एकशृङ्ग (कुमार)–६५. १८
एष्यजित् (भिक्षु)–९३. ६७.

ककुद (तीर्थ्य)–१३. ५
कङ्क (अजगर)–१०२. ९
कण्ठक (अश्व)–२४. १४८
कनक (बुद्ध)–२१. ८१; ४६. ६
कनक (राजा)–१०६. ३, २१
कनकप्रभा (कुमारी)–१०६. ४, १४
कनकमुनि (बुद्ध)–५६. २८
कनकवती (नगर)– १०६. ३
कनकवर्ण (राजा)–४२. ३, २३, २४
कनकवर्मा (कुमार)–१०६. ४
कनका (नगर)–४२. ४
कन्दर (वणिक्पुत्र)–४४. ५६
कन्दल (द्यूतकार)–४३. १८
कपिल (मुनि)–२६. १५
कपिल (मकर)–३९. १३, १५, ४५, ६०, ६१, ७८, ९९
कपिल (ब्राह्मण)–६३. २०, २१, ३५
कपिल (पुरोहित)–६४. १३३, १३४, १३८, १६३
कपिलपिङ्गल (चाण्डाल)–५५. ४०
कपिल-वस्तु-वास्तु (नगर)–७. २; १०. २; ११. २; २६. २, १६
कफिण (मुनि)–७७. १८
कमल (गृहपति)–१०४. २
कमल (मालाकार)–९०. २०
करदण्डी (योध)–२८. ५९, ६०, ६१
करुणरेख (कुमार)–९५. १६
कलङ्कवती (राज्ञी)–३२. १०, ३७
कलन्दकनिवास (विहार)–९. ५; १२. २५; १८. २; २८. २; ४०. २; ६०. ३०; ९५. २

कलि ( राजा )-३८. ९, २०
कलिङ्ग ( देश )-८. २७; ३२. ३
कल्याणकारी ( कुमार )-३१. ४, ५, ४८, ६५, ६९
कविकुमार ( कुमार )-६६. १७, १०१
कशेरु ( द्वीप )-१४. ३६, ७७, १०४

काचरा ( कपिलजननी )-३९. ६१
काञ्चनपुर ( नगर )-१०८. २
काञ्चनमाला ( कुमारी )-९३. ८४, १०७
काञ्चनमालिका ( राजपुत्री )-५९. १०, १२०
कात्यायन ( = नारद )-२४. ५०
कात्यायन ( भिक्षु )-१९. ५४, ६३, ७८, ८७, ९७, १०६, १२०, १२३; ४०. ३५, ३६, १४४, १४६, १५९, १७२, १७५, १८१, १९८; ९३. ६९
कान्ता ( ब्राह्मणी )-११. ४१, ४२
कान्तिमती ( राज्ञी )-३. १२
कान्तिमती ( ब्राह्मणी )-१४. ८२
कामबला ( वणिक्स्त्री )-८९. १२२
कामरूप ( पर्वत )-६४. २६५
कामसार ( मन्त्रिपुत्र )-१०६. ६
काम्पिल्य ( नगर )-६६. ४, ७९; ६८. ९
कारण्डवा ( नदी )-१४. १३५
काल ( कुमार )-१३. ३७
कालपाश ( व्याध )-४०. १८३
कालिका ( स्त्री )-५०. ३७
काशि ( देश )-१०. १४७, १४८; ९७. १३; ९८. ११
काशिपुर ( = वाराणसी )-२२. ८०; ६३. ६३; ६५. ८; ९४. ८; १०१. ७
काशिराज ( राजा )-७६. २२
काशिसुन्दर ( कुमार )-२९. ३, ४, ४२
काशीपुर ( नगर ) ५९. १६५
काशीनगरी ( = वाराणसी )-८९. ७८
काश्मीर ( देश )-७०. २; १०५. २
काश्य ( राजा )-६६. ८, ६९
काश्यप ( बुद्ध )-१०. १४८; १७. ४; १८. २४; १९. १३२; २१. ८२; २६. १३; २८. ४५; ३३. २२, २४; ३६. ७८; ३९. २४, ७८; ४१. ७०, ८३, ८६, ८८; ४३. १६; ४६. ६; ५६. २८; ६१. २१; ६२. १०२; ६३. ५९; ६७. ६७, ७२; ७७. ११, १२, २१; ८०. ६८, ७१, ८४; ८९. २८; ९३. ८५, ८८, ९५; ९४. ८, १२, १३; ९७. १९; ९८. १४
काश्यप ( गोत्र )-६३. २२, ५९
काश्यप ( राजर्षि )-६५. १६, ७७
किष्किन्धाद्रि ( पर्वत )-२४. १९
कुकूल ( पर्वत )-६४. २६२
कुक्कुटाराम ( विहार )-७४. ७
कुञ्जरकर्ण ( राजा )-५९. ५९, ९० ( अ )
कुटिलक ( व्याध )-३०. १९, २९, ४४, ५०
कुठ ( गोचौर )-१०५. ३५
कुणाल ( हंस )-५९. ६
कुणाल ( कुमार )-५९. ६
कुन्दर ( वणिक्पुत्र )-४४. ५४
कुमार ( स्कन्द )-३. ३१
कुरुद्वीप ( द्वीप )-९८. ८
कुवलय ( मालाकार )-९०. २१
कुशलशील ( तापस )-९८. ११
कुशलात्मा ( कुमार )-१७. ३१
कुशिपुरी ( नगर )-१५. २; ८०. ८, ३४, ३९, ४०; ९१. २
कूटागारगुहा ( विहार )-९०. २
कृकि ( राजा )-१०. १४७; १९. १३३; २६. १३; ३३. २२; ३९. २५; ४३. १६; ६२. १०२; ६३. ६४; ६८. १००; ९३. ८४
कृतज्ञ ( कुमार )-४५. १४, १५, १७, १८, २२, २४, ४६, ४९, ५४
कृष्ण ( मुनि )-३६. ७४
कृष्णा ( कुमारी )-२३. २८
केतकी ( वणिग्भार्या )-३६. ४
केशिनी ( अरण्य )-५५. २
कैनेयक ( मुनि )-७७. १४, १९
कोटमल्ल ( मुनिजाति ) ९८. १२
कोटर ( यक्ष )-१०६. १९
कोलित ( बुद्धशिष्य )-१८. ३
कोसल ( देश )-१३. १५; ४६. २, ९, २९; ५२. २०

कौण्डिन्य ( बुद्धशिष्य )-२९. २, ८५
कौशाम्बी ( नगर )-३५. ३, ४७, ५३
कौशिक ( ब्राह्मण )-७९. ४५, ६१
कौष्ठिल ( भिक्षु )-९३. ७०
क्रकुच्छन्द ( बुद्ध )-२१. ८१; ४६. ६; ५६. २८; ७८. २८; ८०. ७३; ८९. १२०
क्रूर ( ब्रह्मराक्षस )-६४. १९६
क्रूरक ( व्याध )-५३. २७
क्षान्तिरति ( मुनि )-३८. ७, २०
क्षान्तिवादी ( = काशिसुन्दर )-२९. ४२, ५१, ६१, ६२, ७३, ८५
क्षेम ( राजा )- ८९. ६२
क्षेमवती ( नगर )- ८९. ६२
क्षेमंकर ( बुद्ध )-८९. ६२

खण्ड ( अमात्य )-२०. ३
खण्डद्वीप ( द्वीप )-८. २७
खण्डपोषध ( ब्राह्मण )-३५. ४३
खर्वट ( गृहपति )-५०. ३५
खादिर ( पर्वत ) ६४. २७०

गङ्गपाल-२२. ९८, १००
गङ्गा ( नदी )-१६. २
गङ्गाधिपत्य ( नगर )-१०३. ५
गण्ड ( चाण्डाल )-२. ११२
गन्धमादन ( पर्वत )
गवांपति ( कुमार )-६२. ८८
गुप्त ( वणिक् )-७२. २
गृध्रकूट ( पर्वत )-८. ६; ४४. २; ५०. ७, १२
गृहपति ( कुलाल )-१००. १५
गोकर्ण ( तीर्थ )-१०८. १२९, १३०, १५६
गोतम ( बुद्ध )-२१. ३१
गोदानीय ( द्वीप )-४. ५०
गोप ( अमात्यपुत्र )-२०. १०, २६, २९, ३१, ७०, ७६, ८०, ८४
गोपालक ( नाग )-५६. ६
गोपा-पिका ( शाक्यकन्या )-२४. ६२
गोमतिका ( ब्राह्मणी )-१०१. ८
गोविषाण ( मन्त्री )-६६. ११, २१, ४४
गौतम ( मुनि )-३. १६८; ३६. ७४

घाट ( यक्ष )-५१. २
घोषिल ( गृहपति )-३५. ६४; ४०. १६६, १६७

चण्डाल ( ग्राम )-५७. १०
चतुरक ( सुहृत् )-६३. १५
चन्दनदत्त ( वणिक् )-८९. १२१
चन्दनद्वीप ( द्वीप )-८१. ५
चन्दनमाल ( प्रासाद )-३६. ६५, ७२
चन्दनश्री ( बुद्ध )-८१. २८
चन्द्र ( कुमार )-८३. ९, ११, २९
चन्द्रप्रभ ( राजा )-२. ११०; ५. ६
चन्द्रप्रभ ( यक्ष )-६. १३६
चन्द्रप्रभा ( राज्ञी )-३०. ४, २०; ४०. ५, ४०
चन्द्रावलोक ( राजा )-८१. १७
चपलक ( कुमार )-५०. ५९
चम्पक ( नाग )-६६. ३३
चारायण ( अमात्य )-११. ५३, ५५, ५७
चित्र ( नाग )-६४. ३३, ३९, ६० ६४
चित्र ( हस्तिपाल )-८८. २, ५, १३, ३५, ३९, ४४, ७३
चीवरकन्या ( राजपुत्री )-४८. ९, ८५, ९६
चुन्द ( भिक्षु )-३५. ५४
चुन्द ( श्रावक )-८०. १९
चूडि ( सुपर्ण )-७७. १०
चैत्ररथ ( उद्यान )-४. ८२
चैला-२०. २३, २५, ४०

छन्दक ( सारथि )-२४. १४८, १५२, १६७, १७४

जनकल्याणिका ( राजकन्या )-४५. १७, ४९
जम्बुक ( ब्राह्मण )-२३. ५२
जम्बुद्वीप ( द्वीप ) ६. १८८
जम्बूरवण ( द्वीप )-४. ४५
जयकुञ्जर ( गज )-२३. १२, ३६
जयन्त ( राज्ञी )-३. ३१
जयप्रभा ( राज्ञी )-२. ३१, ३८, ४५, १३१
जयसेना ( गृहिणी )-१९. ४
जयसेना ( गृहपतिभार्या )-८२. २
जलसत्त्व ( राजा )-२०. २

जाली ( कुमार )-२३. २८
जाह्नवी ( नदी )-१६. ११
जिनर्षभ ( यक्ष )-४४. २४
जीमूतकेतु ( विद्याधर )-१०८. २, १४३, १६१, १६४
जीमूतवाहन ( कुमार )-१०८. ४, ७, १३, २४, ४२, ७५, ८८, १३०, १४५; १५७, १६४, १६९, १८३, १८५, १८८, १९०
जीवक ( कौमारभृत्य )-९. ३०
जीवशर्मा ( ब्राह्मण )-७२. २, ६१
जेत ( कुमार )-२१. ५५, ५७
जेतवन ( उद्यान )-१३. १४; १७. २; १९. २, १२३; २२. ४; ३३. २; ३५. २; ३६. २, ७५, ७७; ३७. २; ४१. २, ६; ४२. २; ४३. २, ६; ४५. २, ९; ४७. २; ४८. ८१; ६०. ११, १४; ७९. ३०; ८१. २; ८२. ३१; ८४. १३, १७, ४९, ५२; ८७. २९; ८९. २, २२, २६, ५२; ९२. २; ९३. २, ४२, ११०; ९५. १९; १००. २; १०२. २
जेता ( कुमार )-११. १३३
ज्ञातिपुत्र ( तीर्थ्य=महावीर )-१३. ५
ज्योतिष्क-२०. ४७
ज्योतिष्क ( कुमार )-९. ३७, ४४, ५१, ५२ ५५, ५७, ५८, ५९, ६०, ८४, ९५

डम्बर ( यक्ष )-५७. ९
डम्बर ( ग्राम )-५७. ९

तक्षवासी ( ब्राह्मण ? )-१७. ४७
तक्षशिला ( नगर )-५९. ५९, ६१, ७५, ८९, ९०, ९० (अ), १४०, १६४
तगरशिखी ( बुद्ध )-६३. ६३
तरलिका ( राज्ञी )-४०. १२०
तरलिका ( ब्राह्मणी )-७९. ४
ताम्राक्ष ( अजगर )-६. ७९
ताम्राटवी ( अरण्य )-६. ७८
तिक्तमुख ( वैद्य )-५०. १२४
तिष्य ( शाक्य )-२६. २४; ४५. ७
तिष्य ( गृहपति )-४०. ३८, १३०, १३५, १३९, १४०
तिष्यरक्षा ( राज्ञी )-५९. २२, ७७, १५६
तुष्टि ( राजा )-२८. ५८
त्रपुस ( वणिक् )-२५. ७९
त्रिशङ्कु ( राजा )-१७. ३६
त्रिशङ्कु ( पर्वत )-६. ८४
त्रिशङ्कु ( नदी )-६. ८६
त्रिशङ्कु ( कण्टक )-६. ८५

दण्ड ( अमात्य )-४०. ७०, ८३, १७२
दण्डिन् ( ब्राह्मण )-१७. ४६
दत्त ( गृहपति )-२१. २
दधीच ( मुनि )-४. ६१
दशरथ ( शाक्यराज )-२६. २०
दानव्रत ( गृहपति )-८९. ३६
दिवौकस ( यक्ष )-४. १८
दीपंकर ( बुद्ध )-८९. ७५
दीर्घदृष्टि ( वायस )-३०. ९, १४, ३३
दीर्घमति ( अमात्य )-६८. ८१
दुर्गत ( याचक )-४१. ७२, ८१, ८२, ८४, ९०
दुर्मति ( मन्त्री )-१०३. १०, २३
दुर्मुख ( मुनि )-४. ६२
दुष्प्रसह ( राजा )-३. ५७, ९२, ९६, १०३, ११८, १४९, १५१
दुःखमातृक ( =विरूढक )-११. ४८
देवदत्त ( शाक्य )-२२. ५१, ६५, ६६, ६८, ७०, ७३, ७८; २३. २, ५३; २४. ५३, ६०, ६१; २६. २५; २८. ११, १२, २१, ३३; ३०. २, ५०; ३१. ६९; ३२. २, ५३; ३८. २०; ४४. ४; ४५. २, ५४, ५५; ५५. ५६; ६६. २; ९७. २; १०२. १८; १०३. २३
देवसेन ( गृहपति )-४३. २
देवातिदेव ( बुद्धनाम )-२४. ३९
द्युतिमान् ( कुमार )-१०. १४९
द्रुम ( किन्नरराज )-६४. ७१, ११९, २५५
द्रोणा ( शाक्यकन्या )-२६. २३, २६
द्रोणोदन ( शाक्य )-२२. ६१, ६३; २६. २२, २४
द्वीप ( राजा )-८९. ७५, ९४, १०५

द्वीपवती ( नगर )-८९. ७५, ८६, ९२, ९३

धन ( राजा )-६४. ९, २२, २६, १३३
धन ( नाग )-६०. २
धनपालक ( गज )-२८. १०
धनवती ( वणिग्भार्या ) १४. २०, ९३. ११
धनवान् ( गृहपति )-५०. १२३
धनसंमत ( राजा )-१६. १९
धनाधिप ( = कुबेर )-७७. ५, १३
धनिक ( गृहपति )-४६. ४१; ९०. ३, ७, ११, १३, १६, १७, १८, २७
धर्मदूत ( अमात्य )-३५. ६१
धर्मबोधि ( उपासक )-८१. १०
धर्मरुचि ( भिक्षु )-८९. ४४, ४५, ४६, ४८, ४९, ५६, ५७, ५८, ६१, ७४, ११९, १८७
धर्मशील ( गृहपति )-८९. ६३, ६५, ७२, ७४
धारामुख ( यक्ष )-५६. २
धीर ( गृहपति )-४१. २
धूमनेत्र ( पर्वत )-६. ८८
धृतराष्ट्र ( महाराज, देव )-७७. ५, ६, १३

नगरोपम ( सूत्र )-१०६. २, २५
नट ( वणिक्पुत्र )-७१. १५
नटभट ( चैत्य )-७१. १६
नन्द ( गृहपति )-४०. १९१
नन्द ( नाग )-३३. ५, २३, २५; ३४. २; ५०. १६
नन्द ( ब्राह्मण )-१९. ९५
नन्द ( राजा )-१७. ३९
नन्द ( शाक्यकुमार )-१०. ४, ८, ९, १५, १८, २८, ३२, ३३, ६०, ६१, ६२, ६७, ६९, ७५, ८३, ८४, ८५, ८७, ९६, ९८, १००, ११०, ११६, ११७, ११८, १२२, १२६, १२८, १३०, १३३, १३९, १४०, १४१, १४९, १५०, १५१; २४. ५४; २६. २३; ८५. २६
नन्दबला ( कन्या )-२५. ४
नन्दा ( कन्या )-२५. ४
नन्दा ( गृहिणी )-८७. ३२
नलिनी (राजकन्या)-६५. ९, १२, २०, २२, ८०
नारद ( मुनि )-२४. १९, ४०, ४८, ५०
निमि ( राजा )-१७. ३८
निरञ्जना ( नदी )-२५. ३२
निरञ्जनी ( नदी )-२५. २८
निराजना ( नदी )-२५. १२
निशिता ( सार्थवाहस्त्री )-९५. ३
निष्ठुर ( कुमार )-१९. ९६
नील ( यक्ष )-६. १३१
नीलग्रीव ( राक्षस )-६. ७४
नीलोद ( समुद्र )-६. ७३, ७४
नूपुर ( शाक्यराज )-२६. १९
न्यग्रोध ( उद्यान )-२२. ६२; ६६. २
न्यग्रोधकल्प ( ब्राह्मण )-६३. २, २२, २८, ४९
न्यग्रोधाराम ( उद्यान )-७. २; १०. २; ६२. २; ६५. २

पञ्चशिख ( गन्धर्व )-७८. १६
पञ्चाल ( देश )-६६. ४
पण्डित ( कुमार )-४१. ३, २०, २३, ३०, ३६, ३७, ५७, ६५, ९०, ९१
पतङ्गा ( नदी )-६४. २७६
पदक ( चार )-६६. ३४, ३६, ४१
पद्मक ( व्याध )-६४. ४८
पद्मक ( कुमार )-८७. २, २१, २३, २८, ३०, ३६, ३७, ३९
पद्मक ( राजा )-९९. ४
पद्मचूड ( कुमार )-३. ५३
पद्ममुख ( कुमार )-१४. ४४, ४५, ६३
पद्माकर ( कोषागारपति )-३५. ६०
पद्मावती ( राज्ञी )-३. ५२, ७२, ८७, ९०, १२६, १६९, १८५; ५९. ५
पद्मावती ( मुनिकन्या )-६८. २७, ६२, ६९, ९५, १०९
पद्मोत्तर ( बुद्ध )-८४. ५५
पर्णाद ( मुनि )-८९. ९१
पर्वतद्वीप ( द्वीप )-१२. ३४
पल ( चाण्डाल )-२. ११२
पल्लविका ( मालाकारस्त्री )-९०. २१
पाटल ( ग्राम )-५७. १३
पाटला ( मालाकारस्त्री )-९०. २१

पाटलिपुत्र ( नगर )-३१. ३; ५९. २, ११४; ६९. २; ७३. २; ८१. ५
पाण्डुकम्बल ( शिलातल )-१४. २
पार्वती-३. ३१
पाषाण ( पर्वत )-५६. ५, ८; ५७. ५
पिङ्गलक ( व्याध )-६६. ५३
पिप्पलायन ( कुमार )-६३. ५, ३१, ३९, ४८
पिलन्दवत्स ( भिक्षु )-९३. ७१
पिशुन ( ब्राह्मण )-१०५. ४
पुण्ड्रवर्धन ( नगर )-९३. ४, १०, ४४
पुण्यबल ( राजा )-५८. ३, ३२
पुण्यमित्र ( गृहपति )-९४. २
पुण्यवती ( नगर )-५८. ४
पुण्यसेन ( राजा )-३१. ६, ४९, ६८
पुण्यसेन ( वणिक् )-८१. ९, २१, २६
पुरंदर ( राजा )-३१. ३
पुरंदर (इन्द्र )-८०. २
पुष्कर ( पुरोहित )-६४. १३२, १३८, १६७
पुष्करावती ( नगर )-३२. ३४, ४०
पुष्कलावती ( नगर )-५८. २
पुष्पदेव ( राजा )-८३. ९
पुष्पसेन ( मालाकार )-८७. ३७
पुष्पिला ( राक्षसी )-५४. २
पुष्य ( =अनाथपिण्डद )-२१. ८०
पुष्य ( गृहपति )-४०. ३८, १३०, १३५, १३९, १४०
पूर्णक ( कुमार )-६२. ८८
पूरण ( तीर्थ्य )-१३. ५
पूर्ण ( दासीपुत्र )-३६. ८, ९, ११, १३, २५, २७, ४९, ५६, ५८, ५९, ६०, ६३, ६४, ६५, ६६, ७७, ७८, ८१, ८३
पूर्ण ( सुपूर्ण मैत्रायणीपुत्र–भिक्षु )-९३. ४८, ६६
पूर्णमुख ( राजहंस )-२८. ४९, ५०, ५७
पूर्वविदेह ( द्वीप )-४. ४८
पोतल ( राजा )-२७. ३, २१
पोतल ( गृहपति )-५७. १३
पौलोमी ( शची )-३. ३१; ६२. ३४
प्रभास ( राजा )-१. ७; १००. ५, १६
प्रभावती ( नगरी )-१. ४; १००. ५
प्रशाख ( कुमार )-३२. ४
प्रसरा ( ओषधि )-६. १३९
प्रसेनजित् ( राजा )-११. २०; १३. १५; १७. १२, १७; ३४. ३; ४१. ३८; ४४. ६२; ४६. ९, २६, ३१; ४८. ८, ७६; ६१. १७; १००. २
प्रियपिण्ड ( कुमार ) १०३. ८, २३
प्रियसेन ( वणिक् ) ६. ३५
प्रियंकर ( यक्षिणीपुत्र ) १२. ३०, ३४, ४८

बदरद्वीप ( द्वीप ) ६. ६३, ६५, ९५, १०७, ११३, १२७, १८७
बन्धुमती ( नगर )-४. ११४; ९. ८६; २७. ५४; ५०. ११७
बन्धुमान् ( राजा )-९ ८६; ४८. ८८
बल ( नाग )-४६. ५
बल ( मल्ल )-५०. १३८
बलसेन ( गृहपति )-१९. ३
बलि ( राजा )-४. ६१
बहुपुत्र ( चैत्य )-६३. ६०
बालसरस्वती ( कुमारी )-१०७. ८
बालाह ( अश्व )-६. १८९
बालोक्ष ( देश )-५७. ६
बालोक्षीय ( स्तूप )-५७. ८
बिम्बिसार ( राज )-९. २, २७; १२. २; १३. १३; २०. ३४, ३६, ६३, ६७, ७०, ९४, ९७; २७. १६; २८. ३; ४०. ३, १०, २४, ३५, ४९, ५०, ५८, ६३; ४४. ३, २४, ६३, ६५; ८८. २; १०२. ३
बुद्धरक्षित ( गृहपति ) –६७. २
बृहस्पति ( =अनाथपिण्डद )-२१. ८१
ब्रह्मदत्त ( राजा )-६. ३४, १९०; ८. ४४; १४. ५०, ५४; २२. ८२ १००; २८. ५०; २९. ३, ४३; ३७. २३; ५२. ६, ६४, ६९, ७०, ७१; ५६. ३; ६२. ९६; ६८. ९, ४८, १०२; ८०. ७६; ८५. २५; ८६. ३, १७; ८८. ४६; ९६. ९; १०१. १२; १०७. ३
ब्रह्ममती ( पुष्करिणी )-२८. ५०
ब्रह्मरथ ( पुरोहित )-३. ८१
ब्रह्मावती ( राज्ञी )-३७. २४
ब्रह्मोत्तर ( नगर-प्रासाद )-९२.३५

भट (वणिक्पुत्र)–७१. १५
भद्र (हस्ती)–९६. ११
भद्रक (शाक्य)–२२. ६१, ६४, ६९, ७३, ७६
भद्रगिरि (गज)–३. ३४, ८२, ९२
भद्रशिला (नगर)–५. २, ३१
भद्रा (गणिका)–२२. ८०; ८९, ५०. ७२, ७६ ७५, ८२, ८६, ९६, १०१, ११२
भद्रा (ब्राह्मणकन्या)–६३. २०, ३९, ४४, ५०, ५२, ५३, ५४
भद्रा (गृहिणी)–६३. ६१
भद्रा (आभीरी)–८३. ३०
भद्रिक (शाक्य)–२६. २४
भरद्वाज (भिक्षु)–५०. ६२, ७०
भल्लिक (वणिक्)–२५. ७९
भद्राणि (शाक्य)–२६. २६
भव (वणिक)–३६. ३
भवदत्त (=अनाथपिण्डद)–२१. ८१
भवनन्दी (कुमार)–३६. ४
भवभद्र (कुमार)–३६. ४
भवभूति (मुनि)–३. ३५
भववर्मा (गृहपति)–८२. २, ४, ९
भविल (कुमार)–३६. ४, ५०, ५५; ६४
भार्गव (मुनि)–३. ५७, १६८
भिरुक (अमात्य)–४०. ६, ६९, ११२, १५३, १६५, १७०
भिरुक (नगर)–४०. १७०, १९९
भोक्कानक (नगर)–४०. १७९

मकरिका (दासी)–५०. ७९
मगध (देश)–६. ४
मघ (वणिक्)–६. ९४, ९९, १०७, ११६, ११९
मठर (ब्राह्मण)–५०. ११८
मणिचूड (कुमार)–३. २९, ३२, १२१, १२८
मति (ब्राह्मण)–८९. ८०, ९३, ११६, ११८, ११९
मतिघोष (राजा)–४५. १७, ३२
मथुरा (नगर)–७१. २, १३, १५; ७२. २, ३९; ८७. ७
मदलेखा (कन्या)–४०. १९१
मधुस्कन्ध (ब्राह्मण)–२१. ७, ३६
मधुरस्वर (कुमार)–८४. ५, १९. २४, ३०, ३८, ४५
मधूदक (नगर)–५२. ४
मनस (ब्राह्मण)–१९. ७५
मनोरमा (राजकन्या)–३१. ६, ५०
मनोहरा (किन्नरकन्या)–६४. ७१, ७६, ८४, ९८, १५९, १६८, १८७, १९२, १९८, २२६, २३२, २८६, २९२, २९३, २९६, ३१५, ३२९, ३३०, ३३२, ३३५
मन्त्रबला (चाण्डाली)–८७. १९, २१
मन्दर (हस्ती)–१०२. १३
मरीचि-च (मुनि)–३. ८४, ११३, १६८, १६९, १७६
मर्कट (ह्रद)–९०. २
मलयमञ्जरी–१९. ७६
मलय (पर्वत)–१०८. ६, १२
मलयवती (सिद्धकन्या)–१०८. ३९, ५८, ७५, १५०, १६५
मल्लाः (क्षत्रिय)–१५. २, १९, २८; ९८. २, ६, ८, १३, १४, १५; ८०. ४०
मल्लाः (गण)–९१. २
मल्लिका (दासी)–३६. ६
मल्लिका (चाण्डाली)–५७. १०
महाकाश्यप (बुद्धशिष्य)–१७. ३; ९३. ६२
महाकाश्यप (मुनि)–६३. ५९, ६२, ६५
महाचन्द्र (अमात्य)–५. १५, ५७
महाधन (वणिक्)–७. ८१; १४. २०
महाधन (गृहपति)–२१. ८; २८. ९
महान् (ग्रामणी)–२०. ४९
महान् (शाक्यपुत्र)–७. ५; ११. २, ३२; २२. ६३; २४. १५७, १६५; २६. २४; ४४. ६२
महाप्रणाद (राजा)–१६. ७
महामति (कुमार)–१८. १४
महामाया (=मायादेवी)–२४. ६
महामौद्गल्यायन (बुद्धशिष्य)–११. १०५
महाराजकायिक (देव)–४. ७३
महाश्वास (नाग)–४६. ५; ७७. १०
महासंमत (शाक्यराज)–२६. १०
महीधर (अमात्य)–५. १७, ५७

महेन्द्रवती ( नगर )–५४. ४
महेन्द्रसेन (राजा)–३०. ३; ५४. ५; ६४. १३, २५; ७९. ३४, ४२, ४४, ४७, ४९, ६१
महेशा ( देवता )–६. ५७, १५०
महेश्वर ( यक्षपति )–३६. ५३
मस्करी ( तीर्थ्य )–१३. ५
मागध ( ग्राम )–६३. २
माठर ( विद्याधरमुनि )–६६. ७५
माद्री ( राज्ञी )–२३. २८, ३०, ३४, ४४
माध्यन्तिक ( भिक्षु )–७०. २
मानव ( ब्राह्मण )–१४. ८०
मानव ( गृहपति )–८७. २
मायावन ( उद्यान )–७७. २
मालतिका ( दासी )–१०८. ३४
मालती ( उद्यानपाली )–२०. ९९
मालिक ( शाक्य )–२६. २५
मालिका ( दासी )–११. २, २२, ४७, ५९, ६०
मालाधर ( देव )–४. ७२
मांधाता ( राजा )–४. १५, ५६, ९६, ११७; १७. २८; २६. १२
मिटिस्वर ( सुपर्ण )–७७. १०
मित्र ( गृहपति )–८७. ३१, ३६
मित्रावसु ( सिद्ध )–१०८. ३६, ४१
मिथिला ( नगर )–१७. ३८; २०. २; ८३. ९
मिलिन्द्र ( राजा )–५७. १५
मुक्तालता ( राजकन्या )–७. ४८, ५९, ८०, ८३
मुग्ध ( गृहपतिपुत्र )–५०. ३६
मुग्ध ( वणिकुमार )–५९. १६७
मुद्गर ( अमात्य )–४०. ७०, ८३, १७२
मुद्गरापत्य ( =मौद्गल्यायनभिक्षु )–८६. २२
मूकपङ्गु ( उदककुमार )–३७. ३२
मूलिक ( ब्राह्मण )–१०३. २१
मृगजा ( शाक्यकन्या ) –२४. ११३
मृणाल ( विट )–५०. ७३, ८५, ९७, १००, १०१, १०२, ११४, ११५
मेघ ( प्रत्यन्तनृप ) ६४. १४६, १५०
मेनका ( अप्सरस् )–६६. ८५
मेरु ( राजा )–१०३. ५, ११, १७
मैत्र ( ब्राह्मण )–१०. १४४
मैत्र ( गृहपति )–९२. १०
मैत्रकन्यक ( वणिक् )–९२. १२, ४१, ४८, ४९, ५६, ६३
मैत्रेय ( पुरोहित )–१६. १४, १५, १६, २९
मैत्रेय ( बुद्ध )–२१. ८३
मौद्गल्य ( =मौद्गल्यायनभिक्षु )–२२. ५२; ७७. १८; ९३. ६४
मौद्गल्यायन ( बुद्धशिष्य )–१८. २५; २१. १७; २७. ८; ३३. ८, १२; ३४, ५; ३६. ७६; ४६. २०, २२, २४; ५०. १२, १५, २२
मौर्यवंश ५९. ९० ( क्ष )

यन्त्र ( पर्वत )–६४. २७२
यशस् ( स्थविरभिक्षु )–६९. ४
यशस्वी ( कुमार )–६२. १०२
यशःकेसर ( सिंह )–१०२. १३
यशोद ( कुमार )–६२. ४५, ६३, ६४, ७७, ८८, ८९, ९१, ९४, १०१, १०४
यशोधरा ( बोधिसत्त्वपत्नी )–२४. ५६, १२४, १२९, १४४; ६४. ३, ७, ३३५; ६५. ३, ७, ८०; ६८. ३, ८, १०९; ८३. ७, ३३; ८९. ११९
यशोमित्र ( कुमार )–९४. २, १५, १६

रक्ताक्ष ( राक्षस )–६. ७३
रक्ताक्ष ( पण्डित )–२१. ५९, ६१, ६३, ६४, ६५, ६७
रक्षःसंकट ( पर्वत )–६. ७७
रघु ( =अनाथपिण्डद )–२१. ८०
रतिसोम ( राजा )–४५. १४
रत्नगर्भ ( उद्यान )–५. ६७
रत्नच्छद ( मयूर )–८. ४७
रत्नद्वीप ( नगर )–६. ४८, ५१, ११३
रत्नद्वीप ( द्वीप )–४७. १५
रत्नपर्वत ( पर्वत )–६. १२३
रत्नवती ( वणिक्पत्नी )–७. ८१
रमणक ( नगर )–९२. २४
रत्नशिखी ( बुद्ध )–१६. २२, २७, २९
रविप्रभ ( प्रत्येकबुद्ध )–४२. १७
राक्षसद्वीप ( द्वीप )–४७. २९
राजगृह ( नगर )–८, २; ९. २; ११. ६१; १२. २; १३. २; १८. २; २०. ३४,

९९; २१. ७, ८; २७. २; २८. २; ४०. २; ४४. २; ८८. २; ९५. २; ९७. २; ९८. २
राधा ( दासी )–३५. ५५
रामा ( राज्ञी )–६४. ११
राहुल (बोधिसत्त्वपुत्र )–२५. ७३; २६. २६; ८३. ४, ३५
राहुलक ( शाक्य-भिक्षु )–९३. ७३; ६८. ४
रुक्मवती ( पौराङ्गना )–५१. ६
रुक्मवान् ( =रुक्मवती )–५१. १८
रैवतक ( भिक्षु )–१०५. २, ६, ७, १६, ३१, ४१
रोदिनी ( नदी )–६४. २७६
रो–रौरुक ( नगर )–४०. ४, १००
रोहिका ( नदी )–२४. ५८
रोहिका–ता ( दासी )–७. ३०, ८०
रोहिणी ( कुमारी )–१०३. ५
रोहित ( महामत्स्य )–९९. ७, ९, १०
रोहितक ( नगर )–६. ९३, ९८
रौद्राक्ष ( ब्राह्मण )–२. ११०; ५. २६

लक्षणा ( राज्ञी )–६६. ५, ७, १०
ललिता ( गृहपतिभार्या )–६२. ४३
लावण्यवती ( राजकन्या ) –८८. ५०, ६४, ६७
लिखित ( ऋषि )–५०. १८, १९, २१, २२
लुम्बिनी ( उद्यान )–२४. १२

वज्रक ( पर्वत )–६४. २६७
वज्रचण्ड ( राजा )–१०३. ४
वज्रपाणि ( यक्ष )–५६. २४
वज्रवती ( नगर )–१०३. ४
वज्रा ( माणविका–कन्या )–५०. २७
वदान्य ( कुमार )–९०. ४
वर्षकार ( ब्राह्मण )–४०. १५
वर्षाकारा ( राज्ञी )–११. ३७, ५९, ६१
वल्कलायन ( ऋषि )–६४. ४७, २०३, २४९
वल्गुमती ( नदी )–३९. २
वसिष्ठ ( अर्हत् )–५०. ६१, ६४, ६७, ६८
वसुंधरा ( गृहिणी )–९२. १०
वाकुड ( मण्डल )–११. ११९
वादिसिंह ( ब्राह्मण ) –३९. २६, ३८, ४१
वायुवेग ( पर्वत )–६४. २६३
वारा ( नदी )–३७. ७३; ६२. ७३, ८३, ९५; ९९. १०
वाराणसी ( नगर )–६. ३१, १९०; ७. ८१; ८. ४४; १४. २०, ४८, ४९, ८०, ८८, १११; १९. १३२; २४. ५०; २५. २; २८. ५०, ५८; २९. ३; ३०. ३; ३३. २२; ३५. ५८; ३७. २३, ३७; ३९. २५; ४१. ७०; ४३. १६; ४४. ५०; ४६. ४१; ५०. १८, ७१, ७२; ५३. ३; ६२. २; ६५. ६८; ६८. ९९; ७९. ३४; ८०. ६८; ८५. २५; ८६. ३; ८८. ४६; ९०. २०; ९२. १०; ९३. ८४; ९६. ९; ९९. ४; १०३. २१; १०५. ३५; १०७. ३
वासव ( राजा )–१६. १९. २२. २५. २९; ८९. ७८, ७९, ८२, १०५, १०६
वासवग्राम ( नगर )–१९. ३, ५३, ७२, ८६ ९५,
वासवदत्ता ( गणिका )–७२. ६
वासुकि ( नाग )–१. १९
वाहीक ( मुनि )–३. ८४
विजयन्त ( राजा )–८०. ८८, ९८
विदुर ( राजा )–७६. ६, १०
विदेह ( देश )–२०. २; ८३. ९
विद्याधर ( मन्त्रविशारद )–६४. ३९
विन्ध्य ( पर्वत )–१. ३२
विपश्यी ( अतीतबुद्ध )–४. ११५; ९. ८७
विपश्यी ( बुद्ध )–१०. १४३; २१. ७९; २७. ५४; ४८. ८८; ५०. ११७
विमल ( कुमार )–६२. ८८
विरूढ ( महाराजदेव )–७७. ६, १३
विरूढक ( कुमार )–११. ४७, ४९, ६०, ९२, ९७, १०८, १२३, १३१, १३३, १३४; १५१
विरूढक ( शाक्यराज )–२६. १४
विरूपाक्ष ( महाराजदेव )–७७. ५, १३
विशाख ( कुमार )–३२. ४, ९, १५, ५३
विशाला ( नगर )–२०. १७, ३७, ४९, ८०
विश्वभू ( बुद्ध )–२१. ८०
विश्वंतर ( कुमार )–२३. ५, ५०, ५३
विश्वा ( नगर )–२३. ३

विश्वामित्र ( मुनि )–५. २४

विश्वामित्र ( राजा )–२३. ४९, ५०

विश्वामित्र ( नगर )–२३. ४९

विश्वावसु ( सिद्ध )–१०८. ३८, ५८, ६३

वृजि ( देश )–९०. २

वृषभदत्त ( कुमार )–९३. ४

वेणुमालिनी ( नदी )–३०. ११

वेणुवन ( उद्यान )–९. ५; १२. २५; १३. २; १८. २; २७. २, ३५; २८. २, ७; ४०. ६३; ६०. ३०; ९५. २; ९७. २; ९८. २

वेत्रा ( नदी )–६४. २७८

वेलाम ( ब्राह्मण )–१७. ३०; ३४. १६

वैजयन्त ( प्रासाद )–४. ७७

वैरम्भ ( वायु )–६. ७०

वैरम्भ ( पर्वत )–६. ७८

वैशालिकाः–२४. ५२

वैशाली ( शाक्य )–२६. २६

वैशाली ( नगर )–३९. २; ६३. २०; ९०. २, ५, १६

शङ्ख ( सार्थवाहपुत्र )–९५. ४

शङ्ख ( ऋषि )–५०. १८, १९, २०, २२

शङ्ख ( राजा )–१६. १३, १७, १८, २८, २९

शङ्खचूड ( नाग )–१०८. ११६, १२१, १२४, १५६, १६०, १८८

शङ्खनाभ ( राक्षस )–६. ७१

शङ्खनाभि ( औषधि )–६. ७२

शङ्खपाल ( नाग )–१०८. १११

शङ्खमुख ( श्वा )–६६. ५६, ६६, ७७

शशिप्रभा ( शाक्यपत्नी )–७. ७, २७

शशिलेखा ( वेश्या )–८७. ८

शंपाक ( शाक्य )–११. १११, ११५

शाक्य ( क्षत्रियवंश )–२६. ४

शाक्यपुर ( =कपिलवस्तु )–२२. २

शाक्यमुनि ( बुद्ध )–८९. ११४; ९३. ९६

शाक्यवर्धन ( यक्ष )–२४. २४

शाख ( कुमार )–३२. ४

शाणवासी ( भिक्षु )–७१. २, ४, ५, ६, १२; ७२. ३, ४०

शाण्डिल्य ( मुनि )–६८. १५, २७, ६७

शारिपुत्र ( बुद्धशिष्य )–१८. ४, ११, १२, १३, २४; २१. १७, ५४, ६०, ६२, ६३, ६४, ६५, ६६, ६९, ७१; ४१. ४, ४७, ६२, ६७; ५०. ६, ७, ११, १३, १४, १५, १७, २२; ६७. ३, ५, ७; ७७. १८, ८६. २२; ९३. ६३; १०२. १८; १०७. २८

शारियान ( शाक्य )–४४. ६१

शिखण्डी ( कुमार )–४०. ५, ६७, ८१, ११८

शिखिघोषा ( नगर )–८५. ६

शिखी ( बुद्ध )–२१. ८०; ६२. ९५

शिबि ( राजा )–२. १०९; ८५. ६, ४०; ९१. ६. ३२

शिरीषिका ( ब्राह्मणी )–११. ४१

शिववती ( नगर )–९१. ६

शीघ्रग ( कुमार )–१४. ८४, ८६, ९८, १०४, १४४

शीतवन ( श्मशान )–९. २६

शीलवती ( गृहिणी )–९०. ४

शुक्ला ( शाक्यकन्या )–२६. २३, २५

शुक्लोदन ( शाक्य )–२२. ६०; २६. २२, २४

शुद्धा ( शाक्यकन्या )–२६. २३, २५

शुद्धोदन ( राजा )–७. ४, ११; २२, २, ५८, ६१, ६२; २४. २, २३, ६३; २५. ६८; २६. २२, २३; ८०. ४; ८३. २; १०१. २

शुद्धोदन ( गृहपति )–१०७. ३, २७

शूर्पसम ( प्रत्येकबुद्ध )–१८. ७

शूर्पार-क ( नगर )–३६. ३, ६४

शूर्पिका ( ब्राह्मणी )–१८. ६

शैल ( मुनि )–७७. १६, १९

शैलविहार ( विहार )–१०५. २

शैला ( भिक्षुणी )–४०. ३५, ४०, १४५, १६५, १६७

शोभावती ( नगर )–७८. २८

श्यामक ( अमात्यपुत्र )–४०. १६४, १७८

श्यामाक ( कुमार )–१०१. ८, १३, ३७

श्यामावती ( अमात्यकन्या )–४०. १६५

श्रावस्ती ( नगर )–६. ३; ७. ५०; १३. १४; १७. २; १९. २, १२३; २१, २, ५४; ३५. २, ३२, ३९, ४९; ३६. २, ३२,

३७; ४१. २; ४२. २; ४३. २; ४५. २; ४६. २; ४७. २; ४८. २; ५०. २; ६०. ११; ६१. २; ६७. २; ७५. २; ७६. २; ७९. २; ८१. २; ८२. २; ८४. २, २५; ८७. २, २८; ८९. २, २५, ३२; ९२. २; ९३. २; ९४. २; ९९. २; १०२. २; १०४. २
श्रीगुप्त ( गृहपति )-८. २, ११, १४, १५, ३६, ३८, ४२, ७५, ७६, ७७, ७८
श्रीमान् ( गृहपतिपुत्र )-५०. १२३
श्रीमान् ( सार्थवाह )-९३. ४
श्रीसेन ( राजा )-२. ३, ३८
श्रुतवर ( ब्राह्मण )-११. ४१
श्रुतवर्मा ( गृहपति )-८२. २
श्रोणकोटि ( भिक्षु )-९३. ७२
श्रोणकोटिकर्ण ( कुमार )-१९. ६, ३९, ४४, ५१, ५२, ८७, ९४, १०७, १२४, १३१, १३७
श्रोण-कोटि-विंश ( कुमार )-२७. ६, १२, १८, १९, २१, ३०, ३६, ३९, ४८, ५३, ५८
श्रोणापरान्तक ( देश )-३६. ४४, ६१
श्लक्ष्ण ( पर्वत )-६. ८७
श्वास ( नाग )-४६. ५

सत्ययाचन ( चैत्य )-६२. ९
सत्यरत ( राजा )-६६. ४
सत्यवती ( गृहिणी )-९. ४; ९०. ४
सत्यव्रत ( ब्राह्मण )-५१. २८, ३६, ५०
सत्यसेन ( अमात्य )-४. २९
सत्त्ववर ( =रुक्मवती, रुक्मवान् )-५१. २०
सत्त्वौषध ( कुमार )-५४. ७, २१
सदामत्त ( देव )-४. ७३
सदामत्त ( नगर )-९२. ३१
सन्दरक ( वणिक्पुत्र )-४४. ५५
सर्वविभु ( अतीतबुद्ध )-४. ११२
सर्वंदद ( राजा )-५५. ५, ५६
सर्वार्थसिद्ध ( बुद्धनाम )-२४. २३; २५. १७
सर्वार्थसिद्ध ( नाग-कुमार )-४७. ४, ३४, ६४
सर्वावती ( नगर )-५५. ४
सहस्रयोधी ( योद्धा )-८९. ६८, ७१, ७४
संकाश्य ( नगर )-१४. ७
संघरक्षित ( कुमार )-६७. ४, ७, १२, १४; १९, ६१, ६५, ७१, ७४
संजय ( राजा )-२३. ४
संजयी ( तीर्थ्य )-१३. ५
संधिदत्त ( सार्थवाहपुत्र )-९५. ४
संपदी ( राजा )-७४. ८
संयात ( हस्त्यारोह )-१. २०, २१, २४, २७, ३५, ३९, ४६, ४९, ५४, ५६; १००. ७, १०, ११
साकेत ( नगर )-३. २
सागर ( नाग )-४७. ४, १९
साहञ्जनी ( तपोवन )-६५. १६
सिद्धार्थ ( राजा )-४७. ३
सिंह ( अमात्यपुत्र )-२०. १०, २३, ३०
सिंहलद्वीप ( द्वीप )-७. ४७, ५०, ६३
सिंहहनु ( शाक्यराज )-२६. २१
सुख ( हंस )-२८. ४९
सुजात ( कुमार )-२१. ९
सुदत्त (गृहपति)-३४. १०, १३, २६, २७, २८
सुदत्त ( =अनाथपिण्डद )-२१. २
सुदत्त ( शाक्य )-४५. ९
सुदर्शन ( नगर )-४. ७१
सुदर्शन ( राजा )-१७. २२
सुदास ( चण्डाल )-६६. ५५
सुधन ( =अनाथपिण्डद )-२१. ८३; ३५. ४, १३, ४७, ५०, ५२, ५७, ६४
सुधन ( नाग )-६०. ४
सुधन ( कुमार ) -६४. ११, ९५, ९९, १८७, २००, २१३, ३३४, ३३५
सुधर्मा ( राज्ञी )-६६. ६, ९, १२, १४, ३०, ५१
सुधर्मा ( देवसभा )-४. ७६
सुधा ( ओषधि )-६४. २१७, २६०
सुधाशैल ( पर्वत )-६. ९२
सुधीः ( उपासक )-८०. ८४
सुधीर ( गृहपति )-८४. २, ९, ५२, ५६
सुनन्दा ( ब्राह्मणी )-१९. ९५; ८७. ३२
सुनेत्रा ( गृहिणी )-८४. २
सुन्दर-क ( वणिक्पुत्र )-४४. ५२; ८९. ११७
सुन्दरक ( दरिद्र )-२२. ८०, ८९
सुन्दरक ( युवा )-५०. ९८

सुन्दरक (भिक्षु)-९४. ८.
सुन्दरी (नन्दभार्या)-१०. ७, १६, ३८, ५४, ५७, ६०, ६७, ७१, ८३, ८७, १००, १०५, ११९, १२०, १२७, १३७; ५०. १७
सुन्दरी (विटभार्या)-८२. ६, १९, २२
सुन्दरी (राजकन्या)-८९. ८५, ९६, ९९, १११, ११९
सुन्धान (गृहपति)-३५. ५८, ६३
सुप्रबुद्ध (गृहपति)-४८. २; ६२. २, ३७, ३९, ४१, ८२
सुप्रबुद्ध (वणिक्)-५७. ६, ७
सुप्रभ (सेवक)-६२. ९६
सुप्रबुद्ध (शाक्य)-२६. २५
सुप्रिय (वणिक्)-६. ३६, ९७, १००, १०३, १०६, ११४, १२१, १४९, १५६, १५९, १९३
सुप्रिय (गन्धर्वराज)-८०. २, ४, १२, १३, १४, २१, २४, २६, ८३, ८६, ८७
सुबन्धु (ब्राह्मण)-१०१. ८
सुबन्धु (नर्मसुहृत्)-१०८. ४८, ५९
सुबाहु (कुमार)-६२. ८८
सुभट (विट)-८२. ६, १०
सुभद्र (गृहपति)-९. २, ९, १२, १३, २७, ३३, ३९, ४४
सुभद्र (यति)-८०. ८, ११, १६, २१, २२, ३०, ३५, ४३, ४७, ५०, ५१, ५२, ६०, ६१, ७२, ७४, ७७, ८२, ८७
सुभाषितगवेषी (राजा)-५३. ३, ५७
सुमति (अमात्य)-५३. ८
सुमति (देवपुत्र)-६२. ३५, ३७, १००
सुमति (ब्राह्मण)-८९. ३२, ८०, ८२, ८४, ८८, ९३, ९७, ९९, १०८, ११२, ११४, ११७, ११८, ११९
सुमागधा (कुमारी)-९३. ३, ८, ९, १२, १६, ४३, ४८, ५५, ५८, ७८, ८०, ८१, ८२, ८३, १०९
सुमुख (पक्षी)-१४. ३८, ४४
सुमेरु (पर्वत)-४. ५०
सुरवती (नगर)-४०. १७५
सुरूपा (ब्राह्मणी)-६३. ३
सुरूपा (हस्तिपालस्त्री)-८८. ४
सुवर्णपार्श्व (मृग)-३०. ५, १३, ५०
सुवर्णभास (मयूर)-८. ४५
सुव्रत (मुनि)-१०४. ७, २६
सूर्य (कुमार)-८३. ९, ११, १२, २२, २९
सेन (ग्रामणी)-२५. ४
सेनायनी (ग्राम)-२५. ३
सोज्जुम्बा (गोपकन्या)-१४. ६१, १०५, ११७, १२२, १२६, १२७, १३४, १४२
सौर्यपथ (रथ)-२३. १२
सौभाषणिक (रत्न)-६. १६५
स्थाविराः शैलगाथाः-३६. ३३
स्वस्तिक (ब्राह्मण)-६१. २

हरिणी (आभीरकन्या)-८३. ३०
हरिदत्त (पुरोहित)-८८. ४६
हरिद्रा(हा)यण (पुरोहित)-८८. ४७, ७३
हरिशिख (पुरोहित)-८८. ४७, ५०, ६३, ७३
हस्तक (कुमार)-४८. ३, ९६
हस्तिनापुर (नगर)-६४. ९, २४, ३९
हंस (कुमार)-१०४. २, १८, २६
हारीतिका (यक्षिणी)-१२. २४, ३९
हासिनी (नदी)-६४. २७७
हिङ्गुमर्दन (नगर)-५६. २
हितैषी (कुमार)-८५. १६, २३
हिमवान् (पर्वत)-६४. २६२
हिरण्यपाणि (कुमार)-४३. ३, १९, २१
हिरण्यवर्मा (राजा)-५२. २०
हिरुक (अमात्य)-४०. ६, ६९, ११२, १५३, १६४, १७०
हिरुक (नगर)-४०. १७०, १९९
हेतूत्तम (बुद्ध)-८१. १०, १२, १४, १५, २५, २९
हेमचूड (राजा)-३. ५
हेमप्रद (= अनाथपिण्डद)-२१. ८४

